1888/2

Bruhārnyakopanishad-
Kandartha

" Raghavendrayati "

84.300+01
बृ 431

(17)

॥ श्रीराघवेंद्रयतिकृतबृहदारण्यकोपनिषत्खंडार्थः प्रारभ्यते ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ कल्याणगुणपूर्णाय दोषदूराय विष्णवे । नमः श्री प्राणनाथाय भक्ताभीष्टप्रदायिने ॥ प्रणम्य श्रीमदानंदतीर्थादिगुरुशेखरान् । काण्वोपनिषदोर्थानां संग्रहः क्रियते मया ॥ अस्या उपनिषदो ब्रह्मसूर्ययाज्ञवल्क्यकण्वाः ऋमादृषयः । लक्ष्मीशो देवता । वाक्यरूपत्वान्न च्छंदोन्वेषणं । अस्या उपनिषदोध्याया

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐउषावाअश्वस्य मेध्यस्यशिरः सूर्यश्चक्षुर्वातःप्राणो व्यात्तमग्निर्वैश्वानरः संवत्सरआत्माऽश्वस्यमेध्यस्य द्यौःपृष्ठ मंतरिक्षमुदरं पृथिवीपाजस्यं दिशः पार्श्वे अवांतरदिशःप(र्शव)रिशव ऋतवोंऽगानि मासाश्चा र्धमासाश्चपर्वाण्यहोरात्राणिप्रतिष्ठा नक्षत्राण्यस्थीनि नभोमांसान्युवध्यंसिकताः सिंध वोगुदा यकृच्चक्लोमानश्चपर्वता ओषधयश्चवनस्पतयश्चलोमान्युद्यन्पूर्वार्धो निम्लोचन्जघनार्धो यद्विजृंभतेतद्विद्योतते यद्विधूनुतेतत्स्तनयति यन्मेहतितद्वर्षति वागेवास्यवाक् ॥ १ ॥

ष्टात्मकत्वेपि पूर्वाध्यायद्वयस्य विद्याधिकारार्थं अश्वमेधकर्मनिरूपणपरत्वेन तद्व्याख्याय कर्मणा शुद्धांतःकरणस्य ब्रह्मस्वरूपं निरूपयितुं प्रवृत्तं तृतीयाध्यायादिग्रंथसंदर्भं व्याचख्यौ भगवान्भाष्यकारः । तथाहि । आदौ पूर्वप्रकृताश्वमेधयागीयाश्वनिष्ठां ब्रह्मविद्यामाह । उषा वा इत्यादिना खंडद्वयेन । यागीयाश्वो हि उच्चैःश्रवाः तत्राश्वरूपो ब्रह्मा तत्र च तद्रूपो हरिः सन्निहितः ।

तत्र सन्निहितयोरश्वरूपयोर्ब्रह्मविष्ण्वोरंगेषु जगदाश्रित्यास्तीति शिरःप्रभृत्युत्तमांगक्रमेणाह ॥ उषा वा इति । मेध्यस्य मेधशब्दितयागार्हस्य अश्वस्य तत्र संनिहिताश्वरूपब्रह्मगतस्याश्वरूपस्याश्वनाम्नो हरेः शिरः उषाः उषो देवी ततो जाता । तदाश्रित्य तिष्ठतीत्यर्थः । शिर इत्यादि प्रथमा पंचमीसप्तम्योरर्थे ध्येया । तथा तृतीयार्थे चतुर्थ्यर्थे षष्ठ्यर्थे च ज्ञेया । उषाः शिरसा सत्तामतीतिप्रवृत्तिमतीति । उषाः शिरसे तदुपास्त्यर्था । अंगेषु यथाश्रयभाव इति सूत्रात् । उषाः शिरसस्तत्स्वामिकेति । एवमग्रेऽपि ध्येयं । वै शब्दः प्रसिद्ध्यर्थः । सूर्यश्चक्षुः अश्वस्य मेध्यस्येति सर्वत्रानुषज्यते । तदर्थः प्राग्वत् । सूर्यो मंडलाभिमानी देवश्चक्षुषो जातस्तत्र तिष्ठतीत्यादिरर्थः । एवमग्रेऽपि । वातो वाय्वभिमानी प्राणः । वैश्वानरनामाग्निः व्यात्तं विवृतमुखं । संवत्सरः संवत्सराभिमानी ब्रह्मा अश्वस्य मेध्यस्यात्मा सर्वदेहः । प्राक्तनस्यैव सर्वत्रानुषंगसंभवे पुनरश्वस्य मेध्यस्येत्युक्तिः कस्यचिदश्वस्यैवं महिमा न किंतु सर्वस्यापि यागीयाश्वस्येति द्योतनाय । द्यौः द्युलोकाभिमानी पृष्ठं । अंतरिक्षं अंतरिक्षाभिमानी विघ्नेशसूनुरुदरं । पृथिवी पृथिव्यभिमानी पाजस्यं पादाः । दिशो दिगभिमानिनश्चत्वारः पार्श्वे । पूर्वापरविभागेनैकपार्श्वस्य द्वित्वेन पार्श्वद्वयस्य चतुष्ट्वात् पार्श्वेभ्यो जातास्तानाश्रित्य तिष्ठंति चेत्येवमादिरर्थः । अवांतरदिशः कोणमानिनः । परिशवः परिशवशब्दितपार्श्वस्थास्थिपुच्छानि । ऋतवः वसंतादिषड्तुमानिनः अंगानि शिरःपादमूलचतुष्टयपुच्छभेदेन षडंगानि । मासा अर्धमासाश्च मासपक्षाभिमानिनः । पर्वाणि प्रधानसंधयोऽवांतरसंधयः । अहोरात्राभिमानिनः । प्रतिष्ठा पादाः । नक्ष

श्राणि नक्षत्राभिमानिनः अस्थीनि । नभःआकाशाभिमानी विघ्नेशः मांसानि । सिकताः सिकताभिमानिनः उवैध्यं पुरीषं । मेध्या श्वगतभगवदुदरस्थमिति योज्यं । उवध्याश्रितपृथिवीदेव्यां सिकताभिमानिनस्तिष्ठंतीत्यादिरर्थो ध्येयः । पृथिव्याः पादाश्रयत्वोक्तावपि उवध्याश्रयत्वं न विरुद्धं ऐश्वर्याद्बहुरूपत्वाच्च । सिंधवो नदीमानिनः गुदाः आंत्राणि । पर्वताः पर्वताभिमानिनो देवाः । यकृच्च क्लोमानश्च यकृत्क्लोमशब्दितमांसविशेषाः ओषधयश्च वनस्पतयश्च तदभिमानिनो देवाः लोमानि । उद्यन् उदयंगतो रविः पूर्वार्धः नाभेः पूर्वभागः । निम्लोचन् अस्तं गच्छन् जघनार्धः नाभेरधोभागः । यत् विद्योतते यो विद्युदभिमानी तत् स विजृंभते । मेध्याश्वस्य विजृंभणं औदरवायुवशेन मुखव्यादानं विजृंभणं । यत्तच्छब्दयोर्व्यत्यासेन योजना । यत् स्तनयति मेघगर्जनाभिमानी यः तत् सः विधूनुते गात्रं कंपयते । गात्रकंपनाश्रित इत्यादिरर्थः । यद्वर्षति वर्षाभिमानी यः तत् सः मेहति मूत्रयाति । मूत्रणाश्रित इत्यादिः । वागेव प्रसिद्धवागभिमानिदेव एव । अस्य मेध्याश्वस्थस्य हरेः वाक् ततो जाता तामाश्रित्य तिष्ठतीति ज्ञेयं । एवं शिरः प्रभृतिप्रथमांतशब्दानां उषाः शिरो ब्रह्म नामेत्यादिभाष्योक्तस्मृत्या सप्तम्यर्थादिपरत्वमुपेत्य उषोदेवीप्रभृतिदेवानां मेध्याश्वगतहरेश्शिरःप्रभृत्यंगाश्रितत्वादिरूप एकार्थोऽस्य खंडस्योक्तः । ईशांगवाचिनो वा स्युरित्यादिस्मृत्यनुरोधेन मेध्याश्वगतस्य हरेश्शिरः प्रकाशरूपत्वादुषा इत्युच्यते । चक्षुः सूरिप्राप्यत्वादिहेतुना सूर्य इत्युच्यत इत्यादिरूपेण योगवृत्त्या उषस्सूर्यवातवैश्वानराग्निसंवत्सरादिशब्दानां शिरः प्रभृतिभगवदवयववाचिपरत्वेनान्योप्यर्थो ध्येयः । अस्मि

न्पक्षे यथाश्रुतमेव सामानाधिकरण्यं ॥ ३ ॥ १ ॥ १ ॥ मेध्याश्वनिष्ठभगवत्संबंधिविद्याविशेषमाह ॥ अहरिति । अश्वमेधी यमेध्याश्वस्य पूर्वापरदेशौ होमयोग्यौ महिमशब्दितौ । तदभिमान्युक्तिपूर्वं तयोर्जन्मकारणाद्याहात्र खंडे । अश्वं पुरस्तान्मेध्याश्वस्य पुरोभागो महिमनामा अहः अहरभिमानिमन्मथाभिमन्यमानः अन्वजायत आसीदित्यर्थः वै प्रसिद्धिद्योतकः । तस्य महिमाभिमानिनोऽहश्शब्दितस्य मन्मथस्य । पूर्वे अनादौ । मुख्ये इति वा । समुद्रे सम्यग्गुणैरुद्रिक्तत्वादुत्कृष्टत्वाद्धेतोस्समुद्र

अहर्वाअश्वंपुरस्तान्महिमान्वजायत तस्यपूर्वेसमुद्रेयोनी रात्रिरेनंपश्चान्महिमान्वजायत तस्या परेसमुद्रेयोनिरेतौवाअश्वंमहिमानावभितःसंबभूवतुर्हयोभूत्वादेवानवहद्वाजीगंधर्वानर्वा ऽसुरानश्वोमनुष्यान्समुद्रएवास्यबंधुः समुद्रोयोनिः ॥ २ ॥ ॥ इतिप्रथममश्वब्राह्मणं ॥३॥१॥

नामके हरौ योनिरुत्पत्तिः । एनं अस्याश्वस्य पश्चात् पश्चाद्भागो महिमनामा रात्रिः रात्रिदेवतारत्याभिमन्यमानः अन्वजायत अभवत् । तस्य पश्चाद्भागाभिमानिनो रात्रिदैवतस्य अपरे अमुख्ये समुद्रे समुद्रिक्ते अमुख्यसमुद्रेकवति चतुर्मुखे योनिरुत्पत्तिः । विक्षिप्योक्तं बुद्ध्यारोहाय संगृह्णाह ॥ एताविति । एतौ महिमानौ महिमशब्दितावश्वदेहपूर्वोत्तरभागौ अहोरात्रशब्दितमन्मथरत्यभिमन्यमानौ अश्वमभितः अश्वदेहस्य पूर्वापरदेशे संबभूवतुः वै इति । न केवलं भगवान् अश्वरूपी मेध्याश्वे तिष्ठति किंतु देवादिवाहकेष्वपि स्थित्वा तत्तत्कर्मकर्तृतया तत्तन्नामा वर्तत इत्याह ॥ हयो भूत्वेति । हत्वा शत्रून् यातीति

व्युत्पत्त्या हयनामा सन् हयरूपी देवाश्वेषु तेषां शत्रुहननाय आविष्टस्सन् देवानवहत्। नित्यं युद्धकर्तृत्वहेतुना वाजिनामा सन्। वाजिरूपी गंधर्वाश्वेषु स्थित्वा गंधर्वानवहत्। देवप्रेष्यतया गंधर्वाणां सर्वदा युद्धरतत्वात्तदश्वा वाजिनः वाजं युद्धमस्यास्तीति वाजी। अतिगतिमत्त्वहेतुना अर्वनामा सन् असुराश्वेषु स्थित्वा असुरानवहत्। तेषामश्वा अतिगतिमंतः। ईषदाशुगमनहेतुना अश्वनामा सन् मनुष्याश्वेषु स्थित्वा मनुष्यानवहत्। ईषद्गतिमंतो हि मनुष्याश्वाः। अस्य शत्रुहननादिव्यापारे कस्सहायः नानाविधरूपजनकश्च

नैवेहकिंचनाग्रआसीन्मृत्युनैवेदमावृतमासीदशनायया अशनायाहिमृत्युस्तन्मनोकुरुतात्मन्वीस्यामिति सोर्चन्नचरत्तस्यार्चतआपोजायंतार्चतोवैमेकमभूदितितदेवार्कस्यार्कत्वं कं ह्वा अस्मैभवतियएवमेतदर्कस्यार्कत्वंवेद ॥ १ ॥

क इत्यत आह ॥ समुद्र एवेति। समुद्रेकहेतुना समुद्रनामा हरिरेवास्य हरेः बंधुः। समुद्र एवास्य योनिः कारणं। स्वस्मादेव स्वयं नानारूपाण्याविर्भावयति ऐश्वर्यातिशयादिति भावः॥ इति प्रथममश्वब्राह्मणं ॥ ३ ॥ १ ॥ २ ॥ प्रकृताश्वमेधयज्ञो भगवदाराधनत्वेन ब्रह्मादिभिरप्यनुष्ठित इति सोकामयत मेध्यमिति तं संवत्सरस्य परस्तादात्मन आलभत इत्यादिना वक्तुं तदुपयुक्तां कांचन कथामाह ॥ नैवेहेति। इह अवकाशे अग्रे विश्वजनेः प्राक् प्रलय इति यावत्। किंचन वस्तु नैवासीत्। प्रकृत्यादेः कारणजातस्य सत्त्वान्नैव किंचनासीदित्युक्तिः कथमित्यत आह ॥ मृत्युनैवेति। अश्यते भुज्यत इत्यशं आहारभूतं जगत् नयति

प्रेरयतीति अशनाया तया अशनायया मृत्युना सर्वसंहारकेण हरिणा इदं सर्वं नित्यजातमावृतमासीत्। अभिभूतं सुप्तशक्तिकमासीत्। तदधीनमेवासीत्। न स्वतंत्रं अतो नासीदित्युक्तिरिति भावः। तथाहि श्रुत्यंतरं नान्यत्किंचनमिषदिति। जगन्नेतृत्वस्य श्रीतत्वादौ सत्त्वेपि मुख्यतो मृत्युनामा हरिरेव नेतेति स एवात्र ग्राह्य इति भावेनाह॥ अशनाया हि मृत्युरिति। हि शब्दः एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः। यमप्येति भुवनं सांपराये स नो हरिर्घृतमिहायुषेत्तु देव इत्यादि श्रुतिप्रसिद्धिद्योतकः। तत् तस्मात्स्वस्मादन्यस्याभावात्। मनोकुरुत ऐच्छत्। अप्सृष्ट्यर्थमिति शेषः। इच्छाप्रकारमाह॥ आत्मन्वीति। आत्मवान् जगदाख्यगौणदेहवान् स्यां भवेयामिति। विश्वसृजं विरिंचं सृष्ट्वा तद्द्वारा स्वाधीनं जगत्सृजेयं ततः प्रागपस्सृजेयमित्यैच्छदिति तात्पर्यार्थः। अपां प्राणिसुखहेतुत्वात्पूजासाधनत्वाच्चादौ तत्सृष्टिमाह॥ स इति। स मृत्युनामा हरिः। अप्सृष्ट्यर्थमात्मानमर्चन्नचरत्। तस्यार्चतः स्वात्मानं पूजयतस्सकाशादापोजायंत। अर्चतो जातत्वादुदकस्यार्कना मान्वर्थत्वेन प्राप्तमित्याह वेदपुरुषः॥ अर्चतो वै म इति। अर्चतस्स्वात्मानं पूजयतः। मे मदंतर्यामिणो हरेस्सकाशात्। कं सुख हेतुतया कंपदवाच्यमुदकं अभूदिति यत्तदेवार्कस्यार्कपदवाच्यस्यार्कपदप्रवृत्तिनिमित्तं। अनेन निमित्तेनोदकस्यार्कनाम प्राप्तमिति प्रसिद्धिद्योतको वै शब्दः। तात्पर्यज्ञापनायैतज्ज्ञानिनः फलमाह॥ कम्मिति। योधिकारी एवं विष्णुजातत्वपूजासाधनत्व सुखसाधनत्वप्रकारेणैतदर्कत्वं अर्कपदप्रवृत्तिनिमित्तं अर्कस्य अर्कपदवाच्यस्योदकस्य वेद अस्मै कं सुखं भवति ह वा इति।

अर्चतो जातं कमर्कमिति व्युत्पत्तिः। निरुक्तिबलादरित्येतावत एवोपपदस्य शेषः ।।३।।२।।१।। अर्कशब्दस्य सूर्ये प्रसिद्धत्वात्तद्बलादप् शब्दोपि तत्पर एव किं न स्यादिति शंकामपाकर्तुं प्रागुक्तमपामर्कनामत्वमनुवदंस्ताभ्यः पृथिवीसृष्ट्यादिकमाह ।।आपो वा अर्क इति । वै शब्दोवधारणे । आप एवात्रार्को नादित्य इति लोकरूढितोपि वाचनिकयोगस्य निरवकाशतया प्राबल्येनापामेवार्कनाम अर्चतो वै म इति प्रागुक्तनिरुक्तिबलादिति भावः । उक्तं हि कंपनादित्यत्र रूढितोपि वाचनिकयोगस्य प्राबल्यं । तद्यदपां तत् तासां

आपोवाअर्कस्तद्यदपां शरआसीत्तत्समहन्यतसापृथिव्यभवत्तस्यामश्राम्यत्तस्यश्रांतस्यतप्तस्यतेजोरसोनिरवर्ततानिः ॥ २ ॥

सत्रेधात्मानंव्यकुरुतादित्यंतृतीयंवायुंतृतीयंअग्निंतृतीयं सएषप्राणस्त्रेधाविहितस्तस्यप्राची दिक्शिरोसौचासौचेर्मावथास्यप्रतीचीदिक्पुच्छमसौचासौचसक्थ्यौदाक्षिणाचोदीचीचपार्श्वे द्यौःपृष्ठमंतरिक्षमुदरमियमुरस्सएषोप्सुप्रतिष्ठितो यत्रक्वचैतितदेवप्रतितिष्ठत्येवंविद्वान् ॥ ३ ॥

अपां यत् शरः यः शरः मंड आसीत् तत् सशरः स महन्यत निबिडोभवत् । सा विधेयापेक्षया स्त्रीलिंगनिर्देशः । संहतः शरः पृथिव्यभवत् । तस्यां पृथिव्यां श्वेतद्वीपे अश्राम्यत् शिश्ये । मृत्युरित्यनुषंगः । अग्निर्मे स्यादित्यतपच्चेति शेषः । तस्य श्रांतस्य तप्तस्य अग्निर्मे स्यादिति चिंतयतस्तेजो रसस्तेजस्सामर्थ्यस्य रसः जगत्सामर्थ्यसारभूतो बलदेवतारूपोग्निः अग्रजत्वा दग्रणीत्वादंगिनां नेतृत्वाद्वा अग्निनामा मुख्यवायुः निरवर्तत उदपद्यतेति ॥ ३ ॥ २ ॥ २ ॥ तस्याग्निनाम्नो वायोर्महिमान

माह ॥ स इति । सोऽग्निनामा वायुः । आत्मानं त्रेधा व्यकुरुतं व्यभजत् । आदित्यं तृतीयं वायुं तृतीयमग्निं तृतीयमिति । त्रयाणां मध्ये एकैकस्येतरद्वयापेक्षया तृतीयत्वमस्तीति सर्वरूपाणां समत्वसिद्धये तृतीयं तृतीयमित्येवोक्तं । प्रथमं द्वितीयं तृतीयमित्युक्तौ रूपाणां तरतमभावः प्रतीयेत । प्राणिनामायुरादाय यातीति व्युत्पत्त्या आदित्यनामकं जगत्प्रकाशकत्वेनादित्यस्थं रूपमेकं सर्वप्राणिशरीरगं सज्जगत्पालकं वायुरूपमेकं । प्रागुक्तनिरुक्त्या अग्निनामकं अग्निस्थं सर्वयज्ञप्रवर्तकं रूपमेकं चेति त्रेधा व्यकुरुतेत्यर्थः । प्राङ्निरवर्तताग्निरित्युक्त्या अग्नेरेव त्रिरूपतेति भ्रमनिरासायोक्तमेव रूपांतरविवक्षयान्वाह ॥ स एष प्राणस्त्रेधा विहित इति । प्राणो मुख्यवायुस्स च कूर्मरूपेण जगद्धारकः सन्नप्यास्त इति तस्य स्थितिमाह ॥ तस्येति । कूर्मरूपेण स्थितस्य वायोः प्राची दिक् शिरः । प्रथमा सप्तम्यर्थे । प्राच्यां दिशि शिरस्तिष्ठतीत्यर्थः । एवमग्रेपि ॥ असौ चासौ चेर्मौ । ईर्मौ पादौ । असौ चासौ च आग्नेय्यैशान्यौ दिशौ । अथेत्यर्थांतरे पश्चिमदिगवस्थितांगानि वच्मीत्यर्थः । अस्य कूर्मरूपस्य वायोः पुच्छं प्रतीची दिक् । अस्य सक्थ्यौ पादौ असौ चासौ च नैर्ऋतवायव्य दिशौ । अस्य पार्श्वे दाक्षिणा चोदीची च । द्यौः द्युलोकः पृष्ठं । कूर्मदेहस्योर्ध्वभागे अस्योदरमंतरिक्षं । आकाशमुदरेस्तीत्यर्थः । अस्य उरः वक्षः । अधोभाग इति यावत् । इयं पृथिवी कूर्मरूपस्य उरःप्रभृत्यधोभागाश्रिता इत्यर्थः । सोयं वायुकूर्मः कुत्र तिष्ठतीत्यत आह ॥ स एषोप्सु प्रतिष्ठित इति । अंडोदके प्रतिष्ठित इत्यर्थः । यद्यप्ययं कूर्मरूपो वायुः पंचाशत्कोटिविस्तीर्णायाः पृथिव्याः निखिलमपि प्रदेशमभिव्याप्य तामुरस्संश्लिष्टां कृत्वा तस्या उपरि तिष्ठति । अत एव तावत्परिमाणकूर्मदेहस्योपरिभागो द्युलोकपर्यंतमास्त इति द्युलोकाधारत्वं पृष्ठस्यांतरिक्षाश्रयत्वं मध्यभागस्यो, ॥ ४ ॥

दरशब्दितस्य युक्तं । तथापि वायवीयकूर्मदेहस्याप्रतिघत्वात् शिरोबाहुपादपुच्छपार्श्वानां लक्षयोजनघनीभूतभूखंडपार्श्वेषु अनु प्रविश्यातिरिच्यांडोदपर्यंतं गत्वा तदुदके अवस्थितत्वादप्सु प्रतिष्ठित इत्युक्तं । वायुकूर्मादिज्ञानिनः फलमाह ॥ यत्रेति । य एवं विद्वान् वायोरादित्यादिरूपत्रयं कूर्मरूपं चोक्तप्रकारेण जानन् यत्र क्व च यस्मिन्कस्मिंश्चिद्देशे एति गच्छति तिष्ठा सा चेत्तदेव तत्रैव प्रतितिष्ठति संस्थितिमान् भवतीत्यर्थः ॥ ३ ॥ २ ॥ ३ ॥ वायुरेव ब्रह्मा भवतीति ज्ञापयितुं वायूत्पत्तिं पूर्वमुक्त्वा ब्रह्मणः

सोकामयतद्वितीयोमआत्माजायेतेति समनसावाचंमिथुनꣳसमभवदशनायांमृत्युस्तद्यद्रेत
आसीत्ससंवत्सरोभवन्नहपुराततःसंवत्सरआस तमेतावंतंकालमबिभर्यावान्संवत्सरस्तमे
तावतःकालस्यपरस्तादसृजततंजातमभिव्याददात्सभाणमकरोत्सैववागभवत् ॥ ४ ॥

सृष्टिविषयामश्वमेधकरणे साक्षादुपयुक्तां कथामाह ॥ सोकामयतेति । ब्रह्मणोश्वमेधकर्तृत्वेन तदुत्पत्तिकथाया अश्वमेधकृता वादरजननाय उपयोगवत् । वायूत्पत्त्युक्तेरपि अश्वमेधादौ स एवोद्गानदक्षो नान्य इत्यथ हेममासन्यमित्यादिनोपयोगो व्यक्त इति ज्ञेयं । आत्मा विरिंचः मे द्वितीयो जायेतेति स मृत्युरकामयत। स मृत्युः मनसा स्वेच्छया। वाचं श्रीदेवीं। मिथुनं यथा भवति तथा समभवत् । स इति तच्छब्दार्थं व्यनक्ति ॥ अशनायां मृत्युरिति । बिंदुराधिक्यार्थे । सर्वाशननेतृत्वेन अशनायेति । तत् तत्र देव्यां यद्रेतः स्थापितमासीत् । स रेतः । विधेयापेक्षया पुंल्लिंगत्वं । संवत्सरोभवत् सम्यक् वत्सभूतान् देवान् रमयतीति व्युत्पत्त्या

१४*

संवत्सरनामा ब्रह्मा अभवत् रमतेर्भमंताङ्गः। कियत्कालं देवी गर्भं दधारेत्यतो वत्सरपर्यंतमित्याह ॥ न ह पुरेति। ततः विरिंचोत्पत्तेः पुरा पूर्वं संवत्सरः नास ह नाभूत्किल। कोर्थ इत्यतो व्यनक्ति ॥ तमिति। तं विरिंचं यावान्द्वादशमासात्मा संवत्सरः एतावंतं कालमबिभः उदरे धृतवती देवी। तमेतावतः कालस्य संवत्सरस्य परस्तात् पश्चात् असृजत असूत। वाणीसृष्टिं वक्तुमुपोद्घातमाह ॥ तमिति। जातं तं विरिंचमभि प्रति तदाभिमुख्येनेति यावत्। व्याददात् तमत्तुं मुखविघ्नातिमकरोदित्यर्थः।

सऐक्षतयदिहवावइममभिमꣳस्येकनीयोन्नंकरिष्यइतिसतयावाचातेनात्मनेदꣳसर्वमसृजतयदि दंकिंचर्चोयजूꣳषिसामानिच्छंदाꣳसियज्ञान्प्रजाःपशून्सयद्यदेवासृजततत्तदत्तुमध्रियतसर्वंवा अत्तीनितददितेरदितित्वꣳसर्वस्यैतस्यात्ताभवतिसर्वमस्यान्नंभवतियएवमेतददितेरदितित्वंवेद ॥५॥

स तु भीत्या भाणमकरोत्। भाणिति शब्दमकरोत्। सैव भाणिति शब्दस्तदभिमानी विधेयापेक्षया स्त्रीलिंगत्वं वाक् सरस्वती अभवत्। भारूपत्वाण्णशब्दितसुखरूपत्वाद्भाणिति भगवान् तद्व्यंजकत्वात्सरस्वती भाणभवदित्युच्यते ॥ ३ ॥ २ ॥ ४ ॥ ततः किं जातमित्यतोऽदनान्निवृत्तो भगवान् (मृत्युः)वाणीवाणीश्वराभ्यां जगत्सृष्ट्वा पश्चात्समहरादित्याह ॥ स इति। सः मृत्युनामा हरिः। इमं संवत्सराख्यं विरिंचं। अभिमंस्ये लीनं करिष्ये संहरिष्यामि यदि तर्हीति शेषः। कनीयः अल्पमन्नं करिष्ये कृतवान् भवेयमित्यैक्षतालोचितवान्। एवमालोच्य स मृत्युः अदनान्निवृत्तस्सन् तया वाचा सरस्वत्या तेनात्मना विरिंचेन मिथुनीभूताभ्यां

ताभ्यामिति यावत्। इदं सर्वमसृजतेत्युक्तं व्यनक्ति ॥ ऋच इति। ऋगाद्यभिमानिनः। गायत्र्यादिच्छंदोभिमानिनः यज्ञाभिमानिनः। असृजतेत्यन्वयः। अजनयदित्यर्थः। सृष्टिमुक्त्वा संहृतिमाह ॥ स इति। स आत्मा विरिंचः यद्यद्देवासृजत तत्तदत्तुमाध्रियत मनोकुरुत मृत्युरित्यर्थः। आदच्चेत्यपि ध्येयं। कुतः सर्वमादन्मृत्युरित्यतः स्वस्यादितिनामवत्त्वहेतोरित्याह ॥ सर्वमिति। मृत्युः सर्वमत्तीति यत् तत् सर्वादनं अदितेरदितिपदवाच्यस्य मृत्योरदितित्वं अदितिपदप्रवृत्तिनिमित्तं। अन्यथा सर्वादनाभावे सर्वात्तृत्वनिमित्तकं यत् स्वस्यादितिनाम अदितिर्देवतामयी इत्यादि श्रुत्यंतरेस्ति तन्न स्यादतः सर्वमाददिति देवमातरि प्रसिद्धादिति

**सोकामयत भूयसा यज्ञेन भूयो यजेयेति सोश्राम्यत्स तपोतप्यत तस्य श्रांतस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रांतेषु शरीरं श्वयितुमाध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥**

नाम्नो निमित्तोक्तिपरमिति त्वयुक्तं। तस्यास्सर्वादनस्य बाधात्। मृत्युपदोक्तब्रह्मप्रकरणविरोधाच्च। तथाच सूत्रं। अत्ता चराचरग्रहणात्। प्रकरणाच्चेति। तात्पर्यद्योतनायैतज्ज्ञानिनः फलमाह ॥ सर्वस्येति। योधिकारी अदितेरदितिपदवाच्यस्य मृत्युनाम्नो हरेरेतददितित्वं अदितिपदप्रवृत्तिनिमित्तमेवं वेद स इति शेषः। सर्वस्य स्वयोग्यस्यात्ता भक्षकः भवति। नेदं स्तुतिमात्रं किंतु वास्तवमेवेति भावेनाह ॥ सर्वमस्यान्नं भवतीति ॥ ३ ॥ २ ॥ ५ ॥ अश्वमेधकर्तृजनिमुक्त्वा तत्साधनाश्वरूपपशूत्पत्तिं वक्तुं कथामाह ॥ स इति। स चतुर्मुखः। भूयसा यज्ञेन श्रेष्ठेनाश्वमेधक्रतुना। भूयः परिपूर्णं ब्रह्म। यजेय पूजयेयमित्य

कामयत। एवं कामयमानस्स साधनास्मृतेरश्राम्यत् श्रांतोभवत्। स तपोतप्यत अतपदित्यर्थः। तापवानभूदिति यावत्। तस्य श्रांतस्य तप्तस्य देहत्यागेच्छायां सत्यां देहादुदक्रामत्। तस्मिन्नुत्क्रांते सति तेनैव सह यशो वीर्यमुदक्रामदिति कांक्षितपूर्त्या वाक्य योजना ज्ञेया। यशोवीर्यशब्दार्थं व्यनक्ति॥ प्राणा वैयशो वीर्यमिति। यशोवीर्यहेतुत्वात्प्राणा इंद्रियाभिमानिनः॥ प्राणेषूत्क्रांतेष्विति। विरिंचेन सहेति योज्यं। श्वयितुं स्थूलभावं प्राप्तुं अध्रियत अभूत्। स्थूलमभवदित्यर्थः। तस्य विरिंचस्य शरीरे एवं स्थूलतां प्राप्ते सति शरीर एव प्रवेष्टुं मन आसीत्॥ ३॥ २॥ ६॥ ततः किमासीदित्यत आह॥ स इति। इदं शवरूपं

सोकामयतमेध्यंमइदꣳस्यादात्मन्व्यनेनस्यामितिततोश्वःसमभवद्यदश्वत्तन्मेध्यमभूदितितदे
वाश्वमेधस्याश्वमेधत्वमेषहवाअश्वमेधंवेदयएनमेवंवेद॥ ७॥

स्थूलतां प्राप्तं शरीरं मेध्यं पवित्रं स्यात्। अनेन शरीरेण आत्मन्वी देहवान् स्यां भवेयमिति स चतुर्मुखोकामयत ऐच्छत्। प्रविवेश चेत्यपि ध्येयं। ततः प्रवेशानंतरं देहस्य श्वेतीभावानंतरमिति वा स्थूलादेहादिति वा अश्वमेधसाधनं दृष्ट्वा अश्वोभवत्। अश्वाकारं देहांतरमेकेनांशेन धृतवानित्यर्थः। ततोश्वमेधमकारोदिति शेषः। प्राक्तनपुंदेहस्य अश्वदेहस्य यागस्य च त्रयाणामश्वमेधनाम निर्वचनेनाह॥ यदिति। तच्छरीरमश्वत् स्थूलमभवत्। मेध्यं चाभूदिति यत् तदेव स्थूलताभवनं मेध्यताभवनमेव अश्वमेधस्य अश्वमेधनाम्नश्शरीरस्य तच्छरीरकस्य चतुर्मुखस्याश्वमेधत्वं अश्वमेधनामनिमित्तं। श्वेतीभावं मेध्यतां पवित्रतां च

गते शरीरे स्थितत्वात् ब्रह्मा अश्वमेधनामकोभवादित्यर्थः। तथा तत्पुंशरीरं अश्वत् अश्वरूपतया द्वितीयं रूपमभवत्। मेध्यं मेधो यागस्तदीयं मेध्यं। यागसाधनं चाभूदिति यत् तदेवाश्वमेधनाम्नो यागीयाश्वस्याश्वमेधत्वं। पुंदेहस्थो ब्रह्मा स्थूलभावं गतात्पुंदेहादश्वाकारं देहांतरं सृष्ट्वा अंशेन तदधिष्ठाय फलविशेषसिद्ध्यर्थं यज्ञसाधनं चाभूदित्यश्वरूपोप्यश्वमेधीयत्वहेतुना अश्वमेधनामाभवदित्यर्थः। तथा यत् यदर्थं अश्वाख्यसाधनद्वारा यत्कर्मानुष्ठानार्थमिति यावत्। अश्वत् स्थूलमभवत्। मेध्यं शुद्धं च

तमनवरुध्येवामन्यत तꣳसंवत्सरस्यपरस्तादात्मनआलभतपशून्देवताभ्यःप्रत्यौहत्तस्मात्सर्वदै
वत्यंप्रोक्षितंप्राजापत्यमालभंत एषहवाअश्वमेधोयएषतपतितस्यसंवत्सरआत्माऽयमाग्निरर्कस्त
स्येमेलोकाआत्मानस्तावेतावर्काश्वमेधौसोपुनरेकैवदेवता भवतिमृत्युरेवापपुनर्मृत्युंजयतिनैनंमृ
त्युराप्नोतिमृत्युरस्यात्माभवत्येतासांदेवतानामेकोभवति ॥७॥ इतिद्वितीयमश्वमेधब्राह्मणं ॥३॥२॥

तदिच्छयाभवदिति यत् तदेव श्वेतीभूतमेध्यपुंदेहस्थब्रह्मणा अश्वमेधनामकाश्वरूपसाधनद्वारानुष्ठितत्वमेवाश्वमेधनाम्नो यागस्याश्वमेधत्वं अश्वमेधनामनिमित्तमिति त्रेधास्य वाक्यस्यार्थो ध्येयः। योधिकारी एवं उक्तप्रवृत्तिनिमित्तेनाश्वमेधशब्दवाच्यतया एनं पुंदेहिनं अश्वदेहिनं विरिंचं यागं च वेद जानाति। एष पुमान् ह वै एष पुमानेवाश्वमेधमश्वमेधशब्दार्थं वेद नान्य इत्यर्थः ॥ ३ ॥ २ ॥ ७ ॥ पूर्वं शेषोक्त्या अश्वमेधमकरादित्युक्तं। तं प्रकारं दर्शयति ॥ तमिति। स इत्यनुवर्तते सः विरिंचः

तं अश्वरूपमात्मानमनवरुध्येव निरोधमकृत्ववामन्यत । अवरोधरहितनया भूमंडलं चारयिष्यामीत्यमन्यतेत्यर्थः । अश्वरूपः स्वयमेवेतीच्छया संचारसंभवेपि लोक इव निरोध्यनिरोधकभेदमुपेत्येयमुक्तिरितीव शब्दः । संवत्सरं चारयित्वा संवत्सरस्य परस्तात् । आत्मने स्वांतर्यामिणे भगवते आलभत विशस्तवान् । विशस्य । तस्य वपामंगानि च हरये दत्तवानित्यर्थः । अश्वमेधीयाश्वस्य प्रजापतिदेवताकत्वात्प्रजापतीतरकर्तृकयागे सदेहमानिहरये प्रणमेत्केवलाय वेत्युक्तन्यायेन प्रजापतिसहितहरये हविर्दानं । प्रजापतिकर्तृके तु यज्ञे अधिष्ठानविनाकृतकेवलहरये दानमिति कृत्वा केवलस्वांतर्यामिणे हविर्दत्तवानिति ज्ञेयं । पशून् अजादीन् देवताभ्यः अन्यदेवतास्थपरमात्मरूपेभ्यः उक्तन्यायात् । प्रत्यौहत् दत्तवान् । कुतो ब्रह्मा स्वात्मस्थायाश्वं देवतास्थरूपेभ्योन्यपशूनालब्धवानित्यत आह ॥ तस्मादिति । तस्मात्स्वात्मस्थाय देवतास्थाय दत्तत्वकारणात् इंद्रादयः पृथुप्रभृति राजानश्च प्रोक्षितं पशुं जात्येकवचनं । अजादिपशुजातं सर्वं सर्वदैवत्यं सर्वदेवतासंबंधि । अश्वं च प्रजापतिसंबंधिनं आलभंते । न केवलं ब्रह्मादिरश्वमेधाख्योपि त्वश्वमेधनामकब्रह्माधिष्ठानत्वात्सूर्योप्यश्वमेधनामेत्याह ॥ एष ह वा इति । एष इत्युक्तं व्यनक्ति ॥ य एष तपतीति । कुतः यतस्तस्य तस्मिन्सूर्ये संवत्सरो ब्रह्माऽश्वमेधनामा सन्निति शेषः । आत्मा आततो व्याप्तोस्त्यत इति तस्य महिमानमाह ॥ अयमिति । अयं संवत्सराख्यो ब्रह्मा अर्कोर्कस्थोर्कनामा अग्निरग्निस्थतयाग्निनामा । तस्य ब्रह्मणः इमे लोका आत्मानः तेन आतताः व्याप्ता इति कृत्वा तस्यात्मान इत्युच्यंते । एवं सूर्यादौ सर्वत्र व्याप्तश्चेत्तर्हि किं स एव सर्वोत्तमः नेत्याह ॥ ताविति । उपलक्षणं । अर्काग्निलोकाश्वमेधास्तेषु स्थितो ब्रह्मेति.यावत्. । सम पुनरेकैव देवता

भवतीत्यत्र सा उ इति पदविभागः । प्रसिद्धविष्ण्वाख्यैकदेवताधीन एव भवति उ भवत्येवेति सेत्युक्तदेवता केत्यत आह ॥ पुनर्मृत्युर्मृतिः पुनर्मृत्युर्मृतिः स्मृतेत्युक्तः । अप मृत्युरेव । नृसिंह एव । तं जानन्निति शेषः । तं मृत्युनामकं नृसिंहं जानन्ब्रह्मा पुनर्मृत्युं अकालमृतिं जयति । मृत्युः मृतिरूपो मृत्युरेनं ब्रह्माणं नाप्नोति । कुत मृत्युः नृसिंहः अस्य ब्रह्मण आत्मा स्वामी भवति । एतासां देवतानां रुद्रादीनां पूर्वमुक्तार्कादीनां वा एको मुख्यो भवति स्वामी भवति ईशत्वेन वर्तत इत्यर्थः । यतोत इति योजना । यद्वा मृत्युरस्यात्मेत्येतत् नैनमित्युक्तार्थे एतासामित्युक्तार्थे च हेतुरिति ज्ञेयं ॥ छ ॥ द्वितीयमश्वमेधब्राह्मणं ॥ ३ ॥ २ ॥

द्वयाहप्राजापत्यादेवाश्चासुराश्चततःकानीयसाएवदेवाज्यायसाअसुरास्तएषुलोकेष्वस्पर्धंतते
हदेवाऊचुर्हंतासुरान्यज्ञउद्गीथेनात्ययामेति ॥ १ ॥

हेममासन्यं प्राणमित्यादिना विवक्षुरुपोद्घातमाह ॥ अश्वमेधादिषु वायुरेवोद्गाता कार्यस्तस्यैव तत्र प्राप्तविघ्नविघातक्षमत्वादित्यथ ह इति शब्दोत्र योज्यः । ततः तत्र वर्गद्वय द्वया इति । प्राजापत्याः ब्रह्मसुताः । देवाश्च असुराश्चेति द्वयाः द्विवर्गाः । ह प्रसिद्धं । इति शब्दोत्र योज्यः । ते उभये । एषु लोकेषु मध्ये । देवाः कनीयसाः कनीयांसः । संख्यया अल्पा एव । असुराः ज्यायसाः ज्यायांसो बहव इत्यर्थः । ते देवाः परस्परमूचुर्ह । आलोचितवंतः त्रिलोकाधिपत्यविषये अस्पर्धंत । स्पर्धया युद्धे जाते बहुत्वाच्छंकरवरोत्सिक्तत्वाच्चासुरैर्जिताः ते देवाः परस्परमूचुर्ह । आलोचितवंतः स्म । कथं हंत हर्षे । यज्ञे उद्गीथेन उद्गानेन । उद्गानप्रसन्नेन हरिणा असुरानत्ययाम अतिक्रामामेति ॥ ३ ॥ २ ॥ १ ॥ ते एव

मालोचितवंतो देवाः यज्ञमारभ्य तत्र वाचं वागभिमानिनं वह्निमूचुरहे। त्वं नोस्मदर्थे। उद्गाय ऋगारूढसामगानं कुर्विति। तैरुक्तो वाग्वह्निस्तथास्त्वित्युक्त्वा तेभ्यो देवेभ्यः। देवानामर्थे। उदगायत्। यो वाचि भोगः उद्गानजं फलं शत्रुजयादि तं देवेभ्य आगायत्। यत् कल्याणं उद्गानादन्यदृगादिना भगवत्स्तवनादिरूपं वदति। तदात्मने स्वस्मै आगायदित्यनुषंगः। ते असुराः। अनेनोद्गात्रा नोस्मान्। अत्येष्यंति देवा इति विदुर्वै। एवं विदित्वा ते तं वह्निं। अभिद्रुत्य आभिमुख्येन गत्वा। पाप्मनाऽविध्यन्।

तेहवाचमूचुस्त्वंनउद्गायेतितथेतितेभ्योवागुदगायद्योवाचिभोगस्तंदेवेभ्यआगायद्यत्कल्याणंवदतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीति तमभिद्रुत्यपाप्मनाऽविध्यन्त्सयःसपाप्मायदेवेदमप्रतिरूपंवदतिसएवसपाप्मा ॥ २ ॥ अथहप्राणमूचुस्त्वंनउद्गायेतितथेतितेभ्यःप्राणउदगायद्योघ्राणेभोगस्तंदेवेभ्यआगायद्यत्कल्याणंजिघ्रतितदात्मने। तेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाऽविध्यन्त्सयःसपाप्मायदेवेदमप्रतिरूपंजिघ्रतिसएवसपाप्मा ॥ ३ ॥

सम्यगुद्गानं यथा न भवति तथाऽकुर्वन्निति। वेधमेव व्यनक्ति ॥ स य इति। योसुरकृतः पाप्मा स सः प्रसिद्धः। एकस्तच्छब्दः प्रसिद्धार्थकः। प्रसिद्धः पाप्मा क इत्यत आह ॥ यदेवेति। अप्रतिरूपं व्यत्यस्तस्वरवर्णादिकं। वदतीति यत् इदमेव प्रसिद्धं पापवेधनमिति। कथमिदं पापमित्यत आह ॥ स एव स पाप्मेति। मंत्रो हीनः स्वरतो वर्णतो वेत्यादेरिति ज्ञेयं ॥३॥३॥२॥ अथ वह्नेः पापविद्धत्वकारणात् प्राणं नासिक्यवायुं। प्राग्वदेतदादिखंडचतुष्टयस्यार्थो ध्येयः। प्राणे भोगः। भगवन्निर्माल्याघ्राणजमदृष्टफलं। तद

न्यशुभगंधाघ्राणजं दृष्टं फलं कल्याणं। अप्रतिरूपमशुभगंधं ॥ ३ ॥ ३ ॥ ३ ॥ अथेत्युक्तार्थं। चक्षुश्चक्षुर्देवतं सूर्यं। चक्षुषि भोगः पुण्यतीर्थक्षेत्रादिदर्शनजमदृष्टं फलं। तदन्यसुरूपादिकं कल्याणं। अप्रतिरूपं दुर्दर्शं ॥ ३ ॥ ३ ॥ ४ ॥ श्रोत्रं दिग्देवताः। श्रोत्रे

अथहचक्षुरूचुस्त्वंनउद्गायेतितथेतितेभ्यश्चक्षुरुदगायद्यश्चक्षुषिभोगस्तंदेवेभ्यआगायद्यत्कल्याणं पश्यतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्त्सयःसपाप्मायदेवेदमप्रतिरूपंपश्यतिसएवसपाप्मा ॥ ४ ॥ अथहश्रोत्रमूचुस्त्वंनउद्गायेतितथेतितेभ्यःश्रोत्रमुदगायद्यःश्रोत्रेभोगस्तंदेवेभ्यआगायद्यत्कल्याणंशृणोतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्त्सयःसपाप्मायदेवेदमप्रतिरूपंशृणोतिसएवसपाप्मा ॥५॥ अथहमनऊचुस्त्वंनउद्गायेतितथेतितेभ्योमनउदगायद्योमनसिभोगस्तंदेवेभ्यआगायद्यत्कल्याणंसंकल्पयतितदात्मनेतेविदुरनेनवैनउद्गात्रात्येष्यंतीतितमभिद्रुत्यपाप्मनाविध्यन्त्सयःसपाप्मायदेवेदमप्रतिरूपंसंकल्पयतिसएवसपाप्मैवमुखल्वेतादेवताःपाप्माभिरुपासृजन्नेवमेनाःपाप्मनाविध्यन् ॥ ६ ॥

भोगो हरिकथाश्रवणादिजमदृष्टफलं। तदन्यसुखहेतुशब्दं कल्याणं। अप्रतिरूपं दुःश्रावशब्दं ॥ ३ ॥ ३ ॥ ५ ॥ मनः मनोदैवतमिंद्रं रुद्रं शेषं च। मनसि भोगो हरिध्यानादिजं श्रेयः। तदन्यसुखहेत्वर्थजातं कल्याणं। अप्रतिरूपं स्वाननुकूलं। उक्तमुपलक्षणं

अन्ये च देवा उद्गाने प्रवृत्ताः पापविद्धा अभूवन्निति वदन्नुपसंहरति ॥ एवमु खल्वेता देवता इति । एताः देवताः वह्न्यादी नन्यांश्च देवान्पाप्मभिरुपासृजन्संबद्धानकुर्वन्नसुरा एवमेना वह्न्यादिदेवता इत्यर्थः ॥ ३·॥ ३ ॥ ६ ॥ अथ सर्वासां देवतानां पापविद्धत्वात् । इमं प्रसिद्धं । आसन्यं आस्ये भवं । आस्य शब्दाद्भवार्थेन्यप्रत्ययः यकाररूपव्यंजनलोपश्च । आस्ये अंतरित्यग्रे निर्वचनात् । प्राणं मुख्यवायुं । ऊचुर्देवाः । त्वं न इत्यादि प्राग्वत् । अविव्यत्सन् वेद्धुमैच्छन् । इच्छंतः किमासन्नित्यत आह ॥

अथहेममासन्यंप्राणमूचुस्त्वन्नउद्गायेतितथेतितेभ्यएषप्राणउदगायत्तेविदुरनेनवैनउद्गात्रात्येष्यं
तीतितमभिद्रुत्यपाप्मनाऽविव्यत्सन्त्सयथाश्मानमृत्वालोष्ठोविध्वꣳसेतैवꣳहैवाविध्वꣳसमाना
विष्वंचोविनेशुस्ततोदेवाअभवन्परासुराभवत्यात्मनापरास्याद्विषन्पाप्माभ्रातृव्यो (भवति)
यएवंवेद ॥ ७ ॥

विध्वंसमाना इति । प्राग्वत् संधीभूय वेधितुं प्राप्ता एते विशकलितास्संतः विष्वंचः वक्रगतयः । भिन्नभिन्नमार्गगतिमंतो विनेशुः अलक्षिता अभूवन् । तत्र दृष्टांतः॥ स यथेति । स विध्वंसनेन विष्वग्गतिप्रकारः यथा स्पष्टं तथोच्यत इत्यर्थः। अश्मानं वज्रशिलां । ऋत्वा प्राप्य । लोष्टः पांसुपिंडः । विध्वंसेत यथा विशकलितावयवो भवेत् । एवं है व एवमेवेति । ततोनंतरं तेषां पलायितत्वाद्धा । देवा अभवन् लोकाधिपत्यादिभूतिमंत आसन् । असुराः पराभवन् भूतिविहीना आसन् । यो ऽधिकारी । एवं

सर्वासुरविध्वंसनहेतुतया प्राणं वेद। अस्य प्राणवेदिनः द्विषन् भ्रातृव्यः शत्रुः पाप्मा। आत्मना परमात्मना। तत्प्रसादेनेति यावत्। पराभवति पराभूतो भवति ॥३॥३॥७॥ ततः किमासीदित्यत आह ॥ ते होति। ते देवाः। यः इत्थं शत्रुविनाशद्वाराऽस्मद्भूति हेतुत्वेन। नोऽस्मान्। असक्त प्राप्नोत्। सः क्वनु कुत्राभूत्। ह आश्चर्यं। इत्यूचुरन्योन्यमालोचितवंतः। आलोच्यायमास्येंतः मुखांतरेऽस्तीति निश्चक्रुरित्यर्थः। अत एव आस्येऽयत इत्ययास्यनाम वायोरित्याह ॥ सोयास्य इति। नामांतरं चाह ॥

तेहोचुःक्वनुसोभूद्योनइत्थमसक्तेत्ययमास्येंतरिति सोयास्यआंगिरसोंगानांहिरसः ॥ ८ ॥
सावाएषादेवतादूर्नामदूरंह्यस्यामृत्युर्दूरंहवाअस्मान्मृत्युर्भवतियएवंवेद ॥ ९ ॥ सावाएषा
देवतैतासांदेवतानांपाप्मानंमृत्युमपहत्ययत्रासांदिशामंतस्तद्गमयांचकारतदासांपाप्मनोवि
न्यदधात्तस्मान्नजनमियान्नांतमियान्नेत्पाप्मानंमृत्युमन्ववायानीति ॥ १० ॥

आंगिरस इति। तन्नाम निर्वक्ति। अंगानां प्राणिदेहानां रसो नियंता हि यतोत इति। अंगपदस्यैकारांतादेशे अंगिरस इति सिद्धेः। स एवांगिरसः। एतेनास्यास्यांतरवस्थाने प्रयोजनमुक्तं भवति ॥ ३ ॥ ३ ॥ ८ ॥ वायोर्महिमांतरमाह ॥ सेति। सैषा वायुरूपा देवता। दूर्नाम वै। कुतः। अस्याः देवतायाः मृत्युर्दूरं हि यस्मात्तस्मादिति। दूरं करोतीत्यर्थे क्विप्यंतलोपे दूरिति रूपासिद्धेः। दूरमित्यादि फलवाक्यं स्पष्टार्थं ॥ ३ ॥ ३ ॥ ९ ॥ देवानामसुरकृतपापसत्त्वात्कथं ततो देवा अभवन्निति भूतिमत्त्वो

क्तिरित्यत आह ॥ सा वा इति । सैषा वायुरूपा देवता । एतासां देवतानां पाप्मानं पापरूपं मृत्युमपहत्य वियोज्य । आसां दिशां प्राणिसंचारानुकूलदिशामंतो यत्र समुद्रप्रांत इति यावत् । तत् तत्र । गमयांचकार तत्र नीतवान् । आसां पाप्मनस्तत् तत्र । जनसंघेषु च विन्यदधात् प्राक्षिपत् । तस्मात् पाप्मनस्तत्र प्रक्षिप्तत्वादेव । जनं जनसंघं । अंतं दिशामंतं । कुतो नेयादित्यत उक्तं ॥ नेदिति । पाप्मानं मृत्युं नेत् नैवान्ववायानि प्राप्नवानीति भावेन नेयादित्यर्थः । तत्र गतौ पापान्वयः

**सावाएषादेवतैतासांदेवतानांपाप्मानंमृत्युपहत्याथैनामृत्युमत्यवहत् ॥ ११ ॥ सवैवाचमेव**
**प्रथमामत्यवहत्सायदामृत्युमत्यमुच्यतसोग्निरभवत्सोयमग्निःपरेणमृत्युमतिक्रांतोदीप्यते ॥ १२ ॥**
**अथप्राणमत्यवहत्सयदामृत्युमत्यमुच्यतसवायुरभवत्सोयंवायुःपरेणमृत्युमतिक्रांतःपवते ॥ १३ ॥**
**अथचक्षुरत्यवहत्तद्यदामृत्युमत्यमुच्यतसआदित्योभवत्सोसावादित्यःपरेणमृत्युमतिक्रांतस्तपति ॥१४॥**

स्यादिति भावः ॥ ३ ॥ ३ ॥ १० ॥ तासां पापं मृत्युमपहत्य किमकरोद्वायुरित्यत आह ॥ सा वा इति ॥ अथेति । तस्मादिति पापापहत्यनंतरमिति वा । एनाः देवताः । मृत्युमति । अतिक्रम्य स्थितं ऊर्ध्वलोकमवहत् प्रापितवान् ॥ ३ ॥ ३ ॥ ११ ॥ एतदेव प्रत्येकं प्रत्येकं व्यनक्ति ॥ स वा इति । सः वायुः । प्रथमां पूर्वमुद्गातृतया विनियुक्तां वाचमेव वाङ्मानिनमग्निमेवात्यवहत् । मृत्युमिति शेषः । मृत्युमत्यमुच्यत । पापमृत्युमुक्ता सा वाक् । यदा तदा सोग्निरभवत् अग्निलोकाधिपतिरभवत् । स्वपदे स्थितः स्वव्यापारं करोतीत्याह ॥ सोयमिति । परेण मुख्यवायुना ॥ ३ ॥ ३ ॥ १२ ॥ एवमेवाग्रेतन

खंडचतुष्टयेऽप्यर्थो ध्येयः। घ्राणं नासिक्यवायुं ॥ ३ ॥ ३ ॥ १३-१४ ॥ अतिक्रांता इत्यत्र स्वस्वव्यापारान् कुर्वंतीति शेषः ॥ ३ ॥ ३ ॥ १५ ॥ एवं ह वा एनमिति फलवाक्यं व्यक्तार्थं ॥ ३ ॥ ३ ॥ १६ ॥ अथ देवतानामभीष्टप्रापणानंतरं

अथश्रोत्रमत्यवहत्तद्यदामृत्युमत्यमुच्यततादिशोभवꣳस्ताइमादिशःपरेणमृत्युमतिक्रांताः ॥१५॥
अथमनोत्यवहत्तद्यदामृत्युमत्यमुच्यतसचंद्रमाअभवत्सोसौचंद्रःपरेणमृत्युमतिक्रांतोभात्येवꣳ
हवाएनमेषादेवतामृत्युमतिवहतियएवंवेद ॥ १६ ॥ अथात्मनेऽन्नाद्यमागायद्यद्धिकिंचान्नमद्य
तेअनेनैवतदद्यतइहप्रातितिष्ठति ॥ १७ ॥ तेदेवाअब्रुवन्नेतावद्वाइदꣳसर्वंयदन्नंतदात्मनआगासी
रनुनोस्मिन्नन्नआभजस्वेतितेवैमाभिसंविशतेनितथेतिनꣳसमंतंपरिण्याविशंततस्माद्यदनेनान्नम
त्तितेनैतास्तृप्यंत्येवꣳहवाएनꣳस्वाअभिसंविशंतिभर्तास्वानाꣳश्रेष्ठःपुरएताभवत्यन्नादोधिपति
र्यएवंवेदयउहैवंविदꣳस्वेषुप्रतिप्रतिबुभूषतिनहैवालंभार्येभ्योभवत्यथयएवैनमनुभवतियोवैतम
नुभार्यान्बुभूषतिसहैवालंभार्येभ्योभवति ॥ १८ ॥

आत्मने स्वस्मै। अन्नाद्यं अन्नाख्यमद्यमदनीयमुद्दिश्य तत्प्राप्त्यै आगायत्। गानं सफलमासीदित्याह ॥ यद्धि किंचेति। यत्किंच प्राणिभिरन्नमद्यते अनेनैव प्राणेनैव। तदन्नमद्यते कथं इह प्राणिषु। प्रतितिष्ठति प्राणो यत इति योज्यं ॥३॥३॥१७॥ ते देवाः वागादयः। भो प्राण यदन्नं प्राणिभिरद्यमानं। इदमेतावद्वै एतावदेव। नातोन्यदस्ति। तत्सर्वमात्मन

आगासीः । अस्मिन्नन्ने अनु पश्चात् । नोऽस्मान् । आभजस्व भागिनः कुर्वित्यब्रुवन् । इति तैरुक्तः प्राणोब्रवीत् । ते अन्नकांक्षिणो यूयं । मा मां । अभि अभितः । संविशत प्राणिदेहेषु प्रविशतेति ।' तथेत्युक्त्वा समंतं समंततः परिण्यविशंत । तस्मादन्नभागितया प्राणिषु निविष्टत्वादेवानेन प्राणेन । प्रेरितः प्राणी यदन्नमत्ति । तेनान्नेन । एता वागादयो देवता स्तृप्यंति । एतद्वेदितुः फलमाह ॥ एवमिति । योधिकारी । एवमुक्तगुणकं । प्राणं वेद जानाति । एनं प्राणज्ञानिनं । स्वाः ज्ञातयः । अभितः संविशंति उपजीवकत्वेन तं परिवार्य तिष्ठंतीत्यर्थः । कथमेवं ह वै यथा प्राणं वागादयोभिविशंत्येव

सोयास्यआंगिरसोंगानाꣳहिरसःप्राणोवाअंगानाꣳरसःप्राणोहिवाअंगानाꣳरसस्तस्माद्यस्मा त्कस्माच्चागात्प्राणउत्क्रामतितदेवतच्छुष्यत्येषहिवाअंगानाꣳरसः ॥ १९ ॥

मेवेति । स्वानां ज्ञातीनां । भर्ता रक्षक इति यावत् । श्रेष्ठः पुर एता अग्रेसरोऽन्नादोधिपतिश्च भवतीति । प्राणज्ञानि प्रतीपकारिणोनिष्टमाह ॥ य इति । य उ । यः कश्चित् । एवं विदं प्राणज्ञानिनं प्रति । स्वेषु धनविषये । प्रतिबुभूषति प्रतिकूलो भवितुमिच्छति । स भार्येभ्यो भर्तव्यजनपोषणायेति यावत् । नैवालं ह नैव समर्थो भवति । दरिद्रो भवतीत्यर्थः । प्राणज्ञानिन्यनुकूलस्येष्टमाह ॥ अथेति । अर्थांतरेऽयमथ शब्दः । य एनं प्राणविदमन्वेव भवति तस्यानुकूल एव भवति यस्तं वै तमेवानु अनुसृत्य । भार्यान्बुभूषति मत्पोष्या एते भवंत्वितीच्छति । स एव भार्येभ्योलं समर्थो भवति । पोषणशक्तो भवति खल्विति ॥ ३ ॥ ३ ॥ १८ ॥ उद्गाने वायोरलाभे किं कार्यमित्यतोऽयास्यादिशब्दमुख्यार्थवाय्वाधिष्ठानभू

तानयास्यादिऋषीनुद्गातृत्वेन कुर्यादिति भावेन महिमाधिक्याय च तान् शब्दान्वायौ निर्वक्ति ॥ स इति । सोयास्यः आंगिरसः कुतः । हि यतोंगानां प्राणिदेहानां रसो नियंता । स इति कः योंगानां रसत्वहेतुनांगिरस इत्युच्यत इत्यत आह ॥ प्राणो वा इति । प्रसिद्धमेतदित्याह ॥ प्राणो हि वा इति । तदुपपादयति ॥ तस्मादिति । अंगानां सारभूतत्वात् । उत्क्रामति ऊर्ध्वं गच्छति । तदेव तदेव । तत् अंगं । निगमयति ॥ एष हीति ॥३॥३॥१९॥ एष वायुरेव बृहस्पतिः उ बृहस्पतिनामा खलु ।

**एषउएवबृहस्पतिर्वाग्वैबृहतीतस्याएषपतिस्तस्मादुबृहस्पतिः ॥ २० ॥ एषउएवब्रह्मणस्पतिर्वाग्वैब्रह्मतस्याएषपतिस्तस्मादुब्रह्मणस्पतिः ॥ २१ ॥ एषउएवसामवाग्वैसाऽमैषसाचामश्चेति तत्साम्नः सामत्वंयद्वेवसमःप्लुषिणासमोमशकेनसमोनागेनसमएभिस्त्रिभिर्लोकैःसमोनेनसर्वेणतस्माद्वेवसामाश्नुतेसाम्नःसायुज्यंसलोकतांजयतियएवमेतत्सामवेद ॥ २२ ॥**

कुतः । वागेव बृहती वाग्देवता भारती सर्वस्त्रीगुणबृंहितत्वाद्बृहती । तस्याः एष वायुः पतिर्यस्मात्तस्मादु तस्मादेव । बृहस्पतिः । तद्बृहतोः करपत्योश्चोरदेवतयोस्सुट्तलोपश्चेति शाब्दिकोक्तिः ॥३॥३॥२०॥ महिमाधिक्यार्थं शब्दांतराण्यपि प्रतिज्ञापूर्वं वायौ निर्वक्ति ॥ एष उ एवेत्यादिना । अनंतवेदमानित्वाद्वा ब्रह्मणा विष्णुना बृंहितत्वात्पूर्णत्वाद्वा वाग्वै ब्रह्मेत्युक्तिः । शिष्टं प्राग्वत् ॥३॥३॥२१॥ भारत्यार्धनारीपुमात्मना कालविशेषे स्थितस्य वायोः सामोद्गीथपदवाच्यताप्यस्तीति भावेन तच्छब्दद्वयं

प्रतिज्ञापूर्वकं निर्वक्ति ॥ एष उ एव सामेत्यादिना । स्त्रीपु सारत्वाद्वाग्वै सेत्युक्ता । एप वायुरममेथत्वादम इत्युच्यत इत्यर्थः । सा चामश्चेति यदिति शेषः । भारत्या सह वायुः सामेति पदद्वयवाच्यार्धनारीपुमात्मकैकदेहतया वर्तत इति यदिति यावत् । तत् भारत्याऽर्धदेहात्मना वर्तनं । साम्नः सामपदवाच्यस्य वायोः । सामत्वं सामपदप्रवृत्तिनिमित्तमित्यर्थः । प्रकारांतरेण सामनाम निर्वक्ति वायौ ॥ यद्वेति । यद्वेति पक्षांतरवाचिपदं समः प्लुषिणेत्यादिवाक्यपंचकेनाप्यन्वेति । इव शब्दस्सम इवेत्यन्वेति । तन्मात्रपरिमाणत्वाभावादिव शब्दः । प्लुषिणा बिंदुना । नागेन गजेन । किंबहुनोक्तेनेति भावेनाह ॥ समोनेन सर्वेणेति ।

एषउवाउद्गीथःप्राणोवाउत्प्राणेनहीदꣳसर्वमुत्तब्धंवागेवगीथोच्चगीथाचेतिसउद्गीथः ॥ २३ ॥

यद्यद्वस्तु लोके यद्यत्परिमाणतया प्रमितं अनेन प्रमितेन सर्वेण समस्तस्मात्तत्तद्वस्तु समत्वादेव । साम उ सामनामकः खल्विति । ज्ञानिनः फलमाह ॥ अश्नुत इति । योधिकारी । एवं निरुक्तप्रकारेण । एतत् एतस्मादुक्तनिमित्तात्साम सामनामकं वायुं । वेद स इति शेषः । साम्नो वायोस्सायुज्यमश्नुते प्राप्नोति । सलोकतां समानलोकतां जयति प्राप्नोति । अधिकारिभेदेन फलभेदः ॥३॥ ॥३॥२२॥ प्राण उदिति कस्मादुच्यत इत्यत आह ॥ प्राणेन हीति । उत्तब्धं धृतं । वर्तत इत्यर्थः । देवादिभिर्गीयमानत्वाद्वागेव गीथेत्युच्यत इति ज्ञेयं । शिष्टं प्राग्वत् ॥ ३ ॥ ३ ॥ २३ ॥ अयास्यादिषु स्थित्वोद्गानकर्ता वायुरिति भावेन ते शब्दास्तत्र

निरुक्ताः तत्र स्थित्वा वायुरेवोद्गातेति कुत इत्यतः केनचिच्छपथेन तस्य समर्थनादित्याह ॥ तद्धापीति । तत् अयास्यादिषु स्थित्वोद्गाता वायुरित्येतत् । हापि प्रसिद्धमपि । शपथेन स्थापितवानित्याह वेदपुरुषः । कथं चैकितानेयः चिकितानापत्यं । ब्रह्मदत्तनामा मुनिः । राजानं सोमरसं । भक्षयन्नुवाच । किमिति । विश्वसृजां यज्ञे इतः प्राणादन्येन प्रेरितोऽयास्यांगिरस

तद्धापिब्रह्मदत्तश्चैकितानेयोराजानंभक्षयन्नुवाचायं(त्य)त्यस्यराजामूर्धानंविपातयताद्यदितो यास्यआंगिरसोन्येनोदगायादितिवाचाचह्येवसप्राणेनचोदगायदिति ॥ २४ ॥ तस्यहैतस्यसाम्नो यःस्वंवेदभवतिहास्यस्वं तस्यवैस्वरएवस्वं तस्मादार्त्विज्यंकरिष्यन्वाचिस्वरमिच्छेत तयावाचा स्वरसंपन्नयार्त्विज्यंकुर्यात्तस्माद्यज्ञेस्वरवंतंदिदृक्षंतएवाथोयस्यस्वंभवति भवतिहास्यस्वंयएवमे तत्साम्नःस्वंवेद ॥ २५ ॥

उदगायदिति यदि तर्हि । त्यस्य तस्य । सोमरसं भक्षयतो म इति शेषः । अयं राजा सोमाभिमानी चंद्रः । मूर्धानं विपातयतात् पातयेदित्युवाचेत्यर्थः । तर्हि केनाविष्ट उदगायदित्यत आह ॥ वाचा च ह्येवेति ॥ ३ ॥ ३ ॥ २४ ॥ अयास्यादीनामभावे प्राणाभिमन्यमानस्वरवंतमृत्विजं कुर्यादिति भावेन फलोक्तिपूर्वं स्वरस्य प्राणाभिमन्यमानत्वमाह ॥ तस्येति । एष उ एव सामेत्यादिनोक्तस्य सामनाम्नो वायोः स्वं वायुस्वामिकं गृहकोशादिवित्तं । वेद । अस्य तद्वेदिनः । स्वं वित्तं । भवति । ह खलु ।

किं तस्य स्वमित्यत आह ॥ तस्य वै स्वर एव स्वामिति । गृहकोशाद्यभिमानिरूपमुद्गातृस्वरे सन्निहितं भवतीत्यर्थः । तस्मात् स्वरस्य प्राणस्वत्वात्तदभिमानितया तदधिष्ठानत्वादिति यावत् । आर्त्विज्यं उद्गातृरूपकर्तृत्विक्कर्म । करिष्यन् वाचि स्वरमिच्छेत इच्छेत् । ततः किमित्यत आह ॥ तया वाचेति । तस्मात् स्वरवत एव ऋत्विक्त्वात् । स्वरवंतमेव दिदृक्षंते याजका इति योजना । स्वरवत ऋत्विक्त्वेपि तद्दिदृक्षा कुत इत्यत उक्तं ॥ अथो यस्येति । यस्य स्वरवत ऋत्विजस्सकाशात् । स्वं

तस्यहैतस्यसाम्नोयःसुवर्णंवेद भवतिहास्यसुवर्णंतस्यवैस्वरएवसुवर्णं भवतिहास्यसुवर्णंयएवमेत त्साम्नःसुवर्णंवेद ॥ २६ ॥ तस्यहैतस्यसाम्नोयःप्रतिष्ठांवेदप्रतिहतिष्ठतितस्यवैवागेवप्रतिष्ठावा चिहिखल्वेषएतत्प्राणःप्रतिष्ठितोगीयतेऽन्नइत्युहैकआहुः ॥ २७ ॥

गृहकोशादिवित्तं । अस्य यजमानस्य । भवति । अथो तस्मादिति । प्रागुक्तं फलं पुनर्वचनेन निर्धारयति ॥ भवति हास्य स्वामिति ॥३॥३॥२५॥ वायोर्गृहकोशादिवित्तमानिरूपं स्वरे सन्निहितं । भूषणस्वर्णमानि च तदित्याह ॥ तस्य हैतस्येति । सुवर्णं भूषणस्वर्णमानिरूपं वेदेत्यर्थः ॥ स्वर एव सुवर्णमिति । सुवर्णमानी स्वरमानी चेत्यर्थः । पुनः फलोक्तिर्नियमार्था ॥३॥३॥२६॥ गानकाले प्राणः क्व तिष्ठतीत्यतः फलोक्तिपूर्वकं स्थानमाह ॥ तस्येति । प्रतिष्ठां पीठं ॥ वागेवेति । वागिंद्रियमेव प्रतिष्ठा गानकाले पीठमित्यर्थः । एतत्प्राणः एष प्राणः अन्यदा त्वन्ने प्रतिष्ठित इत्येक आहुः । उ हेति निपातः

कालविशेषार्थः ॥३॥३॥२७॥ अथेति महिमांतरोक्तिप्रारंभे । अतः उद्गानेन निर्विघ्नं यज्ञसमापकत्वात् । पवमानानामेव मुख्य वायुत्वयोग्यानामेव । अभ्यारोहः मुक्तौ सर्वाधिक्यारोहणं । स्वसहमुक्तसर्वपूज्यत्वं भवतीति यावत् । सर्वेस्मै देवा बलिमावहंतीति

अथातःपवमानानामेवाभ्यारोहः सवैखलुप्रस्तोतासामप्रस्तौतिसयत्रप्रस्तूयात्तदेतानिजपेद सतोमासद्गमय तमसोमाज्योतिर्गमय मृत्योर्माऽमृतंगमयेति सयदाहासतोमासद्गमयेतिमृत्यु र्वाअसत्सदमृतं मृत्योर्माऽमृतंगमयामृतंमाकुर्वित्येवैतदाह तमसोमाज्योतिर्गमयेतिमृत्युर्वै तमोज्योतिरमृतंमृत्योर्माऽमृतंगमयामृतंमाकुर्वित्येवैतदाहमृत्योर्माऽमृतंगमयेतिनात्रातिरोहित मिवास्त्यथयानीतराणिस्तोत्राणितेष्वात्मनेन्नाद्यमागायेत्तस्मादुतेषुवरंवृणीतयंकामंकामयेत तꣳसएषएवंविदुद्गातात्मनेवायजमानायवायंकामंकामयतेतमागायतितद्धैतल्लोकजिदेवनहैवा लोक्यतायाआशास्तियएवमेतत्सामवेद ॥ २८ ॥ इत्युद्गीथब्राह्मणं ॥ ३ ॥ ३ ॥

श्रुतेः । वायुपदयोग्यस्य प्रस्तोतुर्जप्यानाह ॥ स वै खल्विति । स वायुपदयोग्यः खलु । प्रस्तोता साम्न आद्यक्षरोच्चारणकर्ता । साम प्रस्तौति उपक्रमते । स यत्र यदा । प्रस्तुयात्तत्तदा एतानि यजूंषि जपेत् । तान्याह ॥ असत इति । प्रथमवाक्यगतपद योरर्थमाह ॥ मृत्युर्वा इति । वाक्यार्थमाह ॥ मृत्योर्मामृतंमिति । मृत्योर्दुःखात्मकात् । अमृतमानंदं । मा मां गमय प्रापय

फलितमाह ॥ **अमृतं मेति** । मामित्यर्थः । इत्येवैतत् असतो मा सदिति वाक्यमाहेत्यर्थः । द्वितीयं यजुरपि प्रतीकत उपादाय पदार्थं वाक्यार्थं चाह ॥ **तमस इति** । अज्ञानाख्यमृत्युस्तमः वै प्रसिद्धं । ज्योतिर्ज्ञानं । मृत्योरज्ञानात् । मा मां । अमृतं ज्ञानं गमय अमृतं ज्ञानिनं । मा मां । कुरु । तृतीयवाक्ये मृत्युशब्दामृतशब्दयोः प्रसिद्धमरणतदभावार्थकतया मृत्योर्मरणादमृतं मृतिहीनं मुक्तं कुर्वित्यर्थस्य स्पष्टत्वादाह ॥ **नात्र तिरोहितमिवास्तीति** । तिरोहितमिव नास्ति । अतिरोहितमेवेत्यर्थः । अथेत्यर्थांतरे । तदाह ॥ **यानीति** । स वै खलु प्रस्तोतेत्यनुषज्यते । प्रागुक्तयजुर्मंत्रत्रयादितराणि । स्तोत्राणि प्रस्तावेतराणीति वा । सामयुक्त ऋक्शंसनरूपाणि । तेषु तैः । आत्मने यजमानाय । अन्नाद्यमुद्दिश्यागायेत् । यजमानो वायुत्वयोग्येनोद्गाने कृत आत्मनोन्नाद्यम भीप्सेदित्यर्थः । तस्मादु वायुपदयोग्यस्य समर्थत्वादेव । एवं वित् वायुपदयोग्यमाहात्म्यविद्यजमानः । यं कामं काम्यं कामयेत इच्छति । तं कामं प्रति । तेषु वायुपदयोग्येषूद्गातृषु सत्सु । वरं वृणीत वृङ् संभक्तौ संभजेत् । तेषु कामवरणममोघमेवेत्याह । स एषः मुख्यवायुत्वयोग्यः । उद्गाता सन् आत्मने यजमानाय वा यं कामं कामयते तमागायति तं प्राप्नोत्येवेति । न केवलमैहिकं किंतु तद्धैतल्लोकजिदेव तस्मादुद्गातुस्सकाशात्प्रसिद्धपरलोकप्राप्तिमानेव भवतीत्यर्थः । योधिकारी । एवं उक्तदिशा । एतत् अर्धनारी पुमात्मत्वादिमाहिमयुक्तं । साम सामनामकं वायुं । वेद तस्यालोक्यतायाः लोकराहित्यतायाः । आशा नैवास्ति । ह । तस्येष्टलोकराहित्यायाशा शत्रुणा न कार्येत्यर्थः ॥ ३ ॥ ३ ॥ २८ ॥ **तृतीयमुद्गीथब्राह्मणं** ॥ छ ॥ सोकामयत भूयस

यज्ञेनेत्यत्र प्रकृतस्य ब्रह्मणो महिमानमाह ॥ आत्मेत्यादिना । इदमग्रे अस्य जगतोग्रे । आत्मैव परमात्मैवासीत् । नैवेह किंच. नेत्यत्रेवात्रैवकाराभिप्रायो ज्ञेयः । तत आत्मनः पुरुषविधः पुरुषो विष्णुस्तद्विधः तत्प्रकारो ब्रह्माऽऽसीदित्यनुषंगः । पुरुषविधत्वं तु श्रीब्रह्मादितो विष्णोराधिक्यमिव रुद्रादितोप्याधिक्यमस्तीति भावेनेति ज्ञेयं । सः ब्रह्मा । सर्वा दिशोनुवीक्ष्य दृष्ट्वा । आत्मनः स्वस्मादन्यन्नापश्यत् । सः अन्यदपश्यन् ब्रह्मा । अन्यस्य सर्वस्य हातुं शक्यत्वेपि न स्वरूपस्य तथात्वमिति स्वस्वरूपस्य स्वाहेयत्वं

आत्मैवेदमग्रआसीत्पुरुषविधः सोनुवीक्ष्यनान्यदात्मनोपश्यत्सोहमस्मीत्यग्रेव्याहरत्ततोहं नामाभवत्तस्मादप्येतर्ह्यामंत्रितोहमयमित्येवाग्रउक्त्वाथान्यन्नामप्रब्रूतेयदस्यभवतिसयत्पूर्वो स्मात्सर्वस्मात्सर्वान्पाप्मनऔषत्तस्मात्पुरुषओषातिहवैसतंयोस्मात्पूर्वोबुभूषतियएवंवेद ॥ १ ॥

स्मरन्नहमस्मीत्यग्रे व्याहरत् । ततस्तथाव्याहरणाद्धेतोः । अहं नामाभवत् । स इत्यर्थः । तस्मात् ब्रह्मणाग्रेऽहमिति व्याहरणादेव । एतर्ह्यपि इदानीमपि । आमंत्रितः कस्त्वमरे इति संबोधितः । अहमयमित्यादावुक्त्वा । अथ अनंतरं । यदस्य भवति तत् डित्थादिनाम प्रब्रूते । न केवलमहं नामाभूद्ब्रह्मा किंतु पुरुषनामा चाभूदिति भावेन तन्नाम तस्मिन्निर्वक्ति ॥ स इति । स ब्रह्मा । अस्मात्सर्वस्मात् । सर्वजगतो यद्यस्मात्पूर्वस्सन् सर्वान् पाप्मन औषत् अदहत् । तस्मात्पुरुषनामाभवदित्यर्थः । उष दाहे । पुरूणि पापानि ओषति दहतीति पुरुषः । य एवं पुरुषविधं ब्रह्माणं वेद । सः ज्ञानी । अस्मात् ज्ञानिजनात् । यः पूर्वस्सन्बुभूषति

स्वाभिमतं पूर्वं प्राप्तुमिच्छति । तं ओषति दहतीत्यर्थः ॥ ३ ॥ ४ ॥ १ ॥ सः ब्रह्मा । एकाकित्वादबिभेत् भीतिमानभवत् । तस्मादिदानींतनोऽप्येकाकी बिभेति । सोयं भीतो ब्रह्मा । ईक्षां विमर्शं चक्रे । ह किल । विमर्शप्रकारमेवाह ॥ यदिति । यत् यस्मात् । मदन्यत् । मम विरोधिभूतमन्यत् । नास्ति । हरेस्सत्त्वेपि तस्यातिप्रियत्वात् । रुद्रादिजगत इतः परं मयैव सृज्यत्वात् ।

सोबिभेत्तस्मादेकाकीबिभेतिसहायमीक्षांचक्रेयन्मदन्यन्नास्तिकस्मान्नुबिभेमीतिततएवास्य
भयंवीयायकस्माद्ध्यभेष्यद्द्वितीयाद्वैभयंभवति ॥ २ ॥
सवैनैवरेमेतस्मादेकाकीनरमते सद्वितीयमैच्छत्सहैतावानासयथास्त्रीपुमांसौसंपरिष्वक्तौ
सइममेवात्मानंद्वेधाऽपातयत्ततःपतिश्चपत्नीचाभवतांतस्मादिदमर्धबृगळमिवस्वइतिहस्माहया
ज्ञवल्क्यस्तस्मादयमाकाशःस्त्रियापूर्यतएवतांसमभवत्ततोमनुष्याअजायंत ॥ ३ ॥

अतः कस्माद्धेतोर्नु इदानीं बिभेमीति । तत एव विमर्शादेव भयं वीयाय अपजगाम । वेदपुरुषस्तत्र युक्तिमाह ॥ कस्मादिति । कुतः कारणादभेष्यत् अबिभेत् । द्वितीयात् विरोधिनोऽन्यस्माद्भयं भवति । वै खलु । न ह्यस्य विरोध्यस्तीति ॥ ३ ॥ ४ ॥ २ ॥ वाण्युत्पत्तिमुपोद्घातपूर्वकमाह ॥ स इति । सः ब्रह्मा एकाकित्वान्नैव रेमे । तस्मात् एकाकिनो रमणाभावात् । स ब्रह्मा । द्वितीयं पत्न्याख्यं वस्तु । स्त्रीपुमांसौ ब्रह्माणीब्रह्माणौ । संपरिष्वक्तौ आलिंगितौ । यथा यावत्परिमाणौ भवतः । एतावान् तादृशपरिमाण

देहवानास । ह किल । स ब्रह्मा । इममेवात्मानं स्थूलतां प्राप्तमेव देहं । द्वेधाऽपातयत् द्विधा कृत्वा पतितमकरोत् । ततः पातनाद्धं तोः ब्रह्मब्रह्माण्यौ पतिश्च पत्नी चेति नामानावभवतां । तस्मात् अनयोरेकदेहविभक्तदेहवत्वात् इदं देहद्वयजन्यं स्वः सुखं । अर्धबृगळमिव एकपात्रार्धद्वयस्थितघृतवत् । इति याज्ञवल्क्य आह स्मेति कण्वो वक्तीति ज्ञेयं । तस्मादित्युक्त्या यस्मादिति ज्ञेयं । यस्मादयमाकाशोवकाशः । स्त्रिया पूर्यते । अनेकप्रजाजननेनेति भावः । तस्मात्तां प्रजोत्पत्तये समभवत् तया संभोगमकरोत् । ततः

सोहेयमीक्षांचक्रेकथंनुमात्मनएवजनयित्वासंभवतिहंतातिरोसानीतिसागौरभवदृषभइतर
स्ताꣳसमेवाभवत्ततोगावोऽजायंतवडवेतराभवदश्ववृषइतरोगर्दभीतरागर्दभइतरस्ताꣳसमे
वाभवत्ततएकशफमजायताऽजेतराऽभवद्बस्तइतरोऽविरितरामेषइतरस्ताꣳसमेवाभवत्ततो
ऽजावयोऽजायंतैवमेवयदिदं किंचमिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥

संभोगानंतरं । मनुष्याः मनु अवबोधने । तत उष्यप्रत्ययः । बोधप्रधाना देवाद्या अजायंत ॥ ३ ॥ ४ ॥ ३ ॥ आख्यायिकापूर्वं तिर्यगादिसृष्टिमाह ॥ सो हेति । सा उ ह इयमिति विभागः । सेयं ब्रह्मसृष्टा ब्रह्मानुभूता वाणी ईक्षांचक्रे व्यचारयद्ध । कथं मा मां । आत्मन एव (स्वस्मादेव) जनयित्वा ब्रह्मा कथमिदानीं संभवति अनुभवति हंत आश्चर्यं । तिरोसानि तिरोभवानी तीक्षांचक्र इत्यन्वयः । अत्र तात्पर्यं सर्वज्ञापि तु सा देवीत्यादिना स्त्रीस्वभावं दर्शयंती साऽधर्ममिव चैक्षत । नानासृष्टिप्रसिद्ध्यर्थं

मित्यनेन भाष्येण व्यक्तं । सा गौरभवदित्यादि तु व्यक्तं । इतरो ब्रह्मा । तां समेव तामेव । समभवदित्यर्थः । अश्ववृषोऽश्वश्रेष्ठः तां समेवाभवदित्यनुपज्यते । एकशफत्वैकजात्याक्रांतसृष्ट्युक्त्यै द्वयोक्त्यनंतरं तां समेवेत्युक्तिः । एवमजेत्यत्रापि ज्ञेयं । आपिपीलिकाभ्यो मिथुनं मिथुनीभावयोग्यं । यदिदं किंच जगदस्ति । तत्सर्वं एवमुक्तप्रकारेण । तत्तन्मिथुनभावोपगमेनासृजत ॥३॥४॥४॥ सः ब्रह्मा । अवेत् व्यजानात् । कथं अहं वाव अहं खलु । सृष्टिः सृष्टिनामास्मि । हि यस्मात् । इदं सर्वमापिपीलिकांतं ।

सोवेदहंवावसृष्टिरस्म्यहꣳहीदꣳसर्वमसृक्षीतिततःसृष्टिरभवत्सृष्ट्याꣳहास्यैतस्यांभवतियएवंवेद ॥५॥

अहं सर्वमसृक्षि सृष्टवानिति योजना । सृजतेः क्तिच् क्तौ च संज्ञायामिति कर्तरि क्तिच् प्रत्यये सृष्टिरिति सिद्धेः । इति हेतोः सृष्टिरस्मीत्यवेत् । यत एवमवेत् ततस्सृष्टिनामाभवदिति वेदपुरुषवचनं । योधिकारी एवं सर्वसर्जनहेतुना सृष्टिनामानं ब्रह्माणं । वेद जानाति । सः अस्य ब्रह्मणः एतस्यां सृष्ट्यां रुद्रादिपिपीलिकांतसृष्टौ । भवति । साक्षाद्ब्रह्मसृष्टानां मध्ये स्वयोग्यतानुरोधेन, तत्पुत्रो भवतीत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ भोक्तृसृष्टिमुक्त्वा पाचकाग्निसृष्टिमाह ॥ अथेति । भोक्तृसृष्ट्यनंतरं इति अन्नादमन्नं.

च सृजामीत्यचिंतयदितीति शब्दार्थः । ततः किमकरोदित्यत आह ॥ अभ्यमंथदिति । ओष्ठद्वयं हस्तद्वयं च परस्परं मथितमकरोदिति योज्यं । स ब्रह्मा मुखात् मुखरूपाद्योनेः कारणात् मथितहस्ताभ्यां चाग्निमसृजत । ततोऽग्निजन्मयोनित्वादेतदुभयं ओष्ठद्वयं हस्तद्वयं च । अंतरतोऽलोमकं । तावताऽलोमकता कुतः । हि यतो योनिरंतरतो लोमकालोके दृष्टा अत इति । ब्रह्मणो जगत्स्रष्टृत्वं न स्वसामर्थ्यात् किंतु भगवत्प्रसादादित्याह ॥ तद्यदिदमिति । एकैकं देवमुद्दिश्यामुं रुद्रं यजामुमिंद्रं यजेति यत्

अथेत्यभ्यमंथत्समुखाच्चयोनेर्हस्ताभ्यांचाग्निमसृजततस्मादेतदुभयमलोमकमंतरतोऽलोमकाहियो निरंतरतस्तद्यदिदमाहुरमुंयजामुंयजेत्येकैकंदेवमेतस्यैवसाविसृष्टिरेषउह्येवसर्वेदेवाअथयत्किंचे दमार्द्रंतद्रेतसोसृजततदुसोमएतावद्वाइदमन्नंचैवान्नादश्चसोमएवान्नमग्निरन्नादःसैषाब्रह्मणोति सृष्टिर्यच्छ्रेयसोदेवानसृजताथयन्मर्त्यःसन्नमृतानसृजततस्मादतिसृष्टिरतिसृष्ट्यांहास्यैतस्यांभ वतियएवंवेद ॥ ६ ॥ प्राजापत्यब्राह्मणं ॥ ॥

सा विसृष्टिः प्रेषोक्तिस्तस्यैव ब्रह्मण एव । कुतः । हि यस्मादेष ब्रह्मैव सर्वे देवाः सर्वदेवानां हेतुतया स्वामित्वेन च सर्वे देवा इत्युक्त इति यदाहुर्वेदविदः इदं तत् तस्मादीश्वरप्रसादादिति योजना । अन्नसृष्टिमाह ॥ अथेति । अथ पाचकाग्निसृष्ट्यनंतरं यत्किंचेदमार्द्रं द्रवात्मकमन्नं । तद्रेतसोसृजत तदार्द्रं । सोम उ । सोमाभिमन्यमानमेव । पाच्यपाचकप्रजानां सृष्ट्युक्त्या सर्वं

सृष्टमासीदित्याह ॥ एतावदिति । अन्नं चान्नादश्च प्रजाश्चेत्युपलक्ष्यंत इति यत् इदमेतावद्वै एतावदेव खलु सृज्यमित्यर्थः । अन्नमन्नादः क इत्यत आह ॥ सोम एवान्नमग्निरन्नाद इति । अन्नशब्दितार्द्रवस्तुनो नार्द्रतया पचनकर्तेत्यर्थः । जाठराग्न्यभिप्रायेण वेयमुक्तिः । ब्रह्मकर्तृका देवादिसृष्टिर्न केवलं सृष्टिमात्रं किंत्वतिसृष्टिरपीत्याह ॥ सैषेति । ब्रह्मणो ब्रह्मसंबंधिनी सैषा सृष्टिरतिसृष्टिः । स्वस्वरूपातिक्रांतसृष्टिः । कथं । यद्यस्माच्छ्रेयसस्स्वस्मादुत्तमान्देवानसृजत अत इति योज्यं । देवानां विरिंचादुत्तमत्वं तस्यावमत्वं वा कथमिति पृच्छति ॥ अथेति । उत्तरमाह ॥ यदिति । यद्यस्मान्मर्त्यः सन् अल्पायुष्ट्वादिमर्त्यधर्मोपेतस्सन् ।

**तद्धेदंतर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेवव्याक्रियताऽसौनामायमिदंरूपइतितदिदमप्येतर्हि नामरूपाभ्यामेवव्याक्रियतेऽसौनामायमिदंरूपइतिसएषइहप्रविष्टआनखाग्रेभ्योयथाक्षुरःक्षुरधानेऽवहितःस्याद्विश्वंभरोवाविश्वंभरकुलायेतंनपश्यंत्यकृत्स्नोहिसप्राणन्नेवप्राणोनामाभवति ।**

वयोमात्राधिकान् अमृतान् देवानसृजत । तस्मादतिसृष्टिरासीदित्यर्थः । पुरुषाकारतानंतरमल्पकालेनैव वृषभाद्याकारत्वमाप्तवानिति कृत्वा मर्त्यधर्मत्वमस्य ज्ञेयं । योग्यतया देवापेक्षया श्रेयानेवेति भावः । ज्ञातुः फलमाह ॥ अतीति । योधिकारी एवमुक्तरीत्या अतिसृष्टिं वेद सोस्य ब्रह्मण एतस्यामतिसृष्ट्यां देवसंबंधिसृष्ट्यां भवति देवलोके जायत इत्यर्थः ॥ ३ ॥ ४ ॥ ६ ॥ इति

प्राजापत्यब्राह्मणं ॥छ॥छ॥ आत्मैवेदमग्र आसीदित्यादिना प्रकृतस्यात्मन उपास्तिप्रकारमाह ॥ तद्धेदं तर्हीत्यादिना । तर्हि तदा प्रलयकाले । तदिदं प्रकृतं ब्रह्म । अव्याकृतं विकारशून्यमासीदित्येकोर्थः । अन्यस्तु । तदिदं जगदव्याकृतं कारणात्मकमासीत् । ह प्रसिद्धमिति । तद्ब्रह्म तदव्याकृतं जगत् । नामरूपाभ्यामेव व्याक्रियत विकृतमकरोत् । एव शब्देन तृतीयप्रकारं कारयति । कार्यात्मकमकरोत् । कथं । असौ नामा एतन्नामकः । इदं रूपः एतदाकारः इति । पदद्वयमपि ब्रहुव्रीहिः । असौ नामेत्यलुक् । अयं महदादिपदार्थ इति विशेष्यं ध्येयं । कथमेतज्ज्ञायत इत्यत आह ॥ तदिति । भगवताऽऽदिकाले नामरूपाभ्या

वदन्वाक्पश्यंश्चक्षुःशृण्वन्श्रोत्रंमन्वानोमनस्तान्यस्यैतानिकर्मनामान्येवसयोतएकैकमुपास्तेनस वेदाकृत्स्नोह्येषोतएकैकेनभवत्यात्मेत्येवोपासीतात्रह्येतेसर्वएकंभवंतितदेतत्पदनीयमस्यसर्वस्ययद यमात्मानेनह्येतत्सर्ववेदयथाहवैपदेनानुविंदेदेवंकीर्तिंश्लोकंविंदतेयएवंवेद ॥ १ ॥

मेव महदादिजगतस्तदभिमानिचेतनवर्गस्य च नामरूपाभ्यामेव व्याकृतत्वाद्धेतोः एतर्हि इदानीमपि इदं घटादि वस्तु पुत्रादिकं वा नामरूपाभ्यामेव व्याक्रियते । असौ नामेत्यादि प्राग्वत् । एतेन हरेरुपास्यत्वे सर्वजगद्धेतुत्वरूपहेतुरुक्तो ध्येयः । आत्मत्वोपासनाप्रशंसार्थं प्राणनाद्युपासनानिंदारूपमर्थवादमुपोद्धातपूर्वकमाह ॥ स इति । स एष जगत्कर्ता हरिः । इह स्वसृष्टब्रह्मादिदेहेषु । आनखाग्रेभ्यः केशादारभ्य नखाग्रपर्यंतं । प्रविष्टः । तत्र दृष्टांतः । यथा क्षुरः क्षुरधाने क्षुरकोशे । विश्वंभरो वायुः । विश्वंभर

कुलाये वाग्व्यावासस्थानभूते देहादाववहितः प्रविष्टस्स्यात्तथेति योज्यं । तं स्वदेहे प्रविष्टमपि । न पश्यंति पामरा इति योज्यं । स प्रविष्टो हरिः । अकृत्स्नः अल्पगुणः हि भवति खलु । कुतोस्य प्रविष्टस्याकृत्स्नत्वमित्यतो व्यनक्ति ॥ प्राणन्नेवेत्यादिना । प्राणन्नेव श्वासव्यापारं कुर्वन्नेव । प्राणः प्राणनामा । भवति । नाम प्रसिद्धं । एवमग्रेपि वचनादिव्यापारं कुर्वन्वागादिनामको भवतीति ज्ञेयं । एतानि प्राणादिनामानि । अस्य देहं प्रविष्टस्य हरेः । कर्मनामानि एकैकक्रियानिमित्तकानि । तन्मात्रप्रत्यायकानि । न त्वशेषगुणवाचीनीति यावत् । तावता कुतो कृत्स्नत्वमित्यतः स्वस्वाभिमतज्ञानानंदादिकृत्स्नफलादात्रुपास्तिविषयत्वादकृत्स्न विषयत्वमित्याह ॥ स योत इति । अत इति सप्तम्यर्थे तसिः । एतेषु प्राणनादिषु । स प्रसिद्धो योधिकारी । एकैकमुपास्ते स न वेद न जानाति । सर्वगुणपूर्णत्वाज्ञानादित्याह ॥ अकृत्स्नो हीति । एष उपासकः । अतः एषु प्राणनादिषु । एकैकेनोपासितेन । अकृत्स्नो भवति स्वाभिमतसच्चिदानंदत्वादिरूपफलावाप्तिमान्न भवति । हि यस्मात् । तस्मादिति योज्यं । कथं तर्ह्युपास्यमित्यत आह ॥ आत्मेत्येवेति । तत्र हेतुः ॥ अत्र ह्येते सर्व एकं भवंतीति । अत्र आत्मशब्दार्थे । एते बुद्धिस्थाः ज्ञानानंदादयः । प्रागुक्तप्राणनादयश्च एकं भवंति । अंतर्भवंति हि । यतोत इति । अत्रावधारणयुक्तात्मशब्दार्थोपासनाविधिः सर्वगुणोपसंहारकारः आत्मेत्युपासीतैवेति आत्मत्वायोगव्यवच्छेदपरो ध्येयः । यथोक्तं सर्वोपसंहारनये अन्यथात्वं शब्दादिति चेदिति सूत्रभाष्ये । आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थमिति । यद्वा यथाश्रुत एवैवकारोऽन्ययोगव्यवच्छेदपरस्सन्नात्मशब्दार्थे सर्वगुणांतर्भावे युक्तिसूचकः । अन्ययोगव्यवच्छेदावधारणयुक्तात्मशब्दार्थोपासनाविधिः सर्वगुणोपसंहर्तृब्रह्मादीनप्यधिकरोतीति

तैरप्यात्मपदोक्तमेवोपास्यं। तथाच यद्यसौ न तान्प्रति सर्वगुणानभिधत्ते तर्हि। गुणैस्सर्वैरुपास्योसौ ब्रह्मणेत्यादिसर्वगुणोप संहारवचनविरोधस्स्यात्। अतोसौ तेषां सर्वगुणाभिधायक इति। तदुक्तं सूत्रे अन्वयादितिचेत्स्यादवधारणादिति। तथा सच्चिदानंदादिचतुर्गुणोपासनाधिकारिणः प्रति तावत एव गुणान्वक्ति नेतरान्। तदाह आत्मगृहीतिरितरवदुत्तरादिति सूत्रे। यस्त्वात्मत्वरूपैकगुणोपासनाधिकारी तं प्रति तावन्मात्रमेव ततः प्रतिभाति नान्यत् इत्यन्ययोगव्यवच्छेदार्थ एवैवकारः। तदप्याह आत्मशब्दाच्चेति सूत्रे। आत्मशब्दस्य सर्वगुणाभिधायित्वेप्यात्मनस्सर्वगुणाभावे कथं तथोपास्तिरित्यत आह ॥ तदेतादिति। यदयमात्मा योयमात्मोपास्यत्वेनोक्तस्तदेतदात्मनो रूपं अस्यात्मशब्दार्थस्य गुणजातस्य। पदनीयं। आश्रयः। सर्वगुणवत्त्वं तस्य कुतस्सिद्धमित्यत आह ॥ अनेनेति। हि यस्मादनेनोपासितेन हरिणा एतत्स्वयोग्यं सर्वं वेद आनंदादिकं च प्राप्नोतीत्यपि ग्राह्यं। तस्मात्सर्वगुणाश्रय इति तदुपासनादेव सर्वज्ञत्वादयो गुणा भवंति किमु तस्येति भावः। ननूपासनाविधावात्मपदोक्तगुण जाते च तात्पर्ये गौरवं अन्यतरत्र तात्पर्येऽन्यतरासिद्धिरिति चेत्। उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च। उभयत्रापि तात्पर्यमात्मोपासादिके विधाविति हरिवंशवाक्यासिद्धतया गौरवस्यादोषत्वात् आत्मपदोक्तगुणजातविशिष्टात्मोपासनाविधानादवा क्यभेदाद्वेति। एतज्ज्ञानिनः फलमाह ॥ यथेति। पद्यते प्राप्यते फलमनेनेति पदं साधनं। तेन यथा तत्तत्साधनेन तत्तत्फलम नुविंदेत् प्राप्नुयात्। एवं विद्याधिकारी एवं सर्वगुणयुक्तमात्मानं वेद उपास्ते। स कीर्तिं यशः। श्लोकं शं च लोकं च श्लोकं।

एकवद्भावः । सुखं ज्ञानं च । लुक् प्रकाश इति धातोः । विंदते प्राप्नुयात् ॥ ३ ॥ ५ ॥ १ ॥ आत्मोपासनं प्रेमशब्दितभक्तियुक्तं चेत्पुमर्थहेतुरिति वक्तुं तस्मिन् प्रेमोत्पत्तये तस्य दारापत्यादितोपि सुखसाधनत्वेनातिप्रेमास्पदतामाह ॥ तदेतदिति । यदयमात्मा योयमात्मा आप्तगुणः । अंतरतरं सर्वांतर्विद्यमानं । तदेतदात्मनो रूपं पुत्रादितः सर्वस्मात्प्रेयः निरुपाधिकप्रेमास्पदमुत्तमानां । अन्येषां तु सुखसाधनत्वादिति भावः । आत्मनः प्रियतमत्वं समर्थयते ॥ स य इति । स यः यः कोपि विष्णुभक्तः । आत्मनो

तदेतत्प्रेयःपुत्रात्प्रेयोवित्तात्प्रेयोन्यस्मात्सर्वस्मादंतरतरंयदयमात्मासयोन्यमात्मनःप्रियंब्रुवाणं ब्रूयात्प्रियंरोत्स्यतीतीश्वरोहतथैवस्यादात्मानमेवप्रियमुपासीत सयआत्मानमेवप्रियमुपास्ते नहास्यप्रियंप्रमायुक्तंभवति ॥ २ ॥

हरेरन्यं प्रियं ब्रुवाणं दुर्जनं प्रति तव प्रियं सुखं रोत्स्यति नाशयति भगवानिति ब्रूयात् । एवं ब्रुवन् ईश्वरो ह । तत्सुखरोधने समर्थो ह निश्चयस्तस्मात्तथैव स्यात् । निरुद्धसुखवानेव स भवतीत्यर्थः । यदर्थं हरेः प्रियत्वमुक्तं तदाह ॥ आत्मानमेवेति । भगवंतमेव प्रियं उत्तमानां निरुपाधीष्टं । अन्येषामिष्टहेतुत्वेन प्रियं प्रीतिविषयोयमित्युपासीतेत्यर्थः । दारापत्यादेस्तत्संपर्कप्रयुक्त प्रियत्वकत्वेन स एव मुख्यप्रिय इत्यात्मानमेव प्रियमित्येवकारः । स प्रसिद्धो योधिकारीत्यर्थः । प्रमायुक्तं विनाशयुक्तं न

भवतीत्यर्थः ॥ ३ ॥ ५ ॥ २ ॥ भगवज्ज्ञानादेव नित्यप्रियप्राप्तिर्भवतीत्युक्तं । तदाक्षेपसमाधिभ्यां महद्भिः समर्थितमित्याह ॥
तदाहुरित्यादिना । ब्रह्मविद्यया सर्वमात्मयोग्यतापूर्तिं । भविष्यंतः प्राप्नुवंतो महांतः । ब्रह्मविद्ययैव स्वयोग्यं सर्वं प्राप्यत इति
यदाहुः नित्यनिर्दुःखानंदानुभवात्मकमुत्तमजीवस्वरूपमज्ञानतिरोहितं ब्रह्म विद्ययाऽभिव्यज्यत एवेति । पुंस्त्वादिवत्त्वस्य सतोभिव्य

तदाहुर्यद्ब्रह्मविद्ययासर्वंभविष्यंतोमनुष्यामन्यंतेकिमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ३ ॥
ब्रह्मवाइदमग्रआसीत्तदात्मानमेवावेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत्तद्योयोदेवानांप्रत्यबु
ध्यतसएवतदभवत्तथर्षीणांतथामनुष्याणांतद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदेअहंमनुरभवꣳसू
र्यश्चेतितदिदमप्येतर्हियएवंवेदाहंब्रह्मास्मीतिसइदꣳसर्वंभवतितस्यहनदेवाश्चनाभूत्याईशत
आत्माह्येषाꣳसभवत्यथयोऽन्यांदेवतामुपास्तेऽन्योसावन्योहमस्मीतिनसवेदयथापशुरेवꣳस
देवानांयथाहवैबहवःपशवोमनुष्यंभुंज्युरेवमेवैकःपुरुषोदेवान्भुनक्त्येकस्मिन्नेवपशावादीयमाने
प्रियंभवतिकिमुबहुषुतस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युः ॥ ४ ॥

क्तियोगात् विद्यैव तु निर्धारणादित्यादिना व्यासादयो महांतो यदाहुरित्यर्थः । तत् तत्र । तस्मिन्नर्थे । केचिन्मनुष्या मन्यंते ।
कथं । स्वरूपमपि ब्रह्मविद्ययाभिव्यज्यते चेत् । तद्ब्रह्म । यस्मात्सर्वं पूर्णमभवत् । तत् तस्माद्ब्रह्मापि स्वस्वरूपमवेत्किमु । इति
मन्यंत इत्यन्वयः ॥ ३ ॥ ५ ॥ ३ ॥ त्वया पृष्टं सत्यं ब्रह्माप्यनादिनित्यापरोक्षज्ञानेन स्वस्वरूपं सदा जानात्येवेति हेतोस्सदा

परिपूर्णमभवदिति भावेन परिहरति ॥ ब्रह्म वा इति । इदमग्रे अस्य जगतः पूर्वं । ब्रह्मैवासीत् । तद्ब्रह्म । अहेयं सर्वनियंतृतया सर्वगतत्वेन च केनापि हातुमशक्यं ब्रह्म पूर्णं अस्मि अस्तीति मेयं ज्ञेयं । इत्यात्मानमेवावेत् व्यजानात् । स्वस्मादन्यस्य पूर्णस्य ब्रह्मणोऽभावेन स्वस्यैव पूर्णब्रह्मत्वादिति भावेन स्वात्मानमेवेत्येव शब्दः । तस्माद्ब्रह्मस्वरूपज्ञत्वादेव । तद्ब्रह्म । सर्वं पूर्णमभवत् । अत्रासीदवेदभवदित्यनद्यतनरूपकालविशेषवाचि लङ्प्रयोगेऽपि आत्मा वा इदमेक एवाग्र आसीत् । सदेव सोम्येदमग्र आसीदित्यादौ यथा सत्त्वमनाद्यनंतकालीनमित्युपेयते त्रिकालवाचिनो लकारस्य कस्यचिदभावेन येन केनचिल्लकारेण निर्देशेऽपि न तत्र विवक्षेति । एवं स्वरूपवेदनपूर्णताभवनयोरप्यनाद्यनंतकालीनत्वमेवेति भावः । अत एव तदात्मानमेवेत्यादिनैव परिहारप्राप्तावासीदित्यंतोक्तिः । यद्वा ब्रह्म अग्रे अनादिकाल एव । आत्मानं स्वस्वरूपमवेदित्यपि योजनया अनादिकालतस्सत्वमिवात्मनः स्थितिमपि जानातीत्यर्थसूचनाय ब्रह्म वा इत्याद्यंशोक्तिः । अन्येष्वेवं ज्ञात्वा स्वयोग्यपूर्तिमंतोभवन्नित्याह ॥ तद्य इति । देवानां मध्ये यो यो देवः । तत् अहेयत्वादिगुणं ब्रह्म । यथा प्रत्यबुध्यत । स एव तज्ज्ञानानुसारेण तत्सर्वं समग्रं स्वयोग्यानंदादिपूर्णत्वमभवत् । प्राप्नोत् । तथैति समुच्चये । ऋषीणां मध्ये तद्यो यः प्रत्यबुध्यत मनुष्याणां मध्ये च यो यस्तत्प्रत्यबुध्यत स एव तदभवदिति योजना । प्राग्वदस्यार्थः । उपनिषत् स्वोक्तार्थे प्रमाणमाह ॥ तद्धेति । तदेतद्ब्रह्म पश्यन्वामदेव ऋषिः मंत्रदर्शी । अहं मनुरभवं सूर्यश्चेत्यादि मंत्रं प्रतिपेदे । मनुसूर्यादिभिः ब्रह्मणोहेयत्वमहं मनुरित्यादिमंत्रतात्पर्यार्थतया व्यजानादित्यर्थः । मंत्राक्षरार्थस्तु । वामदेवः स्वात्मनो ब्रह्मचित्संवलनेन चिद्द्वयं संपिंडितं अहं पदं मुख्यामुख्यवृत्त्या वक्तीति मुख्यार्थमंतर्यामिणमहं पदार्थमुद्दिश्य मन्वाद्यंतर्यामित्वेन

मन्वादिभिरहेयो मन्वादिशब्दवाच्यो योस्ति सोस्मीति मत्वा। तदंतर्यामिणः स्वांतर्यामिणश्चाभेदविवक्षया अहं मनुरभवमित्यादि रूपेणाहेति ध्येयः। तदाह सूत्रे। शास्त्रदृष्ट्या तूपदेशो वामदेववदिति। ब्रह्मविद्यया स्वयोग्यफलप्राप्तिरद्यतनानामप्यस्तीत्याह॥ तदिदमिति। तदिदं ब्रह्म। एतर्ह्यपि इदानीमपि। योधिकारी। अहं ब्रह्मास्मीत्येवमहेयत्वपूर्णत्वास्तीति मेयत्वगुणकमित्येवं प्रकारेण वेद। तथा एवमित्यस्य तु अहं ब्रह्मास्मीति तदात्मानमवेदित्येवं प्रकारेण च यो वेदेत्यर्थः। सः ज्ञानी इदं स्वयोग्यं। सर्वं समग्रं। आनंदादिपूर्णो भवतीति। तस्य ज्ञानिनो देवादिभिरपि श्रेयःप्रतिबंधो नेति महिमानमाह॥ तस्य हेति। तस्य ज्ञानिनो देवाश्च न देवा अपि। अभूत्यै विद्याफलविघाताय। नेशते तद्विघातं न कुर्वंतीत्यर्थः। अशक्त्या न कुर्वंति किमित्यतो नेत्याह॥ आत्मेति। सः ज्ञानिप्रियो हरिः। एषां देवानामात्मा कार्येषु नियोक्तृत्वेन तेषु व्याप्ततया स्थितत्वेन स्वामी। भवति यस्मात्तस्माद्भगवत्प्रिये ज्ञानिनि विघातं श्रेयसो न कुर्वंति। तत्प्रियस्यात्मनोपि प्रियत्वादिति भावः। तदिदमिति निर्दिष्टस्यापि भगवतो विधेयात्मापेक्षया स इति पुल्लिंगनिर्देशः। एवं सम्यक्ज्ञानिमाहात्म्यमुक्त्वाऽन्यथाज्ञानिनो निंदामाह॥ अथेति। अथांतरे। यः। अन्यां सर्वजीवविलक्षणां अहेयत्वादिगुणैर्भिन्नां वा। विष्णुरूपदेवतां अन्योसौ विष्णुः। अहमस्मीत्यहेयत्वादिगुणविशिष्टोन्यो न विष्णुरित्युपास्ते। स न वेद न जानातीशस्वरूपं यथा मनुष्योपभोजकः पशुरिति। यद्वा अहमस्मीति पदद्वयोक्तगुणविशिष्टोन्यः अन्यश्चासौ विष्णुरिति मत्वा योऽन्यां विष्णुभिन्नां देवतामुपास्ते स न वेदेति। आत्मा ह्येषामित्युक्तं देवप्रियत्वं ज्ञानिनो व्यक्तमाह॥ एवमिति। सः तदिदमप्येतर्हि य एवं वेदेति पूर्वत्र प्रकृतो ज्ञानी। एवं देवानां पशुः। देवोपभोजकपशुरिव तेषां प्रिय इत्यर्थः। तदेव

व्यनक्ति ॥ यथेति । यथा बहवो गोरूपाः पशवः क्षीरादिना मनुष्यं भुंज्युः भोजयेयुः । ह वै प्रसिद्धं । एवमेकैको ज्ञानिपुरुषः देवान्भुनक्ति भोजयति । प्रीणयतीति यावत् । देवप्रीतिकरत्वं ज्ञानिनः कुत इत्यत आह ॥ एकस्मिन्निति । लोके एकस्मिन् भोजके पशावादीयमाने प्रियं भवति । किमु बहुषु । तस्माद्बहुगोपशुतुल्यतया भोजको ज्ञानी देवानां प्रीतिविषयो भवतीति किमु वाच्यमिति भावः । अथ योन्यामित्यादिनोक्तार्थज्ञानिनो निंद्यत्वादेव तथा न ज्ञेयं न । किंतु तथा ज्ञानस्य देवाप्रियत्वाच्चेत्याह ॥ तस्मादिति । तत्त्वज्ञा

ब्रह्मवाइदमग्रआसीदेकमेवतदेकꣳसन्नव्यभवत्तच्छ्रेयोरूपमत्यसृजतक्षत्त्रंयान्येतानिदेवत्राक्षत्त्राणींद्रोवरुणःसोमोरुद्रःपर्जन्योयमोमृत्युरीशानइतितस्मात्क्षत्त्रात्परंनास्तितस्माद्ब्राह्मणःक्षत्रियमधस्तादुपास्तेराजसूयेक्षत्त्रएवतद्यशोदधातिसैषाक्षत्त्रस्ययोनिर्यद्ब्रह्मतस्माद्यद्यपिराजापरमतांगच्छतिब्रह्मैवांततउपनिःश्रयतिस्वांयोनिंयउएनꣳहिनस्तिस्वाꣳसयोनिमृच्छतिसपापीयान्भवतियथाश्रेयाꣳसꣳहिꣳसित्वा ॥ ५ ॥

नस्यैव देवानां प्रियत्वात् । एषां देवानां । तन्न प्रियं । मनुष्याः विष्णोरन्यां देवतामहेयत्वादिगुणविशिष्टां विष्णुरिति यदेतत् तदिति योजना ॥३॥५॥४॥ पूर्वं सा गौरभवत् वृषभ इतर इत्यादिना ब्रह्मा सर्वमसृजदित्युक्तं । इदानीं वर्णसृष्टिमाह ॥ ब्रह्म वा इति । इदमस्य जगतः अग्रे । ब्रह्म चतुर्मुख आसीत् । चतुर्मुखो ब्राह्मणजातिस्सन् विष्णोरुदपद्यत पूर्वमित्यर्थः । तत् चतुर्मुखाख्यं ब्रह्म । एकमसहायं

सत् न व्यभवत्। परिवारविशिष्टं नाभवत्। तच्चतुर्मुखाख्यं ब्रह्म आत्मनः परिवारमिच्छत् श्रेयोरूपं सर्वजात्युत्तमरूपं। क्षत्रं क्षत्रजातिं। अत्यसृजत ससर्ज। तद्व्यनक्ति॥ यानीति। देवत्रा देवानां मध्ये। यान्येतानि क्षत्राणि। इंद्रः इंद्रशब्दितो गरुडः। सोमपदेन तत्समसख्योपि ग्राह्यः। रुद्रः सदाशिवः। पर्जन्यशब्दितोत्र शक्रः। कामश्चाप्युपलक्ष्यते। मृत्युपदेन शेषो ग्राह्यः। ईशानो वायुः। इति शब्दस्य इत्येतानि यानि तत्क्षत्रं श्रेयोरूपमसृजतेत्यन्वयः। तस्मात् क्षत्रस्य श्रेयोरूपत्वात्। क्षत्रात् क्षत्रजातेः। परमुत्तमं। नास्ति। तस्मात्क्षत्रजातेरुत्तमत्वादेव। ब्राह्मणः अधस्तादधोदेशे स्थितस्सन् राजसूये क्षत्रियं सिंहासनस्थं राजानमुपास्ते। किमर्थमित्यत आह॥ क्षत्र एवेति। ब्राह्मण इत्यनुषज्यते। ब्राह्मणस्तत् तेनाधस्तादुपासनेन यशः क्षत्रिय एव दधाति स्थापयतीति। तस्मिन्यशो दातुं स्वयमुत्तमोपि संस्तथोपास्त इत्यर्थः। उत्तमस्सन्निति कुतः। नीचत्वादेव तथोपास्त इति किं नेत्यत आह॥ सैषेति। यद्यपि राजा राजसूयकर्तृत्वनिमित्तेन परमतां गच्छाति। तथापि यद्ब्रह्म यो ब्राह्मणः। सैषा स एष ब्राह्मणः। क्षत्रियस्य योनिः तत्त्वोपदेशादिना कारणं। गुरुरिति यावत्। तस्मात् ब्राह्मणस्य गुरुत्वादेव। अंततो राजसूयांते राजा स्वां योनिं स्वगुरुभूतं। ब्रह्मैव ब्राह्मणमेव। उपनिःश्रयाति वंदयीत। हेत्वंतरेणापि ब्राह्मणः क्षत्रियादुत्तम इत्याह॥ य इति। य उ य एव क्षत्रियः। एनं ब्राह्मणं। हिनस्ति हंति। स स्वां योनिं स्वपितरं। ऋच्छति विनाशयति। (ऋच्छ गतींद्रियप्रलयेष्विति धातुः) साक्षात्पितरि जीवति कथं पितृहंतेत्यतस्तत्समदोषवान्भवतीति भावेनाह॥ स पापीयान्भवतीति। यथा श्रेयांसं गुणाधिकं स्वपितरं। हिंसित्वा पापी

यान्भवति तादृशपापवान्भवतीत्यर्थः ॥ ३ ॥ ५ ॥ ५ ॥ क्षत्रियदेवोत्पत्त्यनंतरमुपोद्घातपूर्वं विशां सृष्टिमाह ॥ स इत्यादिना । स चतुर्मुखः । नैव व्यभवत् कांक्षितपरिवारविशिष्टो नाभवत् । सोनेकपरिवारेच्छावान् ब्रह्मा । विशमसृजत । तदेव व्यक्तिनिर्देशेन दर्शयति ॥ यान्येतानीति । यान्येतानि देवजातानि । गणशः संघशः । आख्यायंते । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति शस् । तान् गणानाह ॥ वसव इत्यादिना । वसवोग्निव्यतिरिक्तास्सप्त ज्ञेयाः । अग्नेर्ब्राह्मणत्वात् । सदाशिवस्य क्षत्रियत्वात्तदन्ये दश रुद्रा रुद्रपदेनात्र ग्राह्याः । विवस्वदिंद्रवरुणविष्णुभिन्ना अष्टावादित्या अत्र ग्राह्याः । विवस्वदादित्रयस्य क्षत्रियत्वात्

सनैवव्यभवत्सविशमसृजतयान्येतानिदेवजातानिगणशआख्यायंतेवसवोरुद्राआदित्यावि
श्वेदेवामरुतइति ॥ ६ ॥ सनैवव्यभवत्सशौद्रंवर्णमसृजतपूषणमियंवैपूषेयꣳहीदꣳसर्वंपुष्य
तियदिदंकिंच ॥ ७ ॥

विष्णोस्त्ववर्णत्वात् । विश्वे देवा दश । मरुतो मुख्यवायुभिन्ना एकोनपंचाशत् । तस्य क्षत्रत्वात् । इति गणश आख्यायंते । तद्रूपाविशमसृजतेति योजना ॥ ३ ॥ ५ ॥ ६ ॥ उपोद्घातपूर्वं शूद्रसृष्टिमाह ॥ स इति । सः जातित्रयाक्रांतदेवस्रष्टा चतुर्मुखः । न व्यभवत् विवक्षितपरिवारविशिष्टो नाभवत् । स एवंभूतो ब्रह्मा शौद्रं शूद्रसंबंधि । वर्णमसृजत । तत्किमित्यत उक्तं ॥ पूषणमिति । तद्व्यनक्ति ॥ इयं वै पूषेति । पृथिवी पूषेत्यर्थः । केन हेतुनेत्यत आह ॥ इयं हीति । इयं पृथिवी । यदिदं किंच इदं सर्वं

पुष्यति पोषयति । हि यतांत इति योजना । अश्विनौ पृथिवी चैव कालमृत्यव एव च । शूद्रदेवा इति भाष्यदिशाऽन्येऽप्यत्र ग्राह्याः ॥ ३ ॥ ५ ॥ ७ ॥ जगद्धारकमोचकाख्यवायुरूपांतरसृष्टिमाह ॥ स इत्यादिना । स चतुर्वर्णस्रष्टा ब्रह्मा । न व्यभवत् विवक्षितजनविशिष्टो नाभवत् । स्वस्य स्रष्टृत्वात्स्रष्टानां चतुर्वर्णदेवानां पालकत्वात् सृष्टजगतो धारणमोचनदक्षेण युक्तो नाभवत् । ततश्च तादृशेन भाव्यमित्यालोच्य तत् चतुर्मुखाख्यं ब्रह्म । श्रेयोरूपं सर्वश्रेष्ठं । धर्मं जगद्धारकं । श्रेयोरूपं मोक्षसाधनभूतं । धर्मं भक्त्यादिभगवद्धर्माभिमानिनमिति वा । वायो रूपांतरं । अत्यसृजत । शेषादावविद्यमानं धारकत्वादिकं वायोरेव कुत इत्यतो

सनैवव्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयांसमाशंसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदंतमाहुर्धर्मं वदतीति धर्मं वा वदंतं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ ८ ॥

धारकत्वं तावदुपपादयति ॥ तदेतदिति । वायो रूपं क्षत्रस्य शेषादेः । क्षत्रं स्वामि । यद्यस्मात्तस्माद्वायोः परं विष्णुमृते नास्ति। अतो युक्तं धारकत्वं तस्येति । इदानीं मोचकत्वं तस्योपपादयति ॥ अथो इति । अथो तस्मात् । अबलीयान् स्वयमेव विष्णुं प्रतिगंतुमसमर्थो धर्मेण विष्णुभक्त्यादिधर्माभिमानिना वायुरूपेण बलीयांसं विष्णुं प्राप्तुमाशंसते इच्छति । तत्र दृष्टांतः ॥ यथेति । यथैतद्व्यक्तं तथोच्यत इत्यर्थः । तदाह ॥ राज्ञेति । लोके कश्चिदबलीयान्महाराजं गंतुमसमर्थो । राज्ञा युवराजेन बलीयांसं ।

४ **

महाराजं गंतुमाशंसते एवमिति । धर्ममानिनो वायो रूपांतरमाह ॥ यो वै स धर्मस्सत्यं वै तदिति । एतद्रूपं सत्यं वै सत्याभिमानि वै । तस्मात् उभयाभिमानिनोरेकत्वात् । सत्यं वदंतं धर्मं वदतीत्याहुर्लौकिका वैदिकाश्च । धर्मं वा वदंतं सत्यं वदतीति । एतद्ध्येव वायो रूपं एतदुभयं धर्मसत्यरूपोभयमानि भवतीत्यर्थः ॥ ३ ॥ ५ ॥ ८ ॥ प्रागुक्तब्राह्मणादिवर्णेषु श्रेष्ठानां ब्रह्मादीनामग्न्या

तदेतद्ब्रह्मक्षत्रंविट्शूद्रस्तदग्निनैवदेवेषुब्रह्माभवद्ब्राह्मणोमनुष्येषुक्षत्रियेणक्षत्रियोवैश्येनवैश्य
श्शूद्रेणशूद्रस्तस्मादग्नावेवदेवेषुलोकमिच्छंतेब्राह्मणेमनुष्येष्वेताभ्यांꣳरूपाभ्यांब्रह्माभवदथयो
हवाअस्माल्लोकात्स्वंलोकमदृष्ट्वाप्रैतिसएनमविदितोनभुनक्तियथावेदोवाअननूक्तोन्यद्वाकर्माकृ
तंयदिहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएवात्मानमेवलोकमुपासीत
सयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते ॥ ९ ॥

दिष्वाविष्टत्वरूपमहिमानं वक्तुं प्रागुक्तमनुवदति ॥ तदेतदिति । ब्रह्मक्षत्रंविट्शूद्र इति यत्तदेतत्प्रागुक्तमित्यर्थः । तत्तत्र । ब्रह्म ब्राह्मणजात्यभिमानी ब्रह्मा । देवेषु योऽग्निस्तेन सहाभवत् । तदंतर्गतमभवदिति यावत् । मनुष्येषु यो ब्राह्मणस्तेन सहास्ते । तदंतर्गतो वर्तत इत्यर्थः । क्षत्रियः क्षत्रियजात्यभिमानी वायुः । देवेषु यः क्षत्रियः सुपर्णशेषादिः नृषु यः क्षत्रियो राजादिस्तेन च सहास्ते ।

तदंतर्गत इत्यर्थः। वैश्यो वैश्यजात्यभिमानी नासिक्यो वायुः। देवेषु यो वैश्यो वस्वादिस्तेन नृषु यो वैश्यस्तेन च सहास्ते। तंत्स्थ इत्यर्थः। शूद्रः शूद्रमानी निर्ऋतिः। देवेषु यश्शूद्रोऽश्विप्रभृतिः तेन सहास्ते। तथा नृषु यश्शूद्रस्तेन च सहास्ते। तदंतस्थ इत्यर्थः। अग्नौ ब्राह्मणे च ब्रह्मा तिष्ठतीति कुत इत्यत आह॥तस्मादिति। यस्मादेताभ्यां रूपाभ्यां ब्रह्माभवत्। तयोराविष्टोभूदिति यावत्। तस्माद्धेतोः देवेषु मध्येऽग्नावेव मनुष्येषु ब्राह्मण एव हुत्वा लोकमिच्छंते इच्छंति। प्रार्थयंते। अग्निब्राह्मणयोः संतर्पणेनैव लोकावाप्तिर्भवेत्किमित्यतो नेति भावेनाह॥ अथेति। अन्यच्चेश्वरज्ञानरूपमपेक्षितमित्यथ शब्दार्थः। तदेव व्यतिरेकमुखेनाह॥ य इति। यो ह वै अग्निविप्रार्च कोपि यः कश्चित् स्वं स्वकीयं। लोकमाश्रयं। स्वाश्रयमिति यावत्। हरिमदृष्ट्वा अविज्ञाय। अस्माल्लोकात् देहात्। प्रैति निर्गच्छति। एनमग्निविप्रार्चकं। स हरिरविदितोऽज्ञातः न भुनक्ति। न पालयति। यथा अननूक्तोऽनधीतो वेदो वा। अकृतं अन्यत् कर्म वा न भुनक्ति तथेति योज्यं। तथाप्यश्वमेधादिमहाकर्मानुष्ठानात्स्यान्महाफलमित्यत आह॥ यदि ह वा इति। यद्यनेवं वित् परमात्माज्ञानी महदपि पुण्यं पुण्यसाधनं। ह वै प्रसिद्धं। हयमेधादिकर्म। करोति तत्कर्म। अस्य हर्यज्ञानिनः। अंततः क्षीयत एव क्षयिष्णु फलकमेव भवति हेति। तदाह सूत्रे। भाक्तं वाऽनात्मवित्त्वादित्यादि। एवं हर्यज्ञानिनो न फलावाप्तिः कर्मणेत्युक्तं तर्हि किं कार्य मित्यत आत्मज्ञानं संपाद्यमिति भावेन तज्ज्ञानसाधनमुपासनं विधत्ते॥ आत्मानमेवेति। आप्तकामतयाऽऽत्मपदवाच्यमेव लोकं सर्वाश्रयं। सर्वाश्रयत्वेन हरिमुपासीत। अस्योपासकस्य ज्ञानानंतरभावि कर्म न क्षीयते क्षयिष्णु फलकं न भवति। कर्मणो

क्षयत्वं व्यनक्ति ॥ अस्मादिति । स ज्ञानी यद्यत्कामयते तत्तत्काम्यं वस्तुजातमस्मादेव प्रसन्नादात्मनो हरेस्सकाशादेव । सृजते । कर्मेत्यनुपज्यते । अत्रायं विवेकः । परोक्षज्ञानिना कृतमकाम्यं कर्माक्षयफलकज्ञानाय । अपरोक्षज्ञानिना कृतं तु कर्माक्षयमोक्षैकदेशायेति । तथा चोपास्त इत्यस्य परोक्षापरोक्षसाधारण्येन जानातीत्यर्थो ध्येयः । तथाच सूत्रं । अग्निहोत्रादिति

अथोअयंवाआत्मासर्वेषांभूतानांलोकः सयज्जुहोतियद्यजतेतेनदेवानांलोकोऽथयदनुब्रूतेतेन
र्षीणामथयत्पितृभ्योनिमृणातियत्प्रजामिच्छतेतेनपितॄणामथयन्मनुष्यान्वासयतेयदेभ्योदानं
(ऽशनं)ददातितेनमनुष्याणामथयत्पशुभ्यस्तृणोदकंविंदतितेनपशूनांयदस्यगृहेषुश्वापदावयाꣳ
स्यापिपीलिकाभ्यउपजीवंतितेनतेषांलोको यथाहवैस्वायलोकायारिष्टिमिच्छेदेवꣳहैवंविदेसर्वा
णिभूतान्यरिष्टिमिच्छंति तद्वाएतद्विदितंमीमाꣳसितं ॥ १० ॥

तु तत्कार्यायैव तद्दर्शनादिति ॥ ३ ॥ ५ ॥ ९ ॥ आत्मानमेव लोकमिति यद्धरेः सर्वाश्रयत्वमुक्तं तत्साधयितुं प्रतिजानीते ॥ अथो इति । प्रागुक्तोपपादनारंभार्थोयमथो इति निपातः । अयं सर्वजीवेषु नियामकतया स्थितः । आप्तकामतयाऽऽत्मेत्युक्तः । सर्वेषां भूतानां देवादिपिपीलिकांतप्राणिनां । लोको वै आश्रयः प्रसिद्धः । कथमित्यतो विविच्य व्यनक्ति ॥ स इति । सः सर्व

जीवेषु नियंतृतया स्थितो हरिः । यज्जुहोति वैश्वदेवादिकं करोतीति यद्यद्यजते यज्ञादीन्करोतीति यत् । होमकर्त्रादिषु स्थित्वा वा रामकृष्णादिरूपेण वा द्वेधापि देवेषु दयया देवतोद्देशेन होमादिकं कुरुत इति यत् । तेन होमादिना । देवानां लोक आश्रयः । अथेत्यर्थांतरे । एवमग्रेपि ज्ञेयं । अनुब्रूते अध्येतृषु स्थितस्सन्पृथग्वाध्ययनं कुरुत इति यत् । तेन ऋषीणां लोक इत्यनुषंगः । अध्ययनकाले तत्तद्द्रष्टृऋषिस्मृतिपूर्वमध्ययनकृतौ तेषां तृप्तिर्भवतीति तदाश्रया इति भावः । अथ पितृभ्यो निमृणाति पिंडं प्रयच्छतीति यत् । प्रजां पुत्रं । इच्छते इच्छति । उत्पादयतीति यत् तेन पितृणां लोकः । अथ मनुष्यान् गृहभूम्यादिदानेन वासयते निवासयतीति यत् । एभ्योर्थिभ्यो । दानं देयमन्नं । (एभ्योशनमिति क्वचित्पाठः ।) ददातीति च यत् तेन मनुष्याणां लोकः । अथ पशुभ्यः तृणोदकं । द्वंद्वैकवद्भावः । विंदति ददातीति यत् तेन पशूनां लोकः । अस्य पूर्वोक्तद्विरूपस्य हरेः । गृहेषु श्वापदाः मार्जारादयः । वयांसि पक्षिणः । किंबहुना । आपिपीलिकाभ्यः पिपीलिकापर्यंतं वर्तमानाः सर्वेपि प्राणिनः । बल्यादिकमुपजीवंतीति यत् तेन तेषां लोकः । एवं सर्वांतर्यामितया रामकृष्णादिरूपेण वा सर्वाश्रयतया स्थितस्य हरेरुक्तरीत्या सर्वाश्रयत्वं जानतः फलं सदृष्टांतमाह ॥ यथा ह वा इति । यथा लोके स्वाय स्वकीयाय । लोकाय आश्रयाय । राजादेररिष्टिमविनाशमिच्छेदिच्छति । एवं ह । एवं विदे द्विरूपस्य हरेस्सर्वाश्रयत्वविदे । सर्वाणि भूतानि देवादीनि । अरिष्टिमविनाशमिच्छंति प्रार्थयंत इत्यर्थः । एवं हरेः सर्वाश्रयत्वमुपपाद्य तत्र प्रमाणमाहोपनिषत् ॥ तद्वा एतदिति । तदेतद्विष्णोः सर्वाधारत्वं । सर्ववेदैर्विदितं प्रतिपादितं । मीमांसा

५

भिश्च निश्चितं ऋषिभिर्विचारितमिति वार्थः ॥ ३ ॥ ५ ॥ १० ॥ गृहस्थे स्थित्वा यज्ञादिकरणेन सर्वाश्रय इत्युक्त्वा भगवता रामादिरूपेण गार्हस्थस्यानुष्ठानाच्च गार्हस्थ्यं श्रेष्ठमिति भावेन हरेर्गार्हस्थ्यमाह ॥ आत्मैवेदमिति । इदमस्य जगतः । अग्रे प्रलये । आत्मा परिपूर्णो नारायण एवासीत् । एक एव स आत्मा । अकामयत ऐच्छत् । कथमित्यत आह ॥ जाया मे स्यादित्यादिना । कुर्वीये

आत्मैवेदमग्रआसीदेकएवसोकामयत जायामेस्यादथप्रजायेयाथवित्तंमेस्यादथकर्मकुर्वीयेत्ये तावान्वैकामोनेच्छꣳश्चनातोभूयोविंदेत्तस्मादप्येतर्ह्येकाकीकामयतेजायामेस्यादथप्रजायेया थवित्तंमेस्यादथकर्मकुर्वीयेतिसयावदप्येतेषामेकैकंनप्राप्नोत्यकृत्स्नएवतावन्मन्यतेतस्योकृत्स्न ता मनएवास्यात्मा वाग्जाया प्राणःप्रजा चक्षुर्मानुषंवित्तंचक्षुषाहितद्विंदतेश्रोत्रंदैवंश्रोत्रे णहितच्छृणोत्यात्मैवास्यकर्मात्मनाहिकर्मकरोतिसएषपांक्तोयज्ञः पांक्तःपशुः पांक्तःपुरुषः पांक्तमिदꣳसर्वंयदिदंकिंच तदिदꣳसर्वमाप्नोतियएवंवेद ॥ ११ ॥ इत्यव्याकृतब्राह्मणं ॥ ३ ॥ ५ ॥

त्यंतेन । विद्यमानामेव जायां भोगार्थमैच्छदित्यर्थोस्य ध्येयः । एक एवेत्युक्तिस्तु अवियुक्तस्तया यदा । एक इत्युच्यत इति स्मृतेरावियुक्तत्वाभिप्राया । अथ तद्रमणानंतरं । प्रजायेय प्रजनयेय । पुत्रं जनयेयेत्यर्थः । अथ अनंतरं । वित्तं द्रविणं । कर्म यज्ञादि । कुर्वीयेत्यकामयतेति प्रत्येकमन्वयः । न केवलमकामयत । ब्रह्मादिदेवरूपान् पुत्रान् पंचमहाभूतब्रह्मांडतदंतस्थलोकरूपावित्तं स्वात्मोद्देशेन

यज्ञादिकर्म च कृतवांश्चेत्यपि ध्येयं। इच्छोक्त्यैव इच्छामात्रं प्रभोः सृष्टिरित्युक्तेः सृष्टेरपि लाभात्तदनुक्तिः। उक्तचतुष्टयातिरिक्तं कुतो न कामितवानित्यत आह ॥ एतावानिति। एतावान् खलु काम्यमानोर्थः। कुतः। अत उक्तचतुष्टयाद्भूयः अधिकमिच्छन्नपि न विंदेत् नाप्नुयात्। तस्मात् काम्यस्यैतावत्त्वाद्भगवता कामितत्वाद्वा। एतर्ह्यपीदानीमपि एकाकी लौकिको जनः। कुर्वीयेतीति पदस्य प्रत्येकमन्वयः। वित्तं दैवं मानुषं चेति द्विविधं। दैवं सुखज्ञानादिकं। मानुषमित्यत्र भार्यादिचतुष्टयादन्यत्काम्यं नेत्युक्तचतुष्टयस्य काम्यत्वं व्यनक्ति ॥ स इति। स एवं कामनावानपि। एतेषां चतुर्णां मध्ये। एकैकं यावद्यदा। न प्राप्नोति तावत्तदा। स्वात्मानं अकृत्स्नोऽपूर्णोहमिति मन्यते। जायाद्यप्राप्तिमतः कृत्स्नतावाप्तिप्रकारमाह ॥ तस्यो कृत्स्नतेति। तस्य उ तस्यापि जायाद्यलाभिनोपि। कृत्स्नता उच्यते इति योज्यं। कथमित्यतस्तदाह ॥ मन एवेत्यादिना। मनः स्वरूपभूतं मनः। अस्यात्मा स्वात्मेति चिंतयेत्। वाक् स्वरूपभूतवागिंद्रियं। जायेति चिंतयेत्। प्राणः स्वरूपभूतं बलं। पुत्र इति चिंतयेत्। चक्षुर्मानुषं वित्तमिति चिंतयेत्। कुतः। यस्माच्चक्षुषा हि तत् मानुषं वित्तं हिरण्यादिकं। विंदते प्राप्नोति। श्रोत्रं दैवं वित्तमिति चिंतयेत्। कुतः। हि यस्मात्। श्रोत्रेण तद्विद्यारूपं शृणोति। अस्य एवं चिंतयतः। आत्मैव एवं भूतचिंतनमेव। कर्मेति चिंतयेत्। कुतः। आत्मना चिंतनेनैव कर्म करोति। कुतो मन आदीनामात्मत्वादिनानुचिंतनं कार्यमिति चेत प्रसिद्धयज्ञस्याप्यात्मादिपंचकसाध्यत्वादिति भावेनाह ॥ स इति। स एष प्रसिद्धो यज्ञः। पाङ्क्तः

आत्मप्रियापुत्रादिविधवित्तरूपपंचकसाध्यः । न केवलं यज्ञ एव पाङ्क्तः किंतु यज्ञांगं पशुः ऋत्विगादिपुरुषश्चेति प्रसंगादाह ॥ पाङ्क्त इति । पशुपुरुषयोः पाङ्क्त्वं मातापितृभ्यामन्नेन तयोः कर्मणा स्वकर्मणा च साध्यत्वरूपं ध्येयं । न केवलं यज्ञपशुपुरुषा एव पाङ्क्ताः किं तर्हि यदिदं किंच प्राणिजातं सर्वं पाङ्क्तं मात्रादिपंचकसाध्यं । इति भावयेदिति सर्वत्र योज्यं । पश्चादेः पाङ्क्त्वज्ञानिनः फलमाह ॥ तदिदमिति । योधिकारी ब्रह्मपदयोग्यः । एवं मन आदीनां स्वात्मत्वादिकं । वेद चिंतयति । स यदिदं जगत्तत्सर्वमाप्नोति । सर्वस्यास्य पतिर्भवतीत्यर्थः । ब्रह्मपदायोग्यश्चेद्देवपदमाप्नोति । तस्याप्ययोग्यास्स्वयोग्यफलमाप्नुयुरित्यर्थः ॥ छ ॥ भाष्ये आत्मैवेदमग्र आसीदित्यादि खंडं एको नारायणः पूर्वमासीदित्यादि प्रमाणानुसारेण परमेश्वरपरतया व्याख्याय आत्मा तु जगतां ब्रह्मा तस्यात्मा भगवान् हरिरित्यादि प्रमाणानुरोधेन चतुर्मुखपरतयापि व्याचख्यौ । तथाहि । इदं अस्य जगतः । आत्मा स्वामी चतुर्मुखः । अग्रे प्रथमं । एक एवासीत् वासुदेवाज्जातोभूत् । स एकाकी चतुर्मुखः । अकामयतेत्यादेस्स यावदिति पर्यंतस्य प्रागिवार्थो ध्येयः । स एवं कामयमानोपि ब्रह्मा एतेषां जायादीनां मध्ये। एकैकं यावन्नाप्नोति यदा न प्राप । तावत्तदा । अकृत्स्न एव अपूर्ण एवेत्यात्मानं मन्यते अमन्यत । तस्य । उ । अकृत्स्नत्वमात्मनो मन्वानस्य । कृत्स्नता उ पूर्णतैव यथा स्यात्तथोच्यत इत्यर्थः । मानसयज्ञेन भगवंतमाराध्य जायादिकं लब्धवानिति भावेन मानसयज्ञप्रकारमाह ॥ मन एवेति । अस्यात्मा स्वरूपभूतं मन एवासीदित्यर्थः । उपलक्षणमेतत् । वागाद्यात्मांतपंचकं मनश्चेति पङ्क्तमेवासीत् । न बाह्यजायादिकमित्येवकारार्थः ।

वाक् वागिंद्रियं । जाया इत्यकल्पयदिति सर्वत्र योजना । प्राणो बलं । प्रजापुत्र इति । चक्षुर्मानुषं वित्तमिति । तत्र हेतुः चक्षुषा हीति । श्रोत्रं दैवं वित्तमिति । तत्र हेतुः श्रोत्रेणेति । आत्मैव देह एव । इत्थं चिंतनं वा । कर्मेत्यकल्पयत् । तत्र हेतुः आत्मनेति। देहेन वा एवं रूपचिंतनेन वेत्यर्थः । एवं मानसयज्ञेन भगवदाराधने कृते सति तत्प्रसादेनैव वागादिभ्यो जायादिकमासीदित्यर्थ तया वाग्जायेत्यादि वाक्यमेव योज्यं । वागित्यादि प्रथमा पंचम्यर्थे । सप्तसु प्रथमेति सूत्रात् । वाचो वागिंद्रियाज्जाया सरस्वती। जातपदं सर्वत्र योज्यं । प्राणात्प्रजापुत्रोवायुः चक्षुषो मानुषवित्तपदोक्तहिरण्मयलोकाः । श्रोत्रं । तृतीयार्थेत्र प्रथमा । श्रोत्रेण दैव वित्तशब्दिताशेषविद्याः भगवत्प्रोक्ताः जगृहे इत्यर्थः । आत्मैव आत्मना देहेन चिंतनेन वा कर्मजातमिति कृतवानशेषकर्माणीति यावत् । न केवलं वागादीनां विष्णुपूजोपकरणत्वेन चिंतनामात्रादेव जायादिप्राप्तिरंते मुक्तिरिति तदिदमित्यादिना वक्ष्यमाणं फलं। किंतु यज्ञादेः पाङ्क्तत्वज्ञानादपीति भावेनाह ॥ स एष इति । स प्रसिद्ध एष यज्ञः पाङ्क्तः सवनत्रयतत्पूर्वोत्तरकर्मभेदेन पंचदेवताभिः नारायणाद्यनिरुद्धांतैः पंचभिरुपेतः । यज्ञांगं पशुः मध्यशिरः पार्श्वद्वयपुच्छरूपपंचकेन तद्देवताभूतनारायणादिरूपपंचके न्नोपेतः । यज्ञांगऋत्विगादिपुरुषः पाङ्क्तः दिक्चतुष्टयमध्यरूपपंचकेन तद्देवताभूतनारायणादिरूपपंचकेन चोपेतः । यदिदं किंच प्राणिजातं इदं सर्वं पाङ्क्तं दिक्चतुष्टयमध्यरूपपंचकेन तद्देवताभूतनारायणादिपंचकेन चोपेतं । इत्यचिंतयद्ब्रह्मेति योज्यं । तत्तस्माद्द्यापि यः कश्चिदेवमुक्तप्रकारेण वागादेर्विष्णुपूजोपकरणत्वं यज्ञादेरुक्तरूपपाङ्क्तत्वं च । वेद उपास्ते । स इदं सर्वं

जायादिपंचकमाप्नोति । अंततो मुक्तिं चेत्यर्थः ॥ ३ ॥ ५ ॥ ११ ॥ अव्याकृतब्राह्मणं ॥ छ ॥ छ ॥ विष्णुब्रह्माणावपि गृहिणावतिष्ठतामतो गृही उत्तम इत्युक्तमात्मैवेत्यादिना । तस्य गृहिणो भगवत्सृष्टं यत्साधारणमन्नं तन्न स्वकीयमेवेति मंतव्यमिति भावेन प्रकृतहरेस्सप्तान्नस्रष्टृत्वमहिमानमाह ॥ यत्सप्तान्नानीति । पिता सर्वजगज्जनको विष्णुः । सप्तान्नानि सप्तविधान्यन्नानि । तृप्तिहेतुतया अन्ननामानि । प्राणिभिरद्यमानमेकं । वैश्वदेवबलिहरणरूपे द्वे । प्राणिनां मनोवाक्पंचवायुरूपाणि त्रीणि पयश्चैकं इत्येवं सप्तान्नानि । मेधया स्वेच्छया । तपसा प्राणिसंबंधिकर्मजातेन । अजनयत् असृजत । सप्तानां मध्ये एकमन्नमस्य

यत्सप्तान्नानिमेधयातपसाऽजनयत्पितैकमस्यसाधारणंद्वेदेवानभाजयत्त्रीण्यात्मनेकुरुतपशु भ्यएकंप्रायच्छत्तस्मिन्त्सर्वंप्रतिष्ठितंयच्चप्राणितियच्चन कस्मात्तानिनक्षीयंतेऽद्यमानानिसर्वदा योवैतामक्षितिंवेदसोन्नमत्तिप्रतीकेनसदेवानपिगच्छतिसऊर्जमुपजीवतीतिश्लोकाः ॥ १ ॥

जगतः साधारणं । द्वे वैश्वदेवबलिहरणे । देवानभाजयत् । सप्तान्नमध्ये अन्नद्वयभागिनो देवानकरोदित्यर्थः । त्रीणि मनोवाक्प्राणरूपाणि । आत्मने स्वस्मै । पशुभ्यः । पश्वादिभ्यः । एकं पयोरूपं । तस्मिन्पयसि । सर्वं जगत् । प्रतिष्ठितं तदुपजीव्य वर्तत इत्यर्थः । सर्वमित्युक्तं व्यनक्ति ॥ यच्चेति । जंगमस्थावररूपमित्यर्थः । सृष्टान्नानां क्षये कथं तदुपजीविनां जीवनमित्यत आह ॥ कस्मादिति । सुखरूपाद्धरेस्तानि सर्वदाद्यमानान्यपि न क्षीयंते । यो वै अधिकारी । अक्षितिं सृष्टान्नाक्षयहेतुं हरिं । वेद स वेदी । अन्नं उपलक्षणं । स्वयोग्यसर्वभोगान् । प्रतीकेन स्वमुखेन । अप्रयत्नेनेति यावत् । अत्ति अनुभवति ।

स ज्ञानी । देवान् देवत्वं गच्छति । स ऊर्जं देवभोज्यमन्नं । उपजीवति । इति श्लोकाः व्याख्येयार्थकवाक्यानीत्यर्थः ॥३॥६॥१॥

यत्सप्तान्नानिमेधयातपसाऽजनयत्पितेति मेधयाहितपसाऽजनयत्पितैकमस्यसाधारणमिती दमेवास्यतत्साधारणमन्नंयदिदमद्यते सयएतदुपास्तेनसपाप्मनोव्यावर्ततेमिश्र ंह्येतद्द्वेदेवान भाजयदितिहुतंचप्रहुतंचतस्माद्देवेभ्योजुह्वतिप्रचजुह्वत्यथोआहुर्दर्शपूर्णमासाविततिस्मान्नेष्टि याजु(ज)कःस्यात्पशुभ्यएकंप्रायच्छदितितत्पयःपयोह्येवाग्रेमनुष्याश्चपशवश्चोपजीवंति तस्मा त्कुमारंजातंघृतंवैवाग्रेप्रतिलेहयंतिस्तनंवानुधापयंत्यथवत्संजातमाहुरतृणादइति तस्मिन्त्सर्वं प्रतिष्ठितंयच्चप्राणितियच्चनेति पयसिहीद ंसर्वंप्रतिष्ठितंयच्चप्राणितियच्चन तद्यदिदमाहुःसंवत्स रंपयसाजुह्वदपपुनर्मृत्युंजयतीतिनतथाविद्याद्यदहरेवजुहोतितदहःपुनर्मृत्युमपजयत्येवंविद्वा न्सर्वं ंहिदेवेभ्योन्नाद्यंप्रयच्छति कस्मात्तानिनक्षीयंतेऽद्यमानानिसर्वदेति पुरुषोवाअक्षितिः सहीदमन्नंपुनःपुनर्जनयतेयोवैतामक्षितिंवेदेति पुरुषोवाअक्षितिःसहीदमन्नंधियाधियाजनयते कर्मभिर्यद्धैतन्नकुर्यात्क्षीयेतह सोन्नमत्तिप्रतीकेनेतिमुखंप्रतीकंमुखेनात्येतत्सदेवानपिगच्छति सऊर्जमुपजीवतीतिप्रशंसा ॥ २ ॥

तानि वाक्यानि प्रतीकेनोपादाय व्याचष्टे उपनिषत् ॥ यत्सप्तान्नानीत्यादिना । मेधयाहीति हि शब्दस्तस्य हरेः पितुः सप्तान्नस्र

ष्टत्वप्रसिद्धिद्योतकः (१) द्वितीयवाक्यमुपादाय व्याचष्टे ॥ एकमस्येति ॥ इदमेवास्येति । मनुष्यवर्गस्येत्यर्थः । सर्वसाधारण मन्नमात्मीयत्वेन मन्वानस्य दोषमाह ॥ स इति । उपास्तइत्युप शब्दस्यावृत्तिः । य एतदन्नमुप स्वसमीप एव वर्तमानं। स्वात्मीयमेवेति यावत् । उपास्ते मन्यते । स पाप्मनो न व्यावर्तते अक्षयपापवान्स्यादित्यर्थः । कुतः । हि यस्मादेतदद्यमानमन्नं मिश्रं देवब्राह्मणसाधारणमत इत्यर्थः (२) तृतीयं वाक्यमुपादाय व्याचष्टे ॥ द्वे देवानभाजयदितीति । हुतं वैश्वदेवं । प्रहुतं बलिहरणं । हुतप्रहुते कुतो देवानामन्ने इत्यत आह ॥ तस्मादिति । हुतप्रहुतयोर्देवान्नत्वहेतोरद्यतना अपि देवेभ्यो जुह्वति प्रजुह्वति च । न केवलं हुतप्रहुते एव देवानामन्ने किं तर्हीत्यतोऽन्यदपीत्याह ॥ अथो इति । पक्षांतरे अयमथो शब्दः । दर्शपूर्ण मासावपि देवानामन्ने इत्याहुरार्या इत्यर्थः । तस्माद्धुतप्रहुतयोर्देवान्नत्वाद्यज्ञमनुतिष्ठन् पुमान् नेष्टि याजुकस्स्यात् फलेच्छया यज्ञकारी न भवेत् । परस्वेनात्मफलार्थं विनियोगे परस्वापहारदोषापत्तेरिति भावः (३) त्रीण्यात्मने कुरुत इतिवाक्यव्याख्यानस्य बहुत्वात्तदग्रे व्याकरिष्यंती श्रुतिः चतुर्थवाक्यं तावदुपादाय व्यनक्ति ॥ पशुभ्य इति । तत्पय इति पशुभ्यो दत्तमन्नं पयः पीयमानं क्षीरप्रभृतिद्रवद्द्रव्यमित्यर्थः । तत्कथमित्यत उपपादयति ॥ पयो हीति । अग्रे आदौ । शैशव इति यावत् । मनुष्या श्चेत्युक्त्या श्लोके पशुपदं पशुप्रभृतिपरमिति सूचितं । मनुष्या उपजीवंतीत्येतावत् व्यनक्ति ॥ तस्मादिति । तस्मात्पयश्शब्दित स्याग्रे मनुष्याद्युपजीव्यत्वादिदानीमपि जातं कुमारं घृतं वै पयःकार्यं घृतं । वा शब्दान्नवनीतं वा । अग्रे प्रथमं । उपजीवित्वात् । प्रतिलेहयंति । आस्वादयंति । लिह आस्वादने । स्तनं वानुधापयंति । पाययंति । धेट् पाने । वै प्रसिद्धमेतदिति । पशव उपजीवं

तीत्येतद्व्यनक्ति ॥ अथेति । पशूनामग्रे पय उपजीवित्वहेतोर्जातं वत्सं । अतृणादः तृणभक्षको नेत्याहुः (४) पंचमं वाक्यमुपादाय तच्छब्दार्थं व्यनक्ति ॥ तस्मिन्निति ॥ पयसीति । पीयमानतया पयश्शब्दिते क्षीरप्रभृतिद्रवद्द्रव्य इत्यर्थः । न केवलं जीवनहेतुत्वात्पयसि प्राणिजातं प्रतिष्ठितं किंतु पयसः पारलौकिकफलहेतुत्वादपीत्याह ॥ तद्यदिदमित्यादिना । संवत्सरं पयसा जुह्वत् । होमं कुर्वन् पुमान् ज्ञानी चेदपपुनर्मृत्युं संसारं जयति मुक्तो भवति । अज्ञश्चेदपपुनर्मृत्युं भगवदज्ञानं जयति निहंति । ज्ञानी भवतीति । ज्ञानिनो यदिदमाहुस्तत्तथा न विद्यात् न जानीयात् । कुतः । एवं विद्वान् सप्तान्नसृष्टितत्त्वज्ञानी । यदहः यस्मिन्नहनि । पयसा जुहोति । तदहरेवापपुनर्मृत्युं जयति मुक्तो भवति । एकाहहोमेनैव मुक्तो भवतीति यावत् । यतेत इति योज्यं । कुत एवं तस्य महिमेत्यत आह ॥ सर्वं हीति । यस्मात्सप्तान्नस्रष्टृत्वज्ञानी पयोहोमेनैव देवेभ्यः सर्वमन्नाद्यं प्रयच्छति । गोपयसः प्रशस्ततया सर्वान्नस्थानीयत्वादिति भावः (५)षष्ठं वाक्यमुपादाय व्याचष्टे ॥ कस्मादित्यादिना । पुरुषो वै विष्णुर्वै । अक्षितिः अन्नाक्षयहेतुः । ततः किमित्यत आह ॥ स हीति । इदं सप्तविधमन्नं । एतेन कस्मादित्येतस्य सुखरूपात्पुरुषादित्यर्थ उक्तो भवति(६)सप्तमं वाक्यमुपादाय व्यनक्ति ॥ यो वैतामिति । अक्षितिः अन्नाक्षयहेतुः । तद्व्यनक्ति ॥ स हीति । धिया स्वेच्छया प्राणिकर्मभिश्चेति । पुनः पुनस्सृष्टौ हेतुविशेषोक्त्या सहेदमित्यादि पूर्ववाक्येन न पुनरुक्तिः । धिया कर्मभिरित्युक्त्या श्लोकादिवाक्यस्थमेधातपश्शब्दौ विवृतौ ध्येयौ । यत् यदि । एतद्ध पुनः पुनर्जननमन्नं न कुर्यात् । तत् तर्हि क्षीयेत ह । निश्चितमेतदिति (७) अष्टमं वाक्यमुपादाय व्यनक्ति ॥ सोन्नमत्तीति । अत्त्येतदिति । एतदन्नमत्तीत्यर्थः । स देवानपीति वाक्यद्वयं फलार्पकमित्याह ॥ स देवानिति । प्रशंसा प्रशस्तफलबोधक

मित्यर्थः । अर्थवाद इति वार्थः ॥ ३ ॥ ६ ॥ २ ॥ त्रीण्यात्मने इत्यादिवाक्यमुपादाय व्याचष्टे ॥ त्रीणीत्यादिना । आत्मने स्वतुष्ट्यर्थं । चक्षुरादिज्ञानकरणेषु सत्सु कुतो मन एवात्मतुष्ट्यर्थमकरोदित्यतो मनसः प्राधान्यं व्यतिरेकेणाह ॥ अन्यत्रेति । अन्यत्र मना इति बहुव्रीहिः । तत्किं वस्तु दृष्टवानिति केनचित्पृष्टे अन्यो वदति । अन्यविषयकमनस्कोऽहमासं तथेदं वचः

त्रीण्यात्मनेकुरुतेतिमनोवाचंप्राणंतान्यात्मनेकुरुतान्यत्रमनाभूवंनादर्शमन्यत्रमनाभूवंनाश्रौ षमितिमनसाह्येवपश्यतिमनसाशृणोतिकामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्री र्धीर्भीरित्येतत्सर्वंमनएवतस्मादपिपृष्ठतउपस्पृष्टोमनसाविजानातियःकश्चिच्छब्दोवागेवसैषा ह्यंतमायत्तैषाहिनःप्राणोपानोव्यानउदानःसमानोनइत्येतत्सर्वंप्राणएवैतन्मयोवाऽयमात्मावा ङ्मयोमनोमयःप्राणमयः ॥ ३ ॥

श्रुतवान्किमिति पृष्टस्तथैवाह । अन्यत्रेत्यादि । एवमन्येंद्रियेष्वपि मनोव्यासंगेन तत्तदिंद्रियज्ञानानुदयो ध्येयः । मनसि व्याकुले चक्षुरादिभिर्ज्ञानं नोत्पद्यत इत्येतदुपपादयति ॥ मनसा हीति । नापश्यमिति नादर्शं हि यस्मात् मनस्यव्याकुल एव चक्षुषा पश्यति श्रोत्रेण शृणोतीत्यर्थः । न केवलं मनोमात्रमेव स्वतुष्टिहेतुत्वेन स्वस्यान्नं किंतु स्ववृत्तिकं चेत्याह ॥ काम इति । एक विषयकेच्छा कामः । अनेकगोचरेच्छा विचिकित्सा । इत्येतत्सर्वं मन एव तदुपादानकमेवेत्यर्थः । कामादीनामीशतुष्टिकरत्वेन

तदन्नत्वप्रकारश्च कामस्य तद्भक्तिकामत्वेन संकल्पस्य तत्पूजाकृतिविषयत्वेन विचिकित्सायास्तद्वेदनविषयत्वेन। श्रद्धायास्तद्गुणान्नेति विषयत्वेन अश्रद्धाया अन्यसाम्यादिविषयत्वेन । धृतेरीशादन्यस्योत्कर्षनिंदनादौ । अधृतेरीशनिंदनादौ । ह्रियास्तत्वमत विसर्जनादिविषयत्वेन । यद्वा भगवन्मतपरित्यागविषयत्वेन । अधृतेर्हरिभक्तित्यागविषयत्वेन । ह्रियाः धियस्तद्विवेकविषयकत्वेन । भियस्तदज्ञानप्राप्तिविषयत्वेनेत्येवं प्रकारेण ध्येयः । मनसश्चक्षुरादिभ्यः प्राधान्ये व्यतिरेकः प्रागुक्तः । अधुनान्वयं चाह ॥ तस्मादिति । मनसः प्रधानत्वादेव पृष्टत उपस्पृष्टोपि मनसा विजानाति । वाचो भगवदन्नत्वं व्यनक्ति ॥ यः कश्चिदिति । यः कश्चिच्छब्दो ध्वनि वर्णात्मको वागेव वागिंद्रियमेव । तेनोच्चार्यमाणत्वहेतुना यः कश्चिच्छब्दो वागेवेत्यभेदोक्तिः सर्वशब्दोच्चारण हेतोर्वागिंद्रियस्य कथं विष्णवन्नत्वमित्यत आह ॥ सैषा हीति । हियस्मात्सैषा सर्वशब्दोच्चारणहेतुभूता वाक् । अंतं सर्वांतस्थं विष्णुमायत्ता । तद्विषयिणी । कुतः । सर्वेषां शब्दानां विष्णुनामत्वादतो विष्णवन्नत्वमिति भावः । केषां वाक् विष्णुमायत्तेत्यतो वेदद्रष्टॄणामित्याह ॥ एषा ह्नि न इति । नोस्माकं वेदद्रष्टॄणामेषा हि वाक् । विष्णुमायत्तेति प्रसिद्धमित्यर्थः । अवांतरभेद भिन्नस्यापि प्राणस्य भगवदन्नत्वमिति भावेनाह ॥ प्राण इति । नोस्माकं वेदद्रष्टॄऋषीणां । इत्येतत्सर्वं प्राण एव । प्राणप्रभेद एवेत्यर्थः । प्राणादेर्भगवत्तुष्टिहेतुत्वेन तदन्नत्वप्रकारश्च । प्राणं तत्कर्मणि स्फुटं ॥ तदन्यकर्मसंत्यागे चापानं व्यानमस्य च । विरोधिनां निरासे त्वथोदानं योगधारणे ॥ मनोवागादींद्रियाणां समानं नियमे(न)त्र तु ॥ इत्युक्तदिशा ध्येयः । कुतः प्राणमन्नम कुरुत हरिरित्यतो जीवस्य स्वतुष्टिद्वारा श्रेयोहेतुत्वेन प्राधान्यादिति भावेन प्रसंगाद्वाङ्मनसोः प्राणस्य च प्राधान्यमाह ॥ एतन्मयो

वाऽयमात्मेति । अयमात्मा स जीवः । एतन्मयः एतत्प्रधानः । एतच्छब्दं व्यनक्ति ॥ वाङ्मय इत्यादिना । प्राधान्ये मयट् वाक्प्रधानः मनःप्रधानः प्राणप्रधान इत्यर्थः । वाङ्मनःप्राणाभिमानिनामुत्तमदेवानां सांनिध्यनिमित्तकोत्कर्षवानित्यर्थः । उत्तमदेवमानिकत्वं वागादेः कुत इत्यतोपि अयमात्मा सरस्वतीब्रह्मवायुरूप एतन्मयः तद्विवरणं वाङ्मय इत्यादि । क्रमाद्वाङ्मनःप्राणानामभिमानिनस्त्रय इत्यर्थः । एतेनोत्तमदेवैरभिमन्यमानत्वाच्च वागादिकमुत्तममित्युक्तं भवति । सरस्वत्यादयो वागाद्यभिमानिनः कुतोभूवन्नित्यतोपि एतादिति । अयमात्मा सरस्वत्यादिरूपः । एतन्मयः प्रकृतपरमात्ममयः । तदीयवागादिजन्य

**त्रयोलोकाएतएववागेवायंलोकोमनोंतरिक्षलोकःप्राणोसौलोकः ॥ ४ ॥ त्रयोवेदाएतएववागे वर्ग्वेदोमनोयजुर्वेदःप्राणःसामवेदः ॥ ५ ॥**

इत्यर्थः । भगवतो वागादिरस्ति चेत्तज्जन्यत्वं सरस्वत्यादेः स्यात् स एव कुत इत्यतोप्ययमात्मा हरिः एतन्मयः । तद्विवरणं वाङ्मय इत्यादि । वागादींद्रियात्मेत्यर्थः ॥ ३ ॥ ६ ॥ ३ ॥ उत्तमदेवताभिमन्यमानकत्वान्मनआदिर्हरेरन्नमित्युक्तं । तदुत्तमत्वाय तदभिमानिनां महिमानमाह ॥ त्रय इत्यादिना । सर्वे एव समा इत्यंतेन । एत एव प्रकृता एव वाङ्मनःप्राणाभिमानिन एव । त्रयो लोकाः त्रिलोकाभिमानिनः । तदेव व्यनक्ति ॥ वागेवेति । वाक् वाङ्मानिनी सरस्वती अयं लोकः भूलोकमानिनी । मनो मनोमानी ब्रह्मा अंतरिक्षलोकाभिमानी । प्राणः प्राणमानी वायुः । असौ लोकः स्वर्गलोकाभिमानीत्यर्थः ॥ ३ ॥ ६ ॥ ४ ॥ एवं त्रयो वेदा एत एवेत्यारभ्य प्राणए(नंतद्भूत्वा)वं भूत्वा वतीत्यंतग्रंथस्यार्थो ध्येयः

॥ ३ ॥ ६ ॥ ५–६–७ ॥ यत्किंचिद्विज्ञातं विज्ञानविषयः तत् वाचो वाङ्मानिन्या वाण्याः रूपं प्रतिमा हि । यस्माद्वाग्वि ज्ञाता विज्ञातमानिनी । वाङ्महिमज्ञानिनः फलमाह ॥ वागिति । वाक् सरस्वती एनं स्वमहिमज्ञं । तद्भूत्वा विज्ञातमानिनी भूत्वा । अवति रक्षतीत्येवमग्रेपि ज्ञेयं ॥ ३ ॥ ६ ॥ ८ ॥ विजिज्ञास्यं जिज्ञासाविषयः ॥ ३ ॥ ६ ॥ ९ ॥ अविज्ञातं विज्ञाता

देवाःपितरोमनुष्याएतएववागेवदेवामनःपितरःप्राणोमनुष्याः ॥ ६ ॥ पितामाताप्रजैतएवम नएवपितावाङ्मातापप्राणःप्रजाः ॥ ७ ॥ विज्ञातंविजिज्ञास्यमविज्ञातमेतएवयत्किंचविज्ञातंवा चस्तद्रूपंवाग्घिविज्ञातावागेनंतद्भूत्वावति ॥ ८ ॥ यत्किंचविजिज्ञास्यंमनसस्तद्रूपंमनोहिविजि ज्ञास्यंमनएनंतद्भूत्वावति ॥ ९ ॥ यत्किंचाविज्ञातंप्राणस्यतद्रूपंप्राणोह्यविज्ञातःप्राणएनंतद्भूत्वा वति ॥ १० ॥ तस्यैवाचःपृथिवीशरीरंज्योतीरूपमयमग्निस्तद्यावत्येववाक्तावतीपृथिवीतावान यमग्निः ॥ ११ ॥

विषयः ॥ ३ ॥ ६ ॥ १० ॥ ब्रह्माणीब्रह्मवायूनां भूम्यादिमानित्वरूपमहिमांतरमाह ॥ तस्या इति । तस्यै तस्याः । वाचो वाण्याः । पृथ्वी शरीरं । ज्योतीरूपं प्रतिमा । किं ज्योतिरित्यत आह ॥ अयमग्निरिति । पृथिव्यग्नी द्वौ वाण्यभिमन्यमाना वित्यर्थः । पृथिवीज्योतिषोः वाक्समपरिमाणाभावे कथं तच्छरीरत्वादिकमित्यत आह ॥ तद्यावतीति । तत्तस्मात्पृ

थिव्यग्न्योः वागभिमानिकत्वाद्यावत्येव वाक् यावद्व्यासा वाणी तावती पृथिवी तावानयमग्निः ॥ ३ ॥ ६ ॥ ११ ॥ अथ वाचो भिमन्यमानोक्त्यनंतरं मनोभिमानिनो ब्रह्मणोभिमन्यमानमुच्यत इत्यथ शब्दार्थः । एतस्य मनसो मनोभिमानिनो ब्रह्मणः द्यौः शरीरं । ज्योतीरूपं प्रतिमा । किं ज्योतिरित्यत उक्तं ॥ असावादित्य इति । आदित्यो द्यौश्च द्वौ मनोभिमानिब्रह्माभिमानिका वित्यर्थः । तद्यावदित्यादेः प्राग्वद्व्याख्या तौ वाङ्मनसमानिनौ ब्रह्माणीब्रह्माणौ मिथुनौ समेतौ प्राप्तवंतौ। ततो मिथुनीभावात्प्राणो

अथैतस्यमनसोद्यौःशरीरंज्योतीरूपमसावादित्यस्तद्यावदेवमनस्तावतीद्यौस्तावानसावादि त्यस्तौमिथुनꣳसमैतांततःप्राणोजायतसइंद्रःसएषोसपत्नोद्वितीयोवैसपत्नोनास्यसपत्नोभव तियएवंवेद ॥१२॥ अथैतस्यप्राणस्यापःशरीरंज्योतीरूपमसौचंद्रस्तद्यावानेवप्राणस्तावत्यआ पस्तावानसौचंद्रस्तएतेसर्वएवसमास्सर्वेनंतास्सयोहैतानंतवतउपास्तेंतवंतꣳसलोकंजयत्यथयो हैतानतानुपास्तेअनंतꣳसलोकंजयति ॥ १३ ॥

वायुः रूपांतरेणाजायत । तस्य प्राणस्य महिमानमाह ॥ स इंद्र इत्यादिना । स प्राणः इंद्रः परमैश्वर्यवान् । स एष प्राणोऽसपत्नः शत्रुहीनः । कल्यादिशत्रुसत्वात्कथमसपत्न इत्यत आह ॥ द्वितीय इति । द्वितीयशब्दितः समबलो हि सपत्नो भवति । कल्यादयस्त्वसमबला इति भावः । एतद्वेदिनः फलमाह ॥ नास्येति । योधिकारी एवं प्राणोसपत्न इति वेद अस्य सपत्नः शत्रुर्न भवतीत्यर्थः ॥ ३ ॥ ६ ॥ १२ ॥ अथैतस्य प्राणस्येत्यादेः प्रागिवार्थः । त एते मनोवाक्प्राणमानिनः प्रागुक्ता ब्रह्मादयस्सर्व

एव गुणतस्तरतमभावा अपि व्याप्त्या समाः । सर्वे रुद्राद्यपेक्षया अनंताः । बहुगुणाश्रयाः । स यः कश्चिदेतानंतवतः जीववदल्प गुणानुपास्ते सोंतवंतं नाशवंतं लोकं जयति प्राप्नोति । अथेत्यर्थांतरे । योधिकारी एताननंतानन्यजीवेभ्यो बहुगुणानुपास्ते सोनंतं नाशहीनं विष्णुलोकं जयति प्राप्नोतीत्यर्थः ॥ ३ ॥ ६ ॥ १३ ॥ चंद्राभिमानितया चंद्रे स्थितस्य वायोर्महिमानमाह ॥ स एष इति । स एषः प्रजापतिर्वायुः । सम्यक् हरेः वत्सस्सन् रमत इति व्युत्पत्त्या संवत्सरनामा षोडशकलः षोडशकलोपेतचंद्रे

सएषसंवत्सरःप्रजापतिःषोडशकलस्तस्यरात्रयएवपंचदशकलाध्रुवैवास्यषोडशीकला सरात्रिभिरेवाचपूर्यतेअपचक्षीयते सोमावास्यांरात्रिमेतयाषोडश्याकलयासर्वमिदंप्राणभृदनुप्रविश्यततःप्रातर्जायतेतस्मादेतांरात्रिंप्राणभृतःप्राणंनविच्छिंद्यादपिकृकलासस्यैतस्याएवदेवतायाअपचित्यै ॥ १४ ॥

विशेषेण सन्निहितस्तस्य चंद्रस्थवायोः । पंचदशकलाः रात्रय एव रात्रिनामका एव । अस्य चंद्रस्थस्य वायोः । षोडशी कला ध्रुवैव । पंचदशकलानां कथं रात्रिनामतेत्यत आह ॥ स इति । स चंद्रस्थो वायुः । रात्रिभिः शुक्लपक्षपंचदशरात्रिभिरेव पंचदशकलाभिरापूर्यतेच । कृष्णपक्षरात्रिभिः पंचदशभिरपक्षीयते च । शुक्लकृष्णपक्षयोरेकैकस्यां रात्रौ क्रमेण कलानां पूरणादपक्षयाच्च रात्रि नामिकाः कला इत्यर्थः । स्वयमकलोपि वायुः स्वाधिष्ठानचंद्रकलाभिरित्थमभिधीयते । स पंचदशकलारहितः अमावास्यां रात्रिं अमा

वास्यायां रात्रौ। एतया ध्रुवया षोडश्या कलया सर्वमिदं प्राणभृत्। प्राणिजातं। अनुप्रविश्य ततः प्रातः प्रतिपदि जायते द्वितीयकलायुक्तो भवतीत्यर्थः। तस्मादमावास्यायां रात्रौ चंद्रस्थवायोः प्राणभृत्सु संस्थितत्वादेतां रात्रिं एतस्यां रात्रौ। प्राणभृतो जीवतः। प्राणं जीवनं। न विच्छिंद्यात्। महापापहेतुः प्राणिवधो न कार्यः। कैमुत्येन एतमेवार्थमाह॥ अपीति। अल्पदोष हेतुवधस्यापि कृकलासस्य प्राणं न विच्छिंद्यात्। किमर्थमित्यत आह॥ एतस्या इति। एतस्यास्सर्वसंनिहिताया वायुदेवताया अपचित्यै पूजार्थमेवेत्यर्थः॥ ३॥ ६॥ १४॥ सोमस्थितस्य प्राणस्य सप्तान्नज्ञानिन्यपि स्थितिमाह॥ यो वा इति।

योवैससंवत्सरःप्रजापतिःषोडशकलोयमेवसयोयमेवंवित्पुरुषस्तस्यावित्तमेवपंचदशकलाआत्मै
वास्यषोडशीकलासवित्तेनैवाचपूर्यतेऽपचक्षीयतेतदेतन्नाभ्यंयदयमात्माप्रधिर्वित्तं तस्माद्यद्य
पिसर्वज्यानिं(जी)क्षीयतआत्मनाचेज्जीवतिप्रधिनागादित्येवाहुः॥ १५॥

षोडशकलः षोडशकलचंद्रांतस्थः। अयमेव सः। स कः। य एवं वित् सप्तान्नसृष्टिज्ञानी। पुरुषः। अयमिति तत्रस्थ इत्यर्थः। ज्ञानिस्थस्यापि वायोः षोडशकलात्वमाह॥ तस्येति। ज्ञानिस्थितस्य वायोः। वित्तं हिरण्यादिकमेव। पंचदशकलाः। अस्य सप्तान्नज्ञानिस्थस्य वायोरात्मा देहः। स्वाधिष्ठितज्ञानिदेहः। षोडशी कला। वित्तस्य पंचदशकलात्वं व्यनक्ति॥ स इति। सः ज्ञानिस्थो वायुः वित्तेनैवागतेनापूर्यते च। अपगतेन क्षीयते। वित्तस्यागमापायित्वात्पंचदशलकलात्वं देहस्य ध्रुवकलात्वं चोप

पादयति ॥ तदेतदिति । यदयमात्मा योयमात्मा । तदेतन्नाभ्यं रथचक्रस्थानीयं । वित्तं प्रधिः अरस्थानीयं । एवं सति फलित माह ॥ तस्मादिति । तस्मादात्मवित्तयोर्नाभिप्रधिस्थानत्वात् यद्यपि सर्वज्यानिं सर्वस्वं ( जीं )क्षीयते परैरपहृियते तथाप्यात्मना नाभिस्थानीयेन देहेन । चेद्यदि जीवति । तदा तर्ह्ययं प्रधिना अरस्थानीयेन वित्तेन अगात् । वित्तहीनो जायत इति यावत् । इत्येवाहुः ॥ ३ ॥ ६ ॥ १५ ॥ सप्तान्नवेदिनः फलं वक्तुं तदुपयुक्तमाह ॥ अथेत्यादिना । पुत्रेणैव औरसपुत्रेणैव शिष्येणैव

अथत्रयोवावलोकामनुष्यलोकःपितृलोकोदेवलोकइतिसोयंमनुष्यलोकःपुत्रेणैवजय्योना
न्येनकर्मणा कर्मणापितृलोकोविद्ययादेवलोकोदेवलोकोवैलोकानाꣳश्रेष्ठस्तस्माद्विद्यांप्रशꣳ
संति ॥ १६ ॥

वा । पुनः पुनः कर्मकरणलक्षणो मनुष्यलोकः । जय्यो जेतव्यः प्राप्तव्यः । नान्येन कर्मणेति । यद्यपि पुनः पुनः कर्मकरणरूपो मनुष्यलोकः जय्यः स्वात्मीयकर्मणा जन्मांतरं प्राप्य संपादयितुं शक्यः । तथापि विनैव जन्मांतरमुक्तरूपमनुष्यलोकजयः पुत्रेणैव पुत्रादिकृतकर्मफलभोक्ता पितेति भावः । पितृलोकः स्वर्गादिः । ज्योतिष्टोमादिकर्मणा प्राप्यः । देवलोको विद्यया तत्त्वज्ञानेन । ज्ञानेनैव परं पदमित्युक्तेः । को विशेषो देवलोकस्य येन विद्यासाध्यत्वं तस्येत्यत आह ॥ देवलोक इति ।

तस्माच्छ्रेष्ठलोकसाधनत्वात् । प्राज्ञा इति शेषः ॥ ३ ॥ ६ ॥ १६ ॥ पुत्रेणोक्तो मनुष्यलोकजयो न साधारणेन । किंतु सुशिक्षितेनेत्याह ॥ अथात इति । पुत्रादिसाधनानां साध्यविशेषोक्त्यनंतरं । अतः फलवत्त्वात्संप्रत्तिः संप्रदानमुपदेशः । पित्रा पुत्रं प्रति क्रियमाणोपदेशप्रकार उच्यत इत्यर्थः । यदा पिता निमित्तैर्मरिष्यंतमात्मानं मन्यते । अथ तदा त्वं ब्रह्म त्वं यज्ञस्त्वंलोक

अथातःसंप्रत्तिर्यदाप्रैष्यन्मन्यतेऽथपुत्रमाहत्वंब्रह्मत्वंयज्ञस्त्वंलोकइतिसपुत्रःप्रत्याहाहंब्रह्माहंयज्ञोहंलोकइतियद्वैकिंचानूक्तंतस्यसर्वस्यब्रह्मेत्येकता येवैकेचयज्ञास्तेषांसर्वेषांयज्ञइत्येकता येवैकेचलोकास्तेषांसर्वेषांलोकइत्येकताएतावद्वाइदंसर्वमेतस्मात्सर्वंसन्नयमितोऽभुनजादिति तस्मात्पुत्रमनुशिष्टंलोक्यमाहुस्तस्मादेनमनुशासति सयदैवंविदस्माल्लोकात्प्रैत्यथैभिरेवप्राणैः सहपुत्रमाविशति सयद्यनेनकिंचिदक्ष्णयाकृतंभवतितस्मादेनंसर्वस्मात्पुत्रोमुंचातितस्मात्पुत्रो नाम सपुत्रेणैवास्मिंल्लोकेप्रतितिष्ठत्यथैनमेतेदेवाःप्राणाःअमृताआविशंति ॥ १७ ॥

इति पुत्रमाह । स एवमुक्तः पुत्रः अहं ब्रह्मा अहं यज्ञोहं लोक इति प्रत्युत्तरमाहेत्यर्थः । अत्र ब्रह्मादिपदानां तिरोहितार्थत्वात्तद्व्याचष्टे श्रुतिः ॥ यद्वा इति । यत्किंच वै प्रसिद्धं अनूक्तं अनुवचनं तस्य शब्दस्य ब्रह्मेत्येकता ब्रह्मशब्देन ग्रहणमित्यर्थः । ये के च वै प्रसिद्धा द्रव्ययज्ञास्तेषां यज्ञ इत्येकता यज्ञशब्देन ग्रहणमित्यर्थः । ये के च वै प्रसिद्धा लोकाः स्वर्गाद्यास्तेषां लोक इत्येकता

लोकशब्देन ग्रहणं । तथाच त्वं ब्रह्मेत्यादेर्वेदाध्ययनकर्ता भव । तदनंतरं वेदोक्तरीत्या यज्ञकर्ता सँल्लोको लोकसंपादको भवेति पित्रोक्तः पुत्रस्तथाध्ययनादिकर्ता भवानीत्युत्तरमुक्तवानिति । उक्तादन्यदपि कस्मात्पित्रा नोपदिष्टमित्यतस्त्रयातिरिक्तस्याभावादित्याह ॥ एतावदिति । इदं सर्वं कर्तव्यतयोपदेष्टव्यं एतावदेव । वेदानधीत्य तदुक्तरीत्या यज्ञादि कर्म कृत्वा मोक्षादि लोकमापादयेत्येतावदेवेत्यर्थः । पिता पुत्रं कुत एवानुशास्तीत्याशंकां सप्तान्नविद्याज्ञानिनो देवस्य फलोक्त्या निराह ॥ एतस्मादिति । सन्नयं समीचीनन्यायवंतं । सन्मार्गिणमिति यावत् । पुत्रमिति शेषः । इतः प्राप्तः । पुत्रेशेन स्थित्वेति यावत् । एतस्मादनुशिष्टात्पुत्रात् । सर्वं तत्कृतवेदाध्ययनादिफलं । अभुनजत् आभुक्तेः भुंक्ते पितेति यत्तस्मादनुशिष्टं पुत्रं लोक्यं लोकसाधनं आहुर्ज्ञानिनः । तस्माल्लोक्यत्वादेवैनं पुत्रं अनुशासति अनुशास्ति पितेत्यर्थः । एतस्मात्सर्वमित्यत्र मृतः पुत्रे स्थित्वा भुंक्ते इत्युक्तमयुक्तं । मृतस्य तदयोगात् इत्यत आह ॥ स इति । एवं वित् सप्तान्नविद्योपासकस्स देवो मनुष्यत्वमाप्तो यदाऽस्माल्लोकात्प्रैति मृतो भवति । अथ तदा । एभिरेव प्राणैस्स्ववाङ्मनःप्राणाभिमानिभिस्सरस्वत्यादिभिस्सह स्वांशिरूपसामर्थ्याच्च पुत्रमाविशति । सप्तान्नोपासकस्य फलांतरमाह ॥ स इति । अनेन पित्रा । सप्तान्नविदा यदि कदाचित् अक्ष्णया छिद्रेण पापेन । किंचित् कर्म कृतं भवति । तदा स पुत्रस्तस्माच्छिद्रकर्मणा एनं स्वपितरं । मुंचति मोचयति पापकर्मफलानुभवं परिहरतीत्यर्थः । तस्माच्छिद्रकर्मणस्त्राणान्निमित्तात्पुत्रो नाम । पुदिति छिद्रपापं ततस्त्रायत इति पुत्र इति । एवं येन पुत्रतः फलमाप्तं तेनैव मनुष्यलोको जित इत्याह ॥ स इति । पुत्रेणैव पुत्रे स्थित्वैवास्मिन् भूलोके प्रतितिष्ठति न साक्षात् । न केवलं पुत्रे स्थिति

रूपः मनुष्यलोकजयादिस्सप्तान्नविद्योपासकस्य फलं अपि तर्हि मोक्षश्चेत्याह ॥ अथैनमिति । अथ मुक्त्यनंतरं । एनं सप्तान्नविदं मुक्तं । एते प्राणाः वाङ्मनःप्राणाभिमानिनः सरस्वत्यादयो देवाः । अमृताः मुक्तास्संतः स्वरूपभूतवागादिनियामकत्वेन आविशंति । अत्र मुक्ते जीवे प्राणप्रवेशोक्तिर्वायोरुच्यमाना विरिंचस्यैव रूपांतरेणेति ज्ञेयं ॥ ३ ॥ ६ ॥ १७ ॥ ननु वागादेः पृथिव्याद्यभिमानसत्त्वात्कथं मुक्तमाविशेयुरित्यतस्तदानीं तत्त्यागात्प्रवेशो युक्त इति भावेन वागादेः प्रवेशस्य स्थानफले अप्याह ॥ पृथिव्यै चैनमित्यादिना पर्वत्रयेण । चतुर्थी पंचम्यर्थे । सा च ल्यब्लोपे पृथिवीमग्निं च परित्यज्येत्यर्थः । तदभिमानं

पृथिव्यैचैनमग्नेश्चदैवीवागाविशतिसावैदैवीवाग्ययायद्यदेववदतितत्तद्भवति ॥ १८ ॥
दिवश्चैनमादित्याच्चदैवंमनआविशतितद्वैदैवंमनोयेनानंद्येवभवत्यथोनशोचति ॥ १९ ॥

हित्वेति यावत् । दैवी सप्तान्नविन्मुक्ते विशेषावेशाद्दैवीत्युक्ता वाक् सरस्वती एनं मुक्तं आविशति मुक्तस्वरूपवाचमिति योज्यं । का दैवी वागित्यत आह ॥ सेति । यया आविष्टया सरस्वत्या प्रेरितो मुक्तो यद्यद्वदति तत्तद्भवत्येव न मोघं । सा दैवी वागित्यर्थः ॥ ३ ॥ ६ ॥ १८ ॥ दिवश्चैनमिति अद्भ्यश्चैनमिति च पर्वद्वयमेवमेव योज्यं । आनंद्येवेत्येवकारव्यावर्त्योक्तिः अथो न शोचतीति न दुःखी भवतीत्यर्थः ॥ ३ ॥ ६ ॥ १९ ॥ यो यत्प्रेरितो मुक्तः संचरंश्चासंचरंश्च न व्यथते सर्वसामर्थ्ययुक्तत्वात् अथो तस्मादेव न रिष्यति न म्रियते । इति मनुष्याणां संचारे व्यथादि असंचारे चाश्वा नामतः संचरन्नसंचरंश्चेत्युक्तं । न केवलं सप्तान्न

विद्याभिज्ञस्स्वपुत्रे तिष्ठति किंतु सर्वभूतेषु चेत्याह ॥ स य इति । एवं वित् एवं सप्तान्नविद्याभिज्ञो देवः । सर्वेषां भूतानामात्मा व्यापको भवति । तत्र दृष्टांतो ॥ यथेति । यथैषा प्राणरूपा देवता सर्वेषां भूतानामात्मा एवमित्यर्थः । सप्तान्नविदो मुक्तस्य फलांतर माह ॥ स इति । स वक्ष्यमाणो दृष्टांतो यथा एतां देवतां प्राणाख्यां सर्वाणि भूतानि अवंति । तज्ज्ञानस्य गोप्यत्वेन अयोग्येषु नोपदिशंति । एवं ह एवमेव । एवं विदं सप्तान्नविद्याविदं मुक्तं । सर्वाणि भूतानि अवंति गोपायंति । सप्तान्नविद्याभिज्ञस्य सर्वभूत स्थितौ भूतशोकेनास्यापि शोकस्स्यादित्यत आह ॥ यदिति । इमाः प्रजाः । यदु किंच यत्किंचित् शोचंति । तत् शोकशब्दितं दुःखं ।

अद्भ्यश्चैनंचंद्रमसश्चदैवःप्राणआविशतिसवैदैवःप्राणोयःसंचर ँश्चासंचर ँश्चनव्यथतेथोनारिष्य ति सयएवंवित्सर्वेषांभूतानामात्माभवतियथैषादेवतैव ँसयथैतांदेवता ँसर्वाणिभूतान्यवंत्ये व ँहैवंविद ँसर्वाणिभूतान्यवंति यदुकिंचेमाःप्रजाःशोचंत्यमैवासांतद्भवतिपुण्यमेवामुंगच्छ ति नहवैदेवान्पापंगच्छति ॥ २० ॥

आसां देवतानां नैव भवति । किंतु अमा देहनियामकदैत्यैस्सहाऽऽसां प्रजानामेव भवति । न तु तत्रस्थसप्तान्नोपासकानां देवानां । कुत्त एतत्प्रजाकृतं पुण्यमेवामुं सर्वप्रजास्थितं सप्तान्नविदं प्रति गच्छति न पापं । येन तद्धेतुकश्शोकस्स्यादिति भावः । एतदपि कुत इत्यत आह ॥ न ह वा इति । यतो नियामकतया प्राणिदेहस्थान् देवान्पापं न गच्छति । ह वै प्रसिद्धमेतत् । सप्तान्नविदश्च देवा एवेति भावः । तदाह सूत्रे । स्वामिनः फलश्रुतेरित्यात्रेय इति । तत्र प्रजाकृतपुण्यभाक्त्वपापालेपयोर्देवानामुक्तेः ॥ ३ ॥ ६ ॥ २० ॥

६ **

समान्नविद्याविदो वाङ्मनःप्राणान् हरिविषयान् कुर्यात् । साधारणमन्नं च विष्ण्वर्पणबुद्ध्या भूतेभ्यो दद्यादिति व्रतमुक्तं । तस्यैव हरिप्राणविषयोच्छ्वासनिःश्वासरूपं व्रतांतरं प्राण्याच्चैवापान्याच्चेति वक्तुं हरिप्राणविषयं तत्कस्मात्कार्यमित्यतस्तयोर्महिमानमाह ॥ अथेति । देवरूपाधिकार्युक्त्यनंतरं अतः वक्ष्यमाणव्रतस्य फलत्ववात् । प्राण्याच्चेत्यादिना वक्ष्यमाणव्रतस्य हरिप्राणविषयतया

अथातोव्रतमीमाꣳसाप्रजापतिर्हकर्माणिससृजेतानिसृष्टान्यन्योन्येनास्पर्धंतवदिष्याम्येवाहमिति वागदध्रे द्रक्ष्याम्यहमितिचक्षुः श्रोष्याम्यहमितिश्रोत्रमेवमन्यानिकर्माणियथाकर्म तानि मृत्युःश्रमोभूत्वोपयेमे तान्याप्नोत्तान्याप्त्वामृत्युरवारुंधत्तस्माच्छ्राम्यत्येववाक्श्राम्यतिचक्षुः श्राम्यतिश्रोत्रमथेममेवनाप्नोद्योयंमध्यमःप्राणस्तानिज्ञातुंदध्रिरेऽयंवैनःश्रेष्ठोयःसंचरꣳश्चासंचरꣳश्चनव्यथतेथोनरिष्यतिहंतास्यैवसर्वेरूपमसामेतितएतस्यैवसर्वेरूपमभवꣳस्तस्मादेतएतेनाख्यायंतेप्राणाइतितेनहवावतत्कुलमाचक्षतेयस्मिन्कुलेभवतियएवंवेदयउहैवंविदास्पर्धतेअनुशुष्यहैवांततोम्रियतइत्यध्यात्मं ॥ २१ ॥

कार्यत्वमीमांसा क्रियत इत्यर्थः । प्रजापतिर्वासुदेवः । कर्माणि कर्मसाधनानि । अध्यात्मं वचनादिक्रियासाधनंवागादींद्रियाभिमानिनोऽधिदैवं ज्वलनादिक्रियाकर्त्रग्न्यादिदेवान् ससृजे । ससर्ज । तानि सृष्टान्यग्न्यादीनि अन्योन्येन अन्योन्यमस्पर्धंत । अहमेव श्रेयानहमेव श्रेयानिति पस्पृधुः । प्राणस्योत्तमतां जानंतोपि इंद्रादिदेवाः प्राणोत्तमत्वनिर्णयायैव अध्यात्ममधिदैवं

च विवादं कृतवंत इत्यर्थः । एवं विवादिनो देवान् प्रति यो देवः स्वव्यापारमश्रांत एव सन् जीवेष्वजस्रं करोति । स एव भवतां मध्ये श्रेष्ठ इति हरिरुवाच । ततस्ते स्वस्वव्यापारं कुर्वंतः श्रांता बभूवुरिति वक्तुं तत्र तावदध्यात्मं तत्प्रकारमाह ।। वदिष्याम्येवेति । अहं जीवेन वचनक्रियां अश्रांत एव कारयिष्याम्येवेति वाङ्नामा अग्निः दध्रे । मनो दधार । मेन इति यावत् ।। इति चक्षुरिति । चक्षुर्मान्यादित्यो दध्रे । श्रोत्रमानी चंद्र इति दध्रे इति प्राग्वज्ज्ञेयं । एवमन्यानि कर्माणि क्रियासाधनानि मनःप्रभृतीनि । यथाकर्म स्वस्वव्यापारमनुसृत्य दध्र इत्यर्थः । तत्र स्थूलमनोभिमानी शक्रः यज्ञादि कर्म अहं करिष्याम्येवेति दध्रे इति सूक्ष्ममनोभिमानी गरुडः ध्यानं करिष्याम्येवेति दध्र इति ज्ञेयमित्यर्थः । अश्रांतास्संत एव स्वस्वव्यापारान् करिष्याम एव वयमिति मन्वाना वागादींद्रियदेवा अग्न्यादयो वचनादिक्रियामनारतं चक्रुरिति सर्वस्य तात्पर्यार्थः । ततः किं जातमित्यत आह ।। तानीति । प्रजापतिरित्यनुषज्यते । प्रजापतिर्ब्रह्मा । तानि वागादि दैवतानि । श्रमः श्रमकरो भूत्वा । उपयेमे प्राप्तः । ततश्च श्रमेण भगवत्कर्माकरणहेतुना मृत्युः पापमानी । तानि आप्नोत् व्याप्नोत् । अवारुंधत् (भगवदाराध)(वच)नादि क्रियाभ्रंशादिरूपावरोधमकरोत् । तस्मान्मृत्युनावरुद्धत्वादेवाद्यापि वाक् श्राम्यत्येव । चक्षुः श्राम्यति । श्रोत्रं श्राम्यति मनः श्राम्यतीत्यपि ज्ञेयं । स्वस्वकर्मकृतावशक्ता अभूवन्वागादयो देवा इत्यर्थः । अथेतरदेवानां श्रांत्यनंतरं योयं मध्यमः प्राणो मुख्यवायुरिममेव । प्रजाप्रतिर्ब्रह्मा । श्रमकरो भूत्वा नाप्नोत् । समशक्तिमत्त्वात् । ततश्च श्रांत्यभावेन सदा सर्वभगवत्कर्मकरणाद्धेतोर्मृत्युरपीमं मुख्यवायुं नाप्नोदित्यर्थः । तानि पापात्मासुरावरुद्धानि अग्न्यादि दैवतानि । तदनवरुद्धं मुख्यवायुं ज्ञातुं दाध्रिरे मनश्चक्रुः । अयं वै वायुरेव नोस्माकं मध्ये श्रेष्ठ इति निश्चिक्युः । श्रैष्ठ्यानिश्चयहेतुमाह ।।

य इति । ततः किं चक्रुरित्यत उक्तं ॥ हंतेति । हंतेति हर्षे सर्वे देवा अस्यैव वायोरेव रूपं प्रतिमा तद्भूत्याश्च असाम भवामेत्यु क्त्वेति शेषः । तदाविष्टास्संतस्तद्भूत्या अभवन्नित्यर्थः । तस्माद्देवानां प्राणप्रतिमात्वाद्देते देवा एतेन प्राणनाम्ना आख्यायंते प्राणा इति । प्राणाधीनत्वमात्रेण तन्नामवत्वेन भाव्यमिति कुत इत्यतस्तत्र दृष्टांतेन तदुपपादयति ॥ तेनेति । यस्मिन्कुले यः श्रेष्ठस्तस्य तेन नाम्ना तत्कुलमाचक्षत इति योजना । उक्तश्रेष्ठत्ववेदिनः फलमाह ॥ य एवमिति । य एवं प्राणमहात्म्यं वेद तेन एवं विदा । यः स्पर्धते सोनुशुष्यांऽततोम्रियत इत्यध्यात्मं । देहनियामकदेवनिर्णीतवायुश्रैष्ठ्यनिरूपणं कृतमित्यर्थः ॥ ३ ॥ ६ ॥ २१॥

अथाधिदैवतंज्वलिष्याम्येवाहमित्यग्निर्दध्रेतप्स्याम्यहमित्यादित्योभास्याम्यहमितिचंद्रमाए वमन्यादेवतायथादैवत ँ्सयथैषांप्राणानांमध्यमःप्राणएवमेतासांदेवतानांवायुम्लोंचंतिह्यन्या देवतानवायुस्सैषानास्तमितादेवतायद्वायुः ॥ २२ ॥

अथ अध्यात्मं प्राणश्रैष्ठ्यनिर्णयप्रकारोक्त्यनंतरं । अधिदैवतं प्राणस्य श्रैष्ठ्यनिर्णयप्रकारः । उच्यत इत्यर्थः । ज्वलिष्याम्ये वेत्यादेस्संगतिरर्थश्च वदिष्याम्येवेत्यादेरिव ध्येयः । अन्या देवताश्शक्रशेषरुद्रविपाः । यथा दैवतं तत्तद्देवतासंबंधिकर्मानुसृत्य । दध्रिर इति ज्ञेयमित्यर्थः । तत्प्रकारस्तु वृष्टिप्रवर्तकोहमेवेति शक्रो मनो दध्रे पंचरात्रप्रवर्तकोहमेवेति शेषः । पंचरात्रोक्तक्रिया तात्पर्यवानहमेवेति रुद्रः । वेदप्रवृत्तिकृदहमेवेति विपः इत्येवं ध्येयं । वागाद्यभिमानिनो देवाः श्रमरूपेण ब्रह्मणा प्राप्ता मृत्यु

ना चावरुद्धाः न तथा प्राण इत्युक्तमत्राप्यतिदिशति ॥ स यथेति । वक्ष्यमाणनिदर्शनं यथेत्यर्थः । वागादीनां देवानां मध्ये मध्यमः प्राणः यथा श्रमरूपेण प्रजापतिना न प्राप्तोदेवं मृत्युनाऽनवरुद्धोऽत एव श्रेष्ठश्च । तथैतासां देवतानामग्न्यादीनां मध्ये वायुरित्यर्थः । अन्या देवताः मृत्युनावरुद्धत्वादेव म्लोचंति म्लाना भवंति । न वायुः म्लोचति । कुतः यद्वायुः यो वायुस्सैषा देवता। नास्तमिता तस्मादिति योज्यं । अत्र वायोरनस्तमितत्वं ज्ञानानित्यत्वेन ज्ञेयं । एवं प्रलयकालेपि प्रतिभाति परावर इत्यादेः ॥ ३ ॥

अथैषश्लोकोभवति ॥ यतश्चोदेतिसूर्योस्तंयत्रचगच्छतीतिप्राणाद्वाएषउदेतिप्राणेस्तमेतितंदेवाश्चक्रिरेधर्मꣳसएवाद्यसउश्वइतियद्वाएतेमुंह्यध्रियंततदेवाप्यद्यकुर्वंतितस्मादेकमेवव्रतंचरेत्प्राण्याच्चैवापान्याच्चनेन्मापाप्मामृत्युराप्नुवादितियद्युचरेत्समापिपायिषेत्तेनोएतस्यैदेवतायैसायुज्यꣳसलोकतांजयति ॥ २३ ॥ सप्तान्नब्राह्मणं ॥ ३ ॥ ५ ॥

॥ ६ ॥ २२ ॥ अध्यात्ममधिदैवं च वागादिदेवताः प्राणाधीना इत्युक्तार्थे मंत्रमाह ॥ अथैष श्लोक इति । श्लोकमर्धश उदाहृत्य व्याचष्टे ॥ यत इत्यादिना । सूर्य इत्युपलक्षणं सूर्यादयो देवा इत्यर्थः । यत इत्यादि यच्छब्दद्वयस्य तमित्युत्तरार्धगतेन तच्छब्देनान्वयः । यच्छब्दद्वयार्थः प्राणादिति प्राण इति च । यतः प्राणाद्वा एष एते सूर्यादयः उदेति उद्यंति । जायंत इति यावत् । यत्र प्राणे अस्तमेति अदर्शनं यांतीत्यर्थः । उत्तरार्धमाह ॥ तमिति । देवाः तं प्राणमुद्दिश्य धर्मं हंसोपास्तिलक्षणं । चक्रिरे इति ।

स एव धर्मोद्यापि वर्तते स एव श्वोपि वर्तिष्यत इत्यर्थः । तमित्यर्धं व्याचष्टे ॥ यद्वा इति । एतं देवाः । यत् धर्मसाधनव्रतं । अमुं हि अमुष्मिन्प्राणश्रैष्ठ्यनिर्णयकाले । अध्रियंत धृतवंतः । तदेव व्रतमद्य कुर्वंति वै प्रसिद्धं । अपि पदेन श्वोपि कर्तार इति समुच्चीयते । यदर्थं प्राणस्योत्तमत्वं साधितं तदाह ॥ तस्मादिति । प्राणस्य सर्वजीवोत्तमत्वात् । मा मां । पाप्मा मृत्युर्नेत् नैवाप्नुवदिति मन्वानोधिकारी एकमेव प्राणमात्रविषयकमेव । प्राण्याच्चापान्याच्च श्वासोच्छ्वासरूपं हंसोपास्तिलक्षणं व्रतं । चरेत् कुर्यात् । उपक्रांतं प्राणव्रतं मध्ये न विसर्जयेदित्याह । यद्यु चरेत् यदि प्राणव्रतं चरेत् प्रारभेत । तर्हीति शेषः । समापिपयिषेत् समा

त्रयंवाइदंनामरूपंकर्मतेषांनाम्नांवागित्येतदेषामुक्थमतोहिसर्वाणिनामान्युत्तिष्ठंत्येतदेषाᳩसा
मैतद्धिसर्वैर्नामभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिनामानिबिभर्ति ॥ १ ॥

पयितुमिच्छेत् समापयेदेवेत्यर्थः । यद्वा यद्यु चरेत् देवतांतरव्रतमारभेत चेत् समापिपयिषेत् समापयितुमिच्छेदित्यर्थः । उक्तव्रतमनुतिष्ठतः फलं ॥ तेनेति । तेन उ तेनैव एतद्व्रतानुष्ठानेनैव । एतस्यै देवतायै एतस्या देवतायास्सायुज्यं । सलोकतां समानलोकतां । तेन वायुना । जयति प्राप्नोति । अधिकारिभेदेन प्राप्यद्वयोक्तिः ॥ ३ ॥ ६ ॥ २३ ॥ इति सप्तान्नब्राह्मणं ॥ छ ॥ छ ॥
सर्वस्रष्टृत्वाद्वायुरुत्तम इत्युक्तं । तदेवोत्तमत्वं प्रकारांतरेणाह ॥ त्रयमित्यादि ब्राह्मणेन । इदं जगत् । नामरूपं कर्मेति त्रयं वै त्रिविधं वै । कर्मेत्यनंतरमिति शब्दो योज्यः । तेषां नामरूपकर्मणां मध्ये नाम्नां वाग्भारतीत्येतद्दैवतं । तन्माहिमानमाह ॥

एतदिति । एषां नाम्नां वागित्येतदुक्थं उत्थापकं । कथं ॥ अतो हीति । हि यस्मादतो वाग्देव्याः भारत्याः सर्वाणि नामान्युत्तिष्ठंति उत्पद्यंते । वाचो महिमांतरमाह ॥ एतदिति । वागित्येतत् वाग्देवतं एषां नाम्नां साम । कुतः हि यस्मादेतत् वाग्दैवतं । सर्वैर्नामभिः शब्दैः सहैव रूपाणि कर्माणि च माति जानातीति च समं । वाचो गुणांतरमाह ॥ एतदिति । वागित्येतत् । वाग्दैवतं

अथरूपाणांचक्षुरित्येतदेषामुक्थमतोहिसर्वाणिरूपाण्युत्तिष्ठंत्येतदेषांसामैतद्धिसर्वैरूपैःसममे तदेषांब्रह्मैतद्धिसर्वाणिरूपाणिबिभर्ति ॥ २ ॥ अथकर्मणामात्मेत्येतदेषामुक्थमतोहिसर्वाणि कर्माण्युत्तिष्ठंत्येतदेषाꣳसामैतद्धिसर्वैःकर्मभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिकर्माणिबिभर्तितदे तत्त्रयꣳसदेकमयमात्मात्मैकःसन्नेतत्त्रयंतदेतदमृतꣳसत्येनच्छन्नंप्राणोवाअमृतंनामरूपेसत्यंताभ्या मयंप्राणश्छन्नः ॥ ३ ॥ षष्ठब्राह्मणं ॥ ३ । ६ ॥ बृहदारण्यकेतृतीयोध्यायः ॥ ३ ॥

एषां नाम्नां ब्रह्म कुतः हि यस्मात् वागित्येतत् सर्वाणि नामानि बिभर्ति तस्माद्ब्रह्मेत्यर्थः ॥ ३ ॥ ७ ॥ १ ॥ नामाभिमानिदैवतमुक्त्वा रूपाभिमानिदैवतमाह ॥ अथेति । नामाभिमान्युक्त्यनंतरं रूपमान्युच्यत इति योज्यं । रूपाणां चक्षुश्चक्षुर्नामा रुद्र इत्येतद्दैवतं । शिष्टं प्राग्वत् । सर्वै रूपैस्सह नामानि कर्माणि च माति जानातीति सममित्यर्थः ॥३॥७॥२॥ कर्ममानिनमाह ॥ अथ कर्मणामिति । आत्मा प्राण इत्येतद्दैवतमित्यर्थः । शिष्टं प्राग्वत् । सर्वैः कर्मभिस्सहैव नामानि रूपाणि च माति जानातीति सममित्यर्थः।

भारतीरुद्रवायूनां नामादित्रितयाभिन्नत्वोक्त्या माक्षसाम्यशंकां वारयति ॥ तदेतदिति । तदेतद्वागादित्रयं सदेकं द्वयोरेका धीनत्वादेकमित्युच्यत इत्यर्थः । स एकः कः यदधीनं द्वयमित्यत आह ॥ अयमात्मेति । प्राण इत्यर्थः । एक इत्युक्त्या प्राणाभेदभ्रांतिं निराह । उ एकः । उपरितनः श्रेष्ठः सन्नेतत्त्रयमिति । कुतः प्राणस्य श्रेष्ठतेत्यत आह ॥ तदेतदमृतमिति । तद्व्यनक्ति ॥ प्राणो वा अमृतमिति । नित्यज्ञान इत्यर्थः । सत्येन छन्नमित्येतद्व्यनक्ति ॥ नामरूपे सत्यमिति । वाक्चक्षुः शब्दिते नामरूपदेवते सत्यमित्यर्थः । ताभ्यां नामरूपदेवताभ्यां भारतीरुद्राभ्यां अयममृतं प्राणश्छन्नः तयोर्नियामकत्वेन तावनुप्रविष्ट इत्यर्थः ॥ ३ ॥ ७ ॥ ३ ॥ इति सप्तमब्राह्मणं ॥ छ ॥ छ ॥ इति श्रीकाण्वोपनिषदर्थसंग्रहे राघवेंद्र यतिकृते तृतीयोध्यायः ॥ ३ ॥ हरिः ॐ ॥

दृप्तबालाकिर्हानूचानोगार्ग्यआस सहोवाचाजातशत्रुंकाश्यंब्रह्मतेब्रवाणीति सहोवाचाजात शत्रुःसहस्रमेतस्यांवाचिदद्मोजनकोजनकइतिवैजनाधावंतीति ॥ १ ॥

पूर्वाध्याये अश्वमेधब्राह्मणादिभिः प्रायेण बाह्या ब्रह्मविद्या उक्ताः । अत्र त्वध्याये प्रायेणांतरा ब्रह्मविद्या उच्यंते । तत्राद्यब्राह्मणे बाह्या ब्रह्मविद्या न साक्षान्मोक्षसाधिका । किंतु स्वहृदिस्थब्रह्मविद्येत्याह ॥ दृप्त इत्यादिना । बलाकस्यापत्यं बालाकिः । गर्गस्य गोत्रापत्यं गार्ग्यः । अनूचानो वेदाध्ययनसंपन्नः । अत एव दृप्तः दर्पवान् अहंकारीति यावत् । आस बभूव । हे

त्याश्चर्ये । सह प्रसिद्धो गार्ग्यः । काश्यं काश्यां भवं । अजातशत्रुनामानं राजानमभिगम्य । ते तुभ्यं । ब्रह्म ब्रवाणि वदानीत्युवाच । लोडुत्तमपुरुषैकवचनं ब्रवाणीति । स एवमुक्तोऽजातशत्रुरुवाच ह किल । किमिति । एतस्यां वाचि ब्रह्म ते ब्रवाणीत्यस्यां वाचि एतद्वचनविषये । सहस्रं गवामिति वा निष्काणामिति वा योज्यं । दद्म इत्यपहासवचनमुवाचेत्यर्थः । कस्मादेवं मामपहससीत्यतो यदि त्वं ब्रह्म जानीथास्तर्हि समीपस्थं ब्राह्मणं त्वां विहाय जनकराजानं प्रति धावनं ब्रह्मजिज्ञासवः कुतः कुर्युरिति भावेनाह ॥ जनको जनक इति । तद्धावनमयुक्तं स्यादित्यर्थः । त्वं तु केवलं दर्पेणैव मामात्थ न वस्तुतः ब्रह्म

सहोवाचगार्ग्यो यएवासावादित्येपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मि
न्संवादिष्ठाअतिष्ठाःसर्वेषांभूतानांमूर्धाराजेतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेअतिष्ठाः
सर्वेषांभूतानांमूर्धाराजाभवति ॥ २ ॥

जानासीति भावः । इति शब्दो हेतौ । इति कृत्वा परिहास इति ॥४॥१॥१॥ एवमपहासलज्जितो गार्ग्यः स्वाभ्यस्तविद्यामाह ॥ स इत्यादिना खंडद्वादशकेन । किमुवाचेत्यतो ॥ य एवेत्यादि । पुरुषो विष्णुरस्तीति शेषः । एवमग्रेपि ज्ञेयं । राजा त्वया ज्ञातादधिकमप्यहं जानामीत्याह ॥ स होवाचेति । एतस्मिन् विष्णोरादित्यस्थत्वोपासनाविषये । मा मां । मा संवदिष्ठाः संवादं माकार्षीः । अधिकगुणत्वेन ज्ञातुः पुरतोऽल्पज्ञानेन संवादो न कार्यः । न ह्यादित्यस्थो विष्णुर्ब्रह्मेत्येव मया ज्ञातं येन मामत्र

संवदः किं त्वित्यत आह ॥ अतिष्ठा इति । जगद्धर्मवर्जितत्वेन सर्वमतीत्य स्थितत्वादतिष्ठाः सर्वेषां भूतानां मूर्धा उत्तमः । राजा दीप्यमानः । राजृ दीप्ताविति धातोः । इति वै इत्येवाहमेतमादित्यस्थपुरुषमुपास इत्युवाचेति वा इति कृत्वा मा संवदिष्ठा इति वा इति पदस्य पूर्वेणान्वयः । अतिष्ठत्वादिगुणविशिष्टत्वे तात्पर्यद्योतनाय तज्ज्ञानिनः फलमाह ॥ स य इति । योधिकारी । एतमादित्यस्थं पुरुषमेवं उक्तगुणविशिष्टं । उपास्ते सोऽतिष्ठत्वादिगुणयुक्तो भवतीत्यर्थः । ते च गुणा यथायोग्यं ध्येयाः

सहोवाचगार्ग्योयएवासौचंद्रेपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्त्सं वदिष्ठाबृहत्पांडुरवासाःसोमोराजेतिवाअहमेतमुपासइति सयएतमेवमुपास्तेऽहरहःसुतःप्रसु तोभवतिनास्यान्नंक्षीयते ॥३॥ सहोवाचगार्ग्योयएवासौविद्युतिपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठास्तेजस्वीतिवाअहमेतमुपासइति सयएतमेवमुपास्ते तेजस्वीहभवतितेजस्विनीहास्यप्रजाभवति ॥ ४ ॥

॥ ४ ॥ १ ॥ २ ॥ स होवाच गार्ग्यो य एवासौ चंद्र इत्यादिषु द्वादशखंडेषु एवमेव योजना ध्येया । तत्रादित्यचंद्रविद्युदाकाश वाय्वग्न्यवादर्शगच्छत्पाश्चात्यशब्ददिक्छायात्मरूपेषु द्वादशाधिकरणेषु आदित्यादीनि देवतारूपाणि ध्येयानि । दैवतासु भगवंतमुपास्येत्यादि भाष्योक्तेः । बृहत् पांडुरं शुक्लं वासो यस्यासौ तथोक्तः । अस्यैवमुपासकस्य गृह इति शेषः । अहरहः

प्रतिदिनं । सुतः प्रसुतस्सोमयागो भवति । अन्नं भोग्यं च न क्षीयते ॥४॥१॥३॥ तेजस्वी ह भवति इह लोके ॥४॥१॥४॥ न प्रवर्त्यते केनचिदप्रवर्ति । अस्य प्रजासंततिर्नोद्वर्तते न विच्छिद्यते ॥ ४ ॥ १ ॥ ५ ॥ इंद्रः परमैश्वर्ययुक्तः । विगतं कुंठनं

सहोवाचगार्ग्योयएवायमाकाशेपुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचाजातशत्रुर्मामैतस्मिन्सं
वदिष्ठाःपूर्णमप्रवर्तीतिवाअहमेतमुपासइति सयएतमेवमुपास्तेपूर्यतेप्रजयापशुभिर्नास्यास्माल्लो
कात्प्रजोद्वर्तते ॥५॥ सहोवाचगार्ग्योयएवायंवायौपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजा
तशत्रुर्मामैतस्मिन्संवदिष्ठाइंद्रोवैकुंठोपराजितासेनेतिवाअहमेतमुपासइति सयएतमेवमुपा
स्तेजिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥ सहोवाचगार्ग्योयएवायमग्नौपुरुषएतमे
वाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाविषासहिरितिवाअहमेतमुपास
इति सयएतमेवमुपास्तेविषासहिर्ह भवतिविषासहिर्हास्यप्रजा भवति ॥ ७ ॥

पराभवो यस्यासौ विकुंठः स एव वैकुंठः । स्वयमेवापराजितवद्रूपत्वादपराजि(त)ता सेना । जिष्णुरुत्तमः । अपराजिष्णु रन्यतः पराजयहीनस्वभावः । अन्यतस्त्यजायी अन्येषां जेतेत्यर्थः ॥ ४ ॥ १ ॥ ६ ॥ शत्रूणामसह्यत्वाद्विषासहिः

॥ ४ ॥ १ ॥ ७ ॥ प्रतिरूपोऽनुकूलः । प्रतिरूपमनुकूलं । अथो अन्यच्च प्रतिरूपोऽनुकूलः पुत्रोऽस्मादुपासकाज्जायते ॥ ४ ॥ १ ॥ ८ ॥ रोचिष्णुः प्रकाशनशीलः । उ एव । अथो अन्यच्च । फलं यैर्विद्वद्भिस्संनिगच्छति संगतो भवति । तान् सर्वान्

सहोवाचगार्ग्योयएवायमप्सुपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाःप्रतिरूपइतिवाअहमेतमुपासइति सयएतमेवमुपास्तेप्रतिरूपंहैवैनमुपगच्छतिनाप्रतिरूपंअथोप्रतिरूपोऽस्माज्जायते ॥ ८ ॥ सहोवाचगार्ग्योयएवायमादर्शेपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठारोचिष्णुरितिवाअहमेतमुपासइतिसयएतमेवमुपास्तेरोचिष्णुर्हभवतिरोचिष्णुर्हास्यप्रजाभवत्यथोयैःसन्निगच्छतिसर्वांस्तानतिरोचते ॥ ९ ॥ सहोवाचगार्ग्योयएवायंयंतंपश्चाच्छब्दोऽनूदेत्येतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाअसुरितिवाअहमेतमुपासइतिसयएतमेवमुपास्तेसर्वंहैवास्मिँल्लोकआयुरेतिनैनंपुराकालात्प्राणोजहाति ॥ १० ॥

अतिरोचते अतिक्रम्य प्रकाशते ॥ ४ ॥ १ ॥ ९ ॥ यंतं गच्छंतं । अनु पश्चात्पृष्ठतः । शब्द उदेति उत्पद्यते । एतं गच्छत्पाश्चात्यशब्दस्थं पुरुषमित्यर्थः । असुः आयुष्यप्रदः । सर्वमायुरेतीत्यस्य तात्पर्यमाह ॥ नैनमिति ॥ ४ ॥ १ ॥ १० ॥

द्वितियिः द्वितीयवान्। अनपगः नापगच्छतीत्यनपगः। अनपगोद्वितीय इत्यस्य अनपगतपरिवारवानित्यर्थः। अस्मादुपासकात्। गणः परिवारः ॥४॥१॥११॥ छायामयः छायागतः। मृत्युर्मारकः ॥ ४ ॥ १ ॥ १२ ॥ आत्मनि हिरण्यगर्भे। आत्मन्वी

सहोवाचगार्ग्योयएवायंदिक्षुपुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्संव
दिष्ठाद्वितीयोनपगइतिवाअहमेतमुपासइतिसयएतमेवमुपास्तेद्वितीयवान्हभवतिनास्माद्गण
श्छिद्यते ॥११॥ सहोवाचगार्ग्योयएवायंछायामयः पुरुषएतमेवाहंब्रह्मोपासइतिसहोवाचा
जातशत्रुर्मामैतस्मिन्त्संवदिष्ठामृत्युरितिवाअहमेतमुपासइतिसयएतमेवमुपास्तेसर्वंहैवा
स्मिँल्लोकआयुरेतिनैनंपुराकालान्मृत्युरागच्छति ॥ १२ ॥ सहोवाचगार्ग्योयएवायमात्मनि
पुरुषएतमेवाहंब्रह्मोपासइति सहोवाचाजातशत्रुर्मामैतस्मिन्त्संवादिष्ठाआत्मन्वीतिवाअहमे
तमुपासइति सयएतमेवमुपास्तेआत्मन्वीहभवत्यात्मान्विनीहास्यप्रजाभवतिसहतूष्णीमा
सगार्ग्यः ॥ १३ ॥

चित्ताभिमानिविरिंचिवान्। तत्सेव्य इति यावत्। आत्मन्वी भवति चित्तवान् भवति ॥ ४ ॥ १ ॥ १३ ॥ गार्ग्यस्य तूष्णीं

भावानंतरं किंजातमित्यत आह ॥ स होति । सः अजातशत्रुः । तूष्णीमासीनं गार्ग्यं । एतावन्नू ३ एतावदेव । काकुरयं । त्वया विदितमेतावदेव किमित्युवाच । स एवमुक्तो गार्ग्यः प्रत्याह ॥ एतावद्धीति । एतावदेव मया विदितं हीति निश्चयमाह । एवं गार्ग्येण प्रत्युक्तो राजा प्रत्याह ॥ नैतावता विदितं भवतीति । आदित्यादिदेवतासु भगवदुपासने तत्तद्देवतासामीप्यं भवति नं मोक्षप्राप्तिः । अतो मोक्षाय स्वहृदि हरेरुपास्त्या भाव्यमिति भावेन नैतावता विदितमित्युक्तं । उपासात्रैविध्यादिति सूत्रे



सहोवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीतिनैतावताविदितंभवतीतिसहोवाचगार्ग्यउपत्वा यानीति ॥१४॥ सहोवाचाजातशत्रुःप्रतिलोमंवैतद्यद्ब्राह्मणःक्षत्रियमुपेयाद्ब्रह्ममेवक्ष्यतीतिव्ये वत्वाज्ञापयिष्यामीतितंपाणावादायोत्तस्थौतौहपुरुषꣳसुप्तमाजग्मतुस्तमेतैर्नामभिरामंत्रयांच्च केबृहत्पांडुरवासःसोमराजन्निति सनोत्तस्थौतंपाणिनापेषंबोधयांचकारसहोत्तस्थौ ॥ १५ ॥

केषांचित्सर्वगत्वेन केषांचिद्धृदये हरिः । केषांचिद्बहिरेवासावुपास्य इति भाष्योक्तेर्बहिरुपासकानामपि किंचिद्धृतोपास्त्यैव मोक्ष इति भावः । एवमुक्तः स गार्ग्यः । त्वा त्वां । उपयानि । स्वहृदिस्थोपासनाप्रकारं वेदितुं शिष्यत्वेनोपगच्छामि त्वामित्यजातशत्रुं प्रति उवाचेत्यर्थः ॥ ४ ॥ १ ॥ १४ ॥ एवमुक्तः सोजातशत्रुरुवाच । क्षत्रियो मह्यं ब्रह्म वक्ष्यतीति ब्राह्मणः क्षत्रियं शिष्यत्वेनो पेयादिति यत् एतत् । प्रतिलोमं वै विपरीतं वै । तस्मात् त्वा त्वां प्रति । ब्रह्म विज्ञापयिष्याम्येव । विज्ञापनमेव करिष्यामि नत्वाचार्य

इवोपदेशं करोमीत्यर्थः । न स्थानतोपि परस्योभयलिंगं सर्वत्र हीत्युक्तदिशा सर्वत्र हरेरविशेषेण सत्त्वात्कथं हृद्गतस्योपास्तिरेव मुक्तिहेतुर्न देवतांतरगतस्येत्यतः । हृद्गतस्य हरेर्देवतांतस्थरूपापेक्षया स्वस्मिन् विशेषसंबंधं ज्ञापयितुकामस्तं गार्ग्यं पाणावादाय हस्ते गृहीत्वा उत्तस्थौ । तौ गार्ग्याजातशत्रू । कचिद्देशे सुप्तं कंचित्पुरुषं समाजग्मतुः संगतौ भवतः । हृदिस्थरूपस्य देहे उपकार्यत्वोपकारित्वरूपविशेषसंबंधज्ञापनार्थं । तं सुप्तपुरुषांतर्गतं हरिं । बृहत्पांडरवासः सोम राजन्नित्येतैर्नामभिरामंत्रयांचक्रे । संबोधयामास । स एवमामंत्रितस्सुप्तस्थो हरिः नोत्तस्थौ । जीवं नोत्थापयामास । तं सुप्तं पाणिना पेषं कृत्वेति शेषः । बोधयां

सहोवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषःक्वैषतदाभूत्कुतएतदागादितितदु हनमेनेगार्ग्यः ॥ १६ ॥

चकार । स सुप्तस्थो हरिरुत्तस्थौ । जीवमुत्थापयामासेत्यर्थः । हेत्याश्चर्ये । अतः प्रबोधोस्मादिति सूत्रात् । नामभिराह्वाने कृतेपि नामभिराह्वानमवज्ञाय पाणिपेषणेनोत्थानं शरीरे हरेर्विशेषसंबंधोस्तीति ज्ञापनार्थमिति भावः ॥ ४ ॥ १ ॥ १५ ॥ कुतः स्वहृदिस्थस्योपकारित्वरूपविशेषसंबंधः । येन तदुपास्तिरावश्यकेत्यतः सुप्त्याद्यवस्थाप्रवर्तकत्वादिति विवक्षुस्तथाविधं त्वं जानासि किमिति पृच्छत्यजातशत्रुर्गार्ग्यं ॥ स होवाचेत्यादिना । एष जीवः एतत् एतस्मिन् शरीरे यत्र यस्मिन्हरौ । सुप्तः य एष सुप्ताधारः पुरुषो विज्ञानमयः सम्यक् ज्ञानस्वरूपः । एष विज्ञानमयो हरिः तदा सुप्तिकाले । क्वाभूत् कुत्र स्थितः । एतत्

एतस्मिन्प्रबोधकाले । कुत आगादित्युवाचेतीति शब्दान्वयः । तदु ह न मेने तत् सुप्तिकालीनं हरेरावासस्थानं तदागमनविधिं च गार्ग्यो न उ मेने नैव व्यजानात् ॥ ४ ॥ १ ॥ १६ ॥ क्वैतदभूदित्यहं न जाने । त्वं ब्रूहीति पृष्टोजातशत्रुस्तदुक्तवानित्याह ॥ स होवाचेति । यत्रैष इत्यादिपुरुषांतांशे सुप्तिस्वरूपोक्त्यर्थोनुवादः । तदा सुप्तिकाले । एषां प्राणानां इंद्रियाणां । विज्ञानं विज्ञान

सहोवाचाजातशत्रुर्यत्रैषएतत्सुप्तोभूद्यएषविज्ञानमयःपुरुषस्तदेषांप्राणानांविज्ञानेनविज्ञानमा
दाययएषोंतर्हृदयआकाशस्तस्मिन्शेतेतानियदागृह्णात्यथहैतत्पुरुषःस्वपितिनामतद्गृहीतएवप्रा
णोभवतिगृहीतावाग्गृहीतंचक्षुर्गृहीतंश्रोत्रंगृहीतंमनः॥१७॥सयत्रैतत्स्वप्नयाचरतितेहास्यलोका
स्तदुतेवमहाराजोभवत्युतेवमहाब्राह्मणउतेवोच्चावचंनिगच्छति सयथामहाराजोजानपदान्गृ
हीत्वास्वेजनपदेयथाकामंपरिवर्ततैवमेवैषएतत्प्राणान्गृहीत्वास्वेशरीरेयथाकामंपरिवर्तते ॥१८॥

शक्तिं । विज्ञानेन बुद्ध्या । बुद्धिपूर्वं स्वेच्छयेति यावत् । आदाय य एषोंतर्हृदये आकाशोस्ति तस्मिन् शेते । सुप्तोभूदित्युक्तसुप्तिः केत्यत आह ॥ तानि यदेति । विज्ञानमयः पुरुषो हरिः । तानि विज्ञानजननशक्तिमंतींद्रियाणि । गृह्णाति निर्व्यापाराणि करोति । अथ तदा । एतत् एतस्मिन्हरौ । पुरुषः स्वपिति नाम प्रसिद्धं । सर्वेंद्रियव्यापारोपरमः सुप्तिरित्यर्थः । प्राणानां विज्ञानेन विज्ञानमादायेत्युक्तं विशदयति । प्राणो घ्राणः । तेन विज्ञानमयेन गृहीत एव भवतीत्यादि ॥ ४ ॥ १ ॥ १७ ॥

स्वहृदिस्थः स्वप्नावस्थाप्रेरकत्वाच्च स्वोपकारित्वरूपविशेषसंबंधवान् देह इति भावेनाह ॥ स इति । स हरिः । यत्र यदा । एतत् एतस्मिन् शरीरे । स्वप्नया नाड्या । चरति जीवं चारयति च । हरिर्नाड्यां कुतश्चरतीत्यत आह ॥ ते हेति । ह यस्मात्ते नाडी विशेषाः । अस्य हरेर्लोकाः तस्मात्तया चरतीत्यन्वयः । जीवेशयोर्द्वयोरपि स्वप्नावस्थागतत्वे को विशेषस्तयोरित्यतः जीवव्यापारं तावदाह ॥ तदुतेवेति । तत् तदा । महाराज इव भवति । तद्वदात्मानं पश्यतीत्यर्थः । महाब्राह्मण इव भवतीत्यनुषंगः । उतशब्दाः पक्षभेदद्योतकाः । किंबहुना यदुच्चं गजादि यच्चावचं श्वमार्जारादि तद्वदात्मानं निगच्छति पश्यति । एवं जीव

अथयदासुषुप्तोभवतितदानकस्यचनवेदहितानामनाड्योद्वासप्ततिसहस्राणिहृदयात्पुरीततम
भिप्रतिष्ठंतेताभिःप्रत्यवसृप्यपुरीततिशेतेसयथाकुमारोवामहाराजोवामहाब्राह्मणोवातिघ्नी
मानंदस्यगत्वाशयीतैवमेवैषएतच्छेते ॥ १९ ॥

स्थितिमुक्त्वा भगवतः स्थितिं सदृष्टांतमाह ॥ स इति । जानपदान् जनपदस्थान् गृहीत्वा परिवर्तते । संचरति एवमेवैष भगवान् एतत् एतस्य जीवस्य प्राणान् बाह्येंद्रियाणि । स्वे स्वाधीने ॥ ४ ॥ १ ॥ १८ ॥ तानि यदेत्युक्तसुप्तौ विशेषं वक्तुं सुप्तस्थितिमाह ॥ अथेति । यदा जीवः कस्यचन किंचन । व्यत्ययात् । बाह्यविषयान् । न वेद तदा सुषुप्तो भवतीत्यर्थः । क सुप्तो भवति जीव इत्यत आह ॥ हिता इत्यादि । द्वाभ्यामधिकसप्ततिसहस्राणि हिता इति नाम प्रसिद्धा नाड्यः । शिराः हृदयात् ह हृदयमारभ्य

स्थितं । पुरीततं शिरोंतपर्यंतं शरीरं व्याप्तं । सुषुम्नाख्यनाडीविशेषं । अभि परितः प्रतिष्ठंते । ताभिर्नाडीभिः । प्रत्यवसृप्य चरित्वा । पुरीतति सुषुम्नाख्यनाडीविशेषे । शेते नाडीविशेषस्थे हराविंत्यर्थः । तदाह सूत्रे । तदभावो नाडीषु तच्छ्रुतेरात्मनि हेति । सुप्तौ ज्ञानरहितश्चेत्कथं तिष्ठतीत्यतस्सुखमयस्तिष्ठतीति सदृष्टांतमाह ॥ स यथेति । स प्रसिद्धो दृष्टांतो यथा । कुमारो रुद्रः । महाराजो वायुः । महाब्राह्मणो विरिंचः । आनंदस्य आनंदरूपस्य हरेः । अतिघ्नीं समीपं । गत्वा शयीत सुखमास्ते । एवमेवैष जीवः । एतत् एतस्मिन् सुषुम्नास्थे हरौ शेते सुखमास्ते ॥ ४ ॥ १ ॥ १९ ॥ जाग्रत्प्रवर्तकत्वाच्च स्वोपकारी

**सयथोर्णनाभिस्तंतुनोच्चरेद्यथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरंत्येवमेवास्मादात्मनःसर्वेप्राणाःसर्वे लोकाःसर्वेदेवाःसर्वाणिभूतानिव्युच्चरंति ।तस्योपनिषत्सत्यस्यसत्यमितिप्राणावैसत्यंतेषामे षसत्यं ॥ २० ॥ अजातशत्रुब्राह्मणं ॥ ४ ॥ १ ॥**

स्वहृदिस्थ इत्येतत्सदृष्टांतमाह ॥ स यथेति । प्राग्वदर्थोनयोः पदयोर्ज्ञेयः । ऊर्णनाभिस्स्वोपभुक्तमन्नं तंतुरूपेणोच्चरेत् उद्गमयेत् । यथा वा क्षुद्रा विस्फुलिंगा अग्नेर्व्युच्चरंति उद्गच्छंति । एवमेवास्माद्विज्ञानमयादात्मनो हरेस्सुप्तौ गृहीतास्सर्वे प्राणा इंद्रियाणि । सर्वे लोकाः भूरादयः । सर्वे देवाश्चतुर्मुखादयः । सर्वाणि तदन्यानि सर्वाणि । भूतानि प्राणिनः । व्युच्चरंति उत्पद्यंते । लीयंते चेत्यपि ग्राह्यं । अत्र यथोर्णनाभिस्तंतुनोच्चरेत् एवमेवास्मादात्मनः सर्वे प्राणा इत्येतावता

जाग्रत्प्रवर्तकत्वलाभेपि यथाग्नेरिति दृष्टांतपूर्वकं सर्वलोका इत्युक्तिः प्रागुक्तप्राणादिसर्वश्रैष्ठ्यस्योपपादनाय । अंतर्यामिणो गोप्यं नामाह ॥ हृदयस्येति । तस्य हृदिस्थस्य हरेरुपनिषत् रहस्यं नाम किमिति ॥ सत्यस्य सत्यमिति । तदर्थं स्वयमेव व्यनक्ति ॥ प्राणा इति । प्रागुक्तप्राणलोकदेवभूतानि प्राणंतीति व्युत्पत्त्या प्राणपदेन ग्राह्यानि तेषामेष हरिः सत्यं सच्छब्दोत्र जन्मस्थितिप्रलयमोक्षपरः तान् यापयतीति सत्यमिति तदर्थ इत्यर्थः ॥ ४ ॥ १ ॥ २० ॥ **प्रथममजातशत्रुब्राह्मणं** ॥१॥छ॥

इंद्रियजयाभावे विद्या न सिद्ध्यतीत्यतस्तदर्थं कांचन विद्यामाह ॥ यो हवा इत्यादिना ॥ वायुर्गोवत्सरूपेण सर्वप्राणिषु

**योहवैशिशुꣳसाधानꣳसप्रत्याधानꣳसस्थूणꣳसदामंवेदससप्तहद्विषतोभ्रातृव्यानवरुणद्धययंवाव शिशुर्योयंमध्यमःप्राणस्तस्येदमेवाधानामिदंप्रत्याधानंप्राणःस्थूणाअन्नंदाम ॥ १ ॥**

वर्तते । लोके वत्सस्य स्थूलगृहमध्ये सूक्ष्मगृहं कृत्वा तन्मध्ये वत्सबंधनाय कंचन शंकुं स्थापयित्वा दाम्ना वत्सं बध्नंति तथा देहेपि गोवत्सरूपेण सर्वप्राणिगतस्य वायोः सूक्ष्मगृहस्थूलगृहशंकुदामस्थानीयानि प्राणिनां सूक्ष्मदेहस्थूलदेहहरिश्रीतत्त्वानि जानतः सर्वेंद्रियजयरूपफलोक्तिपूर्वमाधानादिस्वरूपाणि व्यनक्ति ॥ यो हवा इति । तथाहि यो ह वै प्रसिद्धोधिकारी । साधानं सप्रत्याधानं सस्थूणं सदा(मानं) मं शिशुं वेद उपास्ते स उपासकः । द्विषतः विषयाभिधावनहेतून् । अत एव भ्रातृव्यान् शत्रून् । सप्त मनोबुद्धिसहितज्ञानेंद्रियरूपान् सप्तगतेरिति सूत्रात् तदभिमान्यसुरान् । अवरुणद्धि वशीकृतेंद्रियो भवतीत्यर्थः । कः

शिशुः किमाधानादिकं यत्साहित्यज्ञानेन इंद्रियजय इत्यत आह ॥ अयमिति । यांयं प्रागुक्तस्सर्वप्राणिषु स्थितो मध्यमः प्राणो वायुरयमेव शिशुः गोवत्सरूपः । तस्य इदमेव प्रमाणसिद्धं जीवसूक्ष्मशरीरमेवाधानं आवासस्थानभूतं सूक्ष्मगृहं । इदं जीवस्य स्थूलशरीरमेव प्रत्याधानं वितानं । गृहाग्रप्रदेशविस्तारः । प्राणो हरिः स्थूणा वत्सबंधनस्थाणुः । अन्नं श्रीतत्वं । दाम बंधनरज्जुः ॥ ४ ॥ २ ॥ १ ॥ अक्षिस्थवायूपास्तिः कार्येति भावेन आख्यायिकामाह ॥ तमिति । तं अक्षिस्थं वायुं । अक्षितयः अक्षीणज्ञानमनसः । एता वक्ष्यमाणा रुद्राद्यास्सप्त देवताः । उपतिष्ठंते उपासते । तदेव व्यनक्ति ॥ तद्या इति ।

तमेताःसप्ताक्षितयउपतिष्ठंतेतद्याइमाअक्षँल्लोहिन्योराजयस्ताभिरेनꣳरुद्रोन्वायत्तोऽथयाअक्ष
न्नापस्ताभिःपर्जन्योयाकनीनकातयादित्योयत्कृष्णंतेनाग्निर्यच्छुक्लंतेनेंद्रोधरयैनंवर्तन्यापृथिव्य
न्वायत्ताद्यौरुत्तरयानास्यान्नंक्षीयतेयएवंवेद ॥ २ ॥

तत् । तत्र । सप्तसु मध्ये । रुद्रः । अक्षन् अक्षणि । या इमाः प्रसिद्धाः । लोहिन्यो लोहिताः । राजयः रेखाः । ताभिरधिष्ठानरूपाभिः । ता अधिष्ठायेति यावत् । एनमक्षिस्थवायुं । अन्वायत्तस्तदधीनस्तमुपतिष्ठते इत्यर्थः । अथेत्यर्थांतरे । या अक्षन्नापः । अक्षण्यापः । ताभिः पर्जन्यः एनं । अन्वायत्त इत्यनुषंगः । पूर्वत्रेवार्थः । या कनीनिका चक्षुषि कृष्णवर्णवर्तुलमंडलमध्यस्था तया आदित्योन्वायत्तः । यत्कृष्णं चक्षुषि । तेनाग्निरन्वायत्तः । यच्छुक्लं तेनेंद्रोन्वायत्तः । अधरया । वर्तन्या चक्षुर्गतोदकादि

निर्गमनमार्गेण । तामधिष्ठायेति यावत् । एनं वायुं । पृथिवी धरादेवी । अन्वायत्ता । द्यौः द्युलोकमानिनी । उत्तरया वर्तन्या । एनमन्वायत्ता । एवं वायुविदः फलमाह ॥ नास्येति । योधिकारी । एवं मोक्षार्थं रुद्राद्युपास्यमक्षिस्थं वायुं । वेद स्थूणाभूतविष्णुना सह वेद । अस्य वेदितुरन्नं न क्षीयते । मुक्तः सन् अक्षयमेव भोगमनुभवतीत्यर्थः ॥ ४ ॥ २ ॥ २ ॥ रुद्रादयः अक्षिस्थं प्राणमुपासत इत्युक्तार्थे मंत्रं पठति ॥ तदेष श्लोक इति । तत्र उक्तार्थे संवादीति शेषः । चमस इव चमसः

तदेषश्लोकोभवत्यर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन्यशोनिहितंविश्वरूपं तस्यासतऋषयःसप्ततीरे वागष्टमीब्रह्मणासंविदानेत्यर्वाग्बिलश्चमसऊर्ध्वबुध्नइतीदंतच्छिर एषह्यर्वाग्बिलश्चमसऊर्ध्व बुध्नस्तस्मिन्यशोनिहितंविश्वरूपमितिप्राणावैयशोविश्वरूपंप्राणानेतदाह तस्यासतऋषयः स प्ततीरइतिप्राणावाऋषयःप्राणानेतदाह वागष्टमीब्रह्मणासंविदानेतिवाग्घ्यष्टमीब्रह्मणासंवित्ता ३

मंत्रं पादश उपादाय व्याचष्टे ॥ अर्वागित्यादिना । यदिदं प्रथमपादोक्तं तच्छिरः कुतः सिद्धं अर्वाग्बिलचमसत्वं शिरस इत्यतः तत्प्रसिद्धमित्याह ॥ एष हीति । एष शिरः । चमसशब्दापेक्षया एष इति पुंल्लिंगता । चम्यते भक्ष्यतेनेनेति चमसः । चमु अदने इत्यतोऽस प्रत्ययः । तदुक्तं सूत्रे चमसवदविशेषादित्यत्र चमसशब्दो यथा शिरसि मुख्यः इदं तच्छिर इत्याद्युक्तिबला देवमव्यक्तादिशब्दोपि नामानि सर्वाणीत्युक्तिबलाद्विष्णौ मुख्य इति । द्वितीयं पादमुपादाय व्याचष्टे ॥ तस्मिन्नित्यादिना ।

तस्मिंच्छिरसि दक्षिणाक्षणि । प्राणा वै यशो विश्वरूपं यशो विश्वरूपशब्दिताः प्राणा वै प्राणा एवेत्युक्तं व्यक्तमाह ॥ प्राणानेत दिति । तस्मिन् यशो निहितं विश्वरूपमित्येतत्प्राणान् विष्णुरमावायून् आहेत्यर्थः । ज्ञानसुखात्मकत्वात् यशश्शब्देन गुणपूर्ण रूपत्वात् स्त्रीषु पूर्णत्वात् जीवेषु पूर्णत्वात् क्रमाद्विष्णुरमावायवो विश्वरूपशब्देन प्रणेतृत्वहेतुना प्राणशब्देन चोच्यंत इति भावः ।

इमावेवगौतमभरद्वाजावयमेवगौतमोऽयंभरद्वाजइमावेवविश्वामित्रजमदग्नीअयमेवविश्वा मित्रोऽयंजमदग्निरिमावेववसिष्ठकश्यपावयमेववसिष्ठोऽयंकश्यपोवागेवात्रिर्वाचाह्यन्नमद्यतेऽ त्रिर्हवैनामैतद्यदात्तिरिति सर्वस्यात्ता भवतिसर्वमस्यान्नंभवतियएवंवेद॥४॥शिशुब्राह्मणं ॥४॥२॥

यद्वा एतत्प्राणानाहेति कुत इत्यतः प्राणा वा इति पूर्ववाक्यं । यशो विश्वरूपं यशो विश्वरूपशब्दोक्तास्त्रयो दक्षिणाक्षिगाः प्राणा वै प्रणेतारो वै । तस्मादिति योजना । एतत् तस्यासत ऋषय इत्येतत्प्राणानाह । कुतः । प्राणा वा ऋषय इति सप्तऋषयः प्रणेतारो वै अत इति योजना । तथाच वक्ष्यमाणास्सप्तऋषयः तीरे शुक्लोहितादिरेखारूपस्थानेषु । तस्य वायोरुपासकास्संत आसत इति तृतीयपादस्यार्थ इति भावः । न सप्तऋष्युपास्यत्वमेव वायोरपि तु वागुपास्यता चास्तीति भावेन प्रवृत्तं चरमपादमुपादाय वागित्येकपदस्यार्थमाह ॥ वागित्यादिना । वाग्देवी हि प्रसिद्धा । वाचि स्थिता सरस्वती अष्टमी अष्टसंख्यापूरिका । ब्रह्मणा ब्रह्मनाम्ना वायुना । संविता ज्ञाता । स स्थूणं वायुं उपास्त इति योज्यं ॥ ४ ॥ २ ॥ ३ ॥ ननु ताभिरेनं रुद्रोन्वायत्त इत्यादिना रुद्रादयः प्राणं सेवंत इत्युक्तार्थे सप्तर्ष्युपास्यत्वबोधकमंत्रोक्तिः कथमित्यतो मंत्रे सप्तर्षिपदेन रुद्रादय एव विवक्षिता इति भावेन गौतम

भरद्वाजादिसप्तऋषिवाचकशब्दैर्योगवृत्त्या रुद्रादय एवाभिधेया इत्याह ॥ इमावेवेति । इमौ इत्युक्तौ कावित्यतः प्रागुपासकत्वेन रुद्रोन्वायत्त इत्यादिना निर्दिष्टा एवेति भावेनाह ॥ अयमेवेति । प्रागुक्तो रुद्र एवातिशयेन ज्ञानवत्त्वहेतुना गौतम इत्युक्तः । अयमेव पर्जन्य एव वृष्टिद्वारा वाजमन्नं बिभर्तीति भरद्वाज उक्तः । अयमादित्य एव स्वप्रकाशेन विश्वज्ञापकत्वहेतुना विश्वामित्र शब्दोक्तः । अयमग्निः जं जातं अमितमपरिमितमत्तीति व्युत्पत्त्या जमदग्निपदोक्तः । अयमिंद्र एव वसतामुत्तमत्वहेतुना वसिष्ठ

द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंचमर्त्यंचामृतंचस्थितंचयच्चसच्चत्यच्च ॥ १ ॥

पदोक्तः । अयं पृथिवीत्युक्तो देवः कं मेघवृष्टमुदकं शयान एव पिबतीति हेतुना कश्यपशब्दोक्तः । वाक् वागभिमानिनी द्यौरेवात्रि रत्रिपदोक्ता । कुत इत्यतः व्युत्पत्त्या दर्शयाति ॥ वाचा ह्यीति । द्यौरित्युक्तया वाचान्नं द्युस्थैर्हुतमद्यते हि यतोत इति तर्ह्यत्तिरिति स्यात् न त्वत्रिरित्यत आह ॥ आत्तिरिति । अत्तिरिति यत् एतत् अत्रिर्ह वै नाम प्रसिद्धं इति । अत्तीत्यत्रिरिति वाच्यं गौतमा दिनामवत्त्वेन रुद्रादींश्च जानतः फलमाह ॥ सर्वस्येति । य एवं वेद स इति शेषः । सर्वस्येति कर्मणि षष्ठी । अद्याभावे कथमत्ततेत्यत उक्तं ॥ सर्वमस्येति ॥ ४ ॥ २ ॥ ४ ॥ शिशुब्राह्मणं ॥ २ ॥ उक्ता विद्याः हरेर्मूर्तामूर्तसारवैलक्षण्य ज्ञानपूर्वकमनुष्ठिताः फलिष्यंति नान्यथेत्यतो मूर्तामूर्तसारस्वरूपोक्तिपूर्वकं हरेः सर्ववैलक्षण्यमाह ॥ द्वे वावेत्यादिना खंडेन ।

ब्रह्मणो हरेर्मूर्तममूर्तं चेति द्वे रूपे प्रतिमे । एवेत्यवधारणे । प्रतिमे एव । न स्वरूपे इति । वावेति प्रसिद्धौ । मूर्तामूर्तयोर्विशेषणान्याह । मर्त्यमिति ॥ ४ ॥ ३ ॥ १ ॥ मर्त्यं स्थितं सच्चेति त्रयं मूर्तस्य विशेषणं अन्यत् त्रयममूर्तस्येति व्यंजयन् मूर्तस्वरूपं मूर्तसारं च तावदाह ॥ तदेतदिति । वायोरंतरिक्षशब्दितश्रीतत्वाच्च यदन्यद्रुद्रादिकं तदेतन्मूर्तं मुरेण पापेनाप्तत्वान्मूर्त

तदेतन्मूर्तंयदन्यद्वायोश्चांतरिक्षाच्चैतन्मर्त्यमेतात्स्थितमेतत्सत्तस्यैतस्यमूर्तस्यैतस्यमर्त्यस्यैतस्य स्थितस्यैतस्यसतएषरसोयएषतपातिसतोह्येषरसः ॥ २ ॥ अथामूर्तंवायुश्चांतरिक्षं चैतदमृतमेतद्यदेतत्यंतस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यैषरसोयएषएतस्मिन्मंडलेपुरुषस्तस्यह्येषरसइत्यधिदैवतं ॥ ३ ॥

मित्युच्यते । एतन्मूर्तं मर्त्यं शरीरमानित्वेन तत्त्यागरूपमरणोपेतं । एतत् मूर्तं स्थितं विष्ण्वन्यपुमधीनं । एतत् मूर्तं सत् षद्लृ विशरणगत्यवसादनेष्विति धातोर्विशरणावसादनयुक्तं । उक्तविशेषणानुवादपूर्वकं मूर्तसारमाह ॥ तस्यैतस्येति । य एष आदित्यमंडलगतस्तपति एष चतुर्मुखः रसस्सारः । कथं तस्य मूर्तस्य सारत्वमित्यतः तत्प्रसिद्धमित्याह ॥ सतो हीति । उपलक्षणं सत्त्वस्थितत्वमर्त्यत्वविशेषणयुक्तस्य मूर्तशब्दितस्य श्रीब्रह्मवाय्वन्यजगतः एष सूर्यमंडलगतविरिंचो रसः । हि प्रसिद्धमित्यर्थः ॥ ४ ॥ ३ ॥ २ ॥ अथ मूर्तोक्त्यनंतरं अमूर्तमुच्यत इति योज्यं । वायुः मुख्यवायुः । भगवदंतरेव रता क्षिता स्थितेत्यंतरिक्ष

नाम्नी श्रीतत्त्वं । श्रीश्चामूर्तं पापास्पृष्टतया मूर्तविरुद्धत्वादमूर्तमुच्यते । तद्विशेषणान्याह ॥ एतदमृतमित्यादिना । श्रियो नित्यमुक्तत्वादमृतत्वं । वायोर्देहानभिमानादमृतत्वं । हर्येकनियम्यत्वादेतदमूर्तं यदित्युच्यते । ततत्वात्सर्वज्ञत्वाच्चैतदमूर्तं त्यमित्युच्यते । उक्तानुवादेन तद्रसमाह ॥ तस्येति । एतस्मिन्मंडले रविबिंबे यः पुरुषः पूर्णषड्गुणो हरिः एष रसः सारः ।

अथाध्यात्ममिदमेवमूर्तंयदन्यत्प्राणाच्चयश्चायमंतरात्मन्नाकाशएतन्मर्त्यमेतात्स्थितमेतत्सत्तस्यै तस्यमूर्तस्यैतस्यमर्त्यस्यैतस्यास्थितस्यैतस्यसतएषरसोयच्चक्षुःसतोह्येषरसः ॥ ४ ॥ अथामूर्तंप्रा णश्चायमंतरात्मन्नाकाशएतदमृतमेतद्यदेतत्त्यंतस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्ययतएतस्यत्यस्यै षरसोयोयंदक्षिणेक्षन्पुरुषस्तस्यह्येषरसः ॥ ५ ॥

तस्य ह्येष रस इत्युक्तार्थं । इति एवं प्रकारेण अधिदैवतं मूर्तामूर्तनिरूपणमित्यर्थः ॥ ४ ॥ ३ ॥ ३ ॥ अथाधिदैवतं मूर्ताद्युक्त्यनंतरं । अध्यात्मं देहे । मूर्तामूर्ततद्रसा उच्यंत इत्यर्थः । तत्र मूर्तस्वरूपमाह ॥ इदमेवेति । प्राणाद्यदन्यत् यश्चाय मंतरात्मन् । आत्मनोंतराकाशस्तदभिमानि श्रीतत्त्वं । तस्माच्च यदन्यत् । इदमेव मूर्तामित्यर्थः । यश्चक्षुश्चक्षुर्गतो विरिंचः ॥ ४ ॥ ३ ॥ ४ ॥ दक्षिणेऽक्षन् अक्षणि । यः पुरुषः पूर्णषड्गुणो हरिः । शिष्टं पूर्ववद्व्येयं ॥ ४ ॥ ३ ॥ ५ ॥ अधिदैवमध्यात्मं

चोक्त्वा मूर्तरसस्य हरे रूपं दृष्टांतेनाह ॥ तस्येति । यथा महारजनं वासः महारजनरक्तं वासस्तथेति सर्वत्र याज्यं । पाण्ड्वाविकं पांडुरवर्णं अविलोमकृतं कंबलं यथा तथेत्यर्थः । यथेंद्रगोपस्तथेति । सकृद्विद्युत्तं युगपदुत्पन्नविद्युन्मंडलं । सकृद्विद्युत्तमिव भगवद्रूपं वेदितुः फलमाह ॥ सकृद्विद्युत्तेवेति । य एवं वेद सकृद्विद्युत्तमिव भगवद्रूपं वेद । सकृद्विद्युत्तेव प्रकाशमानास्य श्रीर्भवति । ह वा इति निश्चयमाह ॥ अथ मूर्तामूर्तस्वरूपोक्त्यनंतरं । अतः भगवतोऽमूर्तसारत्वात् । तस्यामूर्तसारस्य हरेरादेश उपदेश उच्यते ॥ नेति नेतीति । इति न इति नेति योजना । मूर्तवन्नामूर्तवन्नेति तदर्थः । मूर्तामूर्तविलक्षणं हरेरन्यदप्यास्ति किं तथा

तस्यहैतस्यपुरुषस्यरूपंयथामहारजनंवासोयथापाण्ड्वाविकंयथेंद्रगोपोयथाग्न्यर्चिर्यथापुंडरीकंय थासकृद्विद्युत्त꣸सकृद्विद्युत्तेवहवाअस्यश्रीर्भवतियएवंवेदाथातआदेशोनेतिनेतिनह्येतस्मादिति नेत्यन्यत्परमस्त्यथनामधेय꣸सत्यस्यसत्यमितिप्राणावैसत्यंतेषामेषसत्यं ॥६॥ मूर्तामूर्तब्राह्मणं ॥४॥३॥

हरेरुत्तमं चास्ति किमित्यतो नेत्याह ॥ न हीति । इति नेत्युच्यमानं एतस्माद्धरेरन्यन्नास्ति परं च न ह्यस्ति । एष एव परः मूर्तामूर्तं त्वपरमेवेति भावः । अथ आदेशानंतरं । तस्यामूर्तसारस्य नामधेयं ॥ सत्यस्य सत्यमितीति । तद्विवृणोति ॥ प्राणा वा इति । प्राणंतीति प्राणाः मूर्तामूर्तात्मकास्सत्यमुच्यंते । तेषामेष हरिः सत्यं सत्यत्वप्रद इत्यर्थः ॥ ४ ॥ ३ ॥ ॥ ६ ॥ मूर्तामूर्तब्राह्मणं ॥ अमूर्तसारोभगवानित्युक्तं तदुपपादयन्हरावतिस्नेहः कार्य इति भावेनाख्यायिकामाह ॥

मैत्रेयीत्यादिना । याज्ञवल्क्यस्य द्वे भार्ये मैत्रेयी कात्यायनी चेति । तत्र मैत्रेयीति संबोध्योवाच हेत्याश्चर्ये । मैत्रेय्याः प्रियत्व सिद्ध्यर्थे वा । वचनप्रकारमेवाह । अरे मैत्रेयि अहं । अस्मात्स्थानात् गृहस्थाश्रमादुद्यास्यन् उद्गत्य यास्यन्नस्मि। प्रव्रजिष्यन्नस्मि। हंत हर्षे । ते तवानया कात्यायन्या । अंतं निर्णयं विभागं करवाणीत्युवाचेति योजना ॥४॥४॥१॥ सा एवमुक्ता मैत्रेयी उवाच । ह आश्चर्य । कथमस्यैवं बुद्धिरिति । हे भगोः भगवन् । यत् यदा । मे मह्यं । इयं पृथिवी । वित्तेन पूर्णा स्यात्तदा । तेन वित्तपूर्ण

मैत्रेयीतिहोवाचयाज्ञवल्क्यउद्यास्यन्वाअरेऽहमस्मात्स्थानादस्मिहंततेनयाकात्यायन्यांतंकर
वाणीति ॥ १ ॥
साहोवाचमैत्रेयी यन्नुमइयंभगोःसर्वापृथिवीवित्तेनपूर्णास्यात्कथंतेनामृतंस्यामितिनेतिहोवा
चयाज्ञवल्क्योथयथैवोपकरणवतांजीवितंतथैवतेजीवितंस्यादमृतत्वस्यनाशास्तिवित्तेनेति
॥२॥ साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यांयदेवभगवान्वेदतदेवमेब्रूहीति ॥३॥

पृथिवीरूपोपायेन । अमृता मुक्ता स्यां । कथं किमित्युवाचेत्यर्थः । इति पृष्टो याज्ञवल्क्यो नानेन मुक्ता भविष्यसीति होवाच । तर्हि क्वोपयोगो वित्तस्येत्यतो मुक्त्यन्यत्रेति भावेनाह ॥ अथेति । अर्थांतरेऽथशब्दः । यथा लोके उपकरणवतां गृहारामखट्वाशय्या दिभोगसाधनवतां सुखेन जीवितं जीवनं तथा ते वित्तेन जीवितमेव स्यात् । अमृतस्य मुक्तेश्चाशा नास्ति वित्तेनेति होवाच याज्ञवल्क्यः

॥४॥४॥२॥ सा होवाचेत्यादि व्यक्तार्थं । यदेव मुक्त्युभयत्वेन वेद भगवान् । तदेव मे मह्यं ब्रूहीत्यर्थः ॥ ४ ॥ ४ ॥ ३ ॥ प्रियां

सहोवाचयाज्ञवल्क्यःप्रियाबतारेनः सतीप्रियंभाषसएह्यास्स्वव्याख्यास्यामिते व्याचक्षाणस्य
तुमेनिदिध्यासस्वेति ॥ ४ ॥ सहोवाचनवाअरेपत्युःकामायपतिःप्रियोभवत्यात्मनस्तुकामाय
पतिःप्रियोभवति नवाअरेजायायैकामायजायाप्रियाभवत्यात्मनस्तुकामायजायाप्रियाभवति
नवाअरेपुत्राणांकामायपुत्राःप्रियाभवंत्यात्मनस्तुकामायपुत्राःप्रियाभवंति नवाअरेवित्तस्य
कामायवित्तंप्रियंभवत्यात्मनस्तुकामायवित्तंप्रियंभवति नवाअरेब्रह्मणःकामायब्रह्मप्रियंभव
त्यात्मनस्तुकामायब्रह्मप्रियंभवति नवाअरेक्षत्रस्यकामायक्षत्रंप्रियंभवत्यात्मनस्तुकामायक्षत्रंप्रि
यंभवति नवाअरेलोकानांकामायलोकाःप्रियाभवंत्यात्मनस्तुकामायलोकाःप्रियाभवंति नवा
अरेदेवानांकामायदेवाःप्रियाभवंत्यात्मनस्तुकामायदेवाःप्रियाभवंति नवाअरेभूतानांकामा
यभूतानिप्रियाणिभवंत्यात्मनस्तुकामायभूतानिप्रियाणिभवंति नवाअरेसर्वस्यकामायसर्वंप्रि
यंभवत्यात्मनस्तुकामायसर्वंप्रियंभवति आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यो
मैत्रेय्यात्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदꣳसर्वंविदितं ॥ ५ ॥

स्तुवन्नुपदेक्ष्यामि सावधाना भवेत्याह ॥ स होति । अरे मैत्रेयि त्वं सती पतिव्रता । नः प्रिया प्रीतिविषयिणी । बत हर्षे । नः प्रियं

यथा भवति तथा भापसे। एहि आस्व उपविश। ते तुभ्यं। मे मम सकाशात्तन्निदिध्यासस्व। चित्ते सम्यग्धारयेत्युवाचेत्यन्वयः ॥४॥४॥४॥ आत्मापरोक्षज्ञानमेव मुक्त्युपाय इति भावेन तत्रादरजननायात्मनो महिमानमाह॥ **स होवाचेति**। अरे मैत्रेयि। पत्युः कामाय कामेन व्यत्ययात्। अस्या अहं प्रियस्स्यामितीच्छयेति यावत्। पतिः स्त्रियाः प्रियो न भवति। किंतु आत्मनो हरेः कामाय कामेन। पतिर्जायायाः प्रियो भवतीत्यर्थः। हरिश्चेदयमस्याः प्रियस्स्यादितीच्छति। तदासौ तत्प्रियो भवतीति भावः। एवमेवोत्तरवाक्यानि योज्यानि। तत्र तत्रास्पष्टपदानामर्थ उच्यते। जायायै जायायाः। पुत्राणां कामाय कामेन। पुत्राः प्रियाः। मातापित्रादेरिति योज्यं। वित्तस्य वित्ताभिमानिनः कुबेरस्य। वित्तं प्रियं जनस्येति योज्यं। ब्रह्मणः ब्राह्मणजात्याक्रांत विरिंचस्य। क्षत्रस्य क्षत्रजात्याक्रांतस्य वायोः। लोकानां लोकाभिमानिनां। भूतानां पंचमहाभूताभिमानिनां। सर्वस्य सर्वाभिमानिनो देवस्य मूलप्रकृतेः। यदिच्छया पत्यादयो जायादीनां प्रिया भवंति स आत्मा मया द्रष्टव्यः। तद्दर्शनस्य क उपायः तं ब्रूहीति पृच्छन्त्यै मैत्रेय्यै याज्ञवल्क्य आहेति मध्ये योज्यं। किमाहेत्यत आह॥ **आत्मा वा अर इति**। अरे मैत्रेयि। य आत्मा द्रष्टव्यः स श्रोतव्यो मंतव्यो निदिध्यासितव्य एवेति दर्शने श्रवणादीनि त्रीणि साधनानीति। यद्वा एवमात्मनो महिमोक्तौ तर्हि किं मया कार्यमिति मैत्रेय्या जिज्ञासायामाह॥ **आत्मा वार इति**। अरे मैत्रेयि। आत्मैव द्रष्टव्यः साक्षात्कर्तव्य इति विधिः। केनोपायेनेति तदीयहृद्गतप्रश्नस्योत्तरमाह॥ **आत्मा वार इति**। आत्मा द्रष्टव्य इति यदुक्तं मया तत्र श्रवणादीनि त्रीणि साधनानीति आत्मा वा अरे द्रष्टव्य इति वाक्यं विधिपरतयाऽनुवादपरतया च योज्यं। तथा सति मध्ये शेषो नापेक्षितः।

तदाह सूत्रे ब्रह्मजिज्ञासेति । ब्रह्मापरोक्षज्ञानाय श्रवणमनननिदिध्यासनरूपा जिज्ञासा कर्तव्येति तदर्थोक्तिः । श्रवणमौपदेशिकवाक्यार्थज्ञानं । मननं तु श्रुतेर्थे युक्त्यनुसंधानं । निरंतरचिंतनं निदिध्यासनं । दर्शने ध्यानमेव साक्षात्साधनं । श्रवणमननं तु ध्यानप्रतिबंधकाज्ञानसंशयविपर्ययनिरासद्वारा तदंगं । तदाह सूत्रे । तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबंधः फलमिति । आत्मज्ञानार्थं तच्छ्रवणादिकमिव कर्मदेवतादिज्ञानार्थमपि तच्छ्रवणादिकं कार्यं किमित्यत आह ॥ आत्मनो वा इति ।

ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेद क्षत्रंतंपरादाद्योन्यत्रात्मनःक्षत्रंवेद लोकास्तंपरादुर्योन्यत्रात्मनोलोकान्वेद देवास्तंपरादुर्योन्यत्रात्मनोदेवान्वेद भूतानितंपरादुर्योन्यत्रात्मनोभूतानिवेद सर्वंतंपरादाद्योन्यत्रात्मनःसर्ववेदेदंब्रह्मेदंक्षत्रमिमेलोकाइमेदेवाइमानिभूतानीदꣳसर्वंयदयमात्मा ॥ ६ ॥

आत्मनो दर्शनेन श्रवणेन मननेन विज्ञानेन निदिध्यासनेनेदं सर्वं कर्मदेवतादिकं जगद्विदितं विदितवत् ज्ञातफलं भवति । प्रधानविष्णुज्ञाने अप्रधानज्ञानफलमपि तेन भवतीत्यतो न तच्छ्रवणादि कार्यमिति भावः ॥ ४ ॥ ४ ॥ ५ ॥ कुतो हरेः प्राधान्यमित्यतो जगदाश्रयत्वादिति भावेनान्यथाज्ञानिनोनर्थमाह ॥ ब्रह्मेत्यादिना । यः जीवः । ब्रह्म प्रागुक्तं ब्रह्मशब्दार्थं । आत्मनो हरेरन्यत्रान्याधीनत्वेन भगवदधीनत्वेन च न वेदेत्यपि गृह्यते । तमेवं वेदितारं । ब्रह्म प्रागुक्तं ब्रह्म कर्तृ । परादात् परतो लोका लोकस्यांधे तमसि स्थापयेदित्यर्थः । एवमग्रेपि ध्येयं । क्षत्रादि पदार्थः प्रागुक्त एव । ब्रह्मादेर्भगवदनाश्रितत्वान्याश्रितत्व

वेदिनोनर्थोक्तिर्यदाश्रितत्वोक्त्यर्था तदिदानीं भगवदाश्रितत्वमाह ॥ इदं ब्रह्मेति । इदं प्रकृतं ब्रह्मादिसर्वांतं यत् यत्र यदाश्रितत्वेन वर्तते अयमात्मा आत्माश्रितत्वेनास्त इत्यर्थः ॥ ४ ॥ ४ ॥ ६ ॥ जगत्स्रष्टृत्वाज्जगतस्तदधीनत्वाच्च हरेः प्राधान्यमिति भावेन स्रष्टृत्वं स यथार्द्रैधाग्नेरित्यादिना तदधीनत्वं च सर्वासामित्यादिना विवक्षुस्ततो निर्गतत्वमात्रेण जगतस्तत्कारणकत्वं तदधीनत्वं च कुत इत्यतो दृष्टांतत्रयेण तद्द्वयमुपपादयति पर्वत्रयेण ॥ स यथेति । वक्ष्यमाणदृष्टांतो यथेत्यर्थः । दुन्दुभेर्हन्यमानस्य सत उत्पन्नान् शब्दान् बाह्यान् तदन्यमुरजकारणजन्यानन्याधीनान्वा ग्रहणाय ग्रहीतुं न शक्नुयात् । किंतु दुंदुभेस्तदाघातस्य वा

सयथादुंदुभेर्हन्यमानस्यनबाह्याञ्छब्दाञ्छक्नुयात्ग्रहणायदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः ॥ ७ ॥ सयथाशंखस्यध्मायमानस्यनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दोगृहीतः ॥ ८ ॥ सयथावीणायैवाद्यमानायैनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दोगृहीतः ॥ ९ ॥

पूर्वभावितया ग्रहणेन स शब्दो गृहीतः तज्जन्यत्वेन तदधीनत्वेन वा गृहीतो गृह्यते । एवं भगवन्तं तदिच्छां वा पूर्वभावितया जानंस्ततो निर्गतं जगत् तदन्यजन्यत्वेन तदन्याधीनत्वेन वा न गृह्णातीति योज्यं । अत्र दुंदुभ्यादिशब्दास्तदभिमानिपराश्च ज्ञेयाः। यथा हन्यमानदुंदुभिशब्दस्तदभिमानिदेवतावशगस्तथेति ॥ योजना तु प्राग्वदेव । दुंदुभिस्थानीयो भगवांस्तदाघातस्थानीयेच्छेति ज्ञेयं । एवमग्रे दृष्टांतद्वययोजना ध्येया ॥ ४ ॥ ४ ॥ ७ ॥ ध्मस्य वादनस्य ॥ ४ ॥ ४ ॥ ८ ॥ वीणायै वीणायाः। वाद्यमानायै

वाद्यमानाया इत्यर्थः । व्यत्ययात् ॥४॥४॥९॥ दृष्टांतपूर्वं संक्षेपेण सृष्टत्वमाह ॥ स यथार्द्रेति । आर्द्रैधोभिः आर्द्रकाष्ठैः युक्तो अग्निः आर्द्रैधोग्निः स एवार्द्रैधाग्निः सलोपश्छांदसः तस्मादभ्याहितात् पुंजीकृतात् पृथक् नानाप्रकाराः धूमाः विष्फुलिंगा श्चेत्यपि ग्राह्यं । विनिश्चरंति एवं वै एवमेव एतद्वक्ष्यमाणं अस्य महतो भूतस्य सदा विद्यमानस्य हयास्यरूपस्य ब्रह्मणस्सकाशान्नि श्वसितं निर्गतं किं तदित्यत आह ॥ यदिति । ऋगाद्या अवांतरवेदाः इतिहासो नाम पंचरात्रं भारतं च मूलरामायणं तथा ।

सयथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमाविनिश्चरंत्येवंवाअरेऽस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदो
यजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्यानानि
व्याख्यानान्यस्यैवैतानिनिःश्वसितानि ॥ १० ॥

इतिहास इति प्रोक्त इत्युक्त्या वक्ष्यमाणश्लोकान्यपंचरात्रादित्रयं । विद्या मूलश्रुतिः । उपनिषदः काण्वाद्याः । श्लोकाः पंचरात्र संहिताः । सूत्राणि ब्रह्मसूत्राणि । व्याख्यानानि वेदव्याख्याः । तासां विस्तरोनुव्याख्यानानीति यत् । एतत् निःश्वसितमिति पूर्वेणान्वयः । एवं शब्दप्रपंचसृष्टिमुक्त्वाऽर्थसृष्टिमाह ॥ अस्यैवैतानीति । एतानि प्रमाणसिद्धानि महदादीन्यस्यैव हरेस्सकाशा न्निःश्वसितानि । अनायासेन सृष्टानीत्यर्थः । यद्वा इति यत् एतानि ऋगादीन्यस्यैव निःश्वसितानीत्युपसंहारः । अर्थात्मकं

जगच्च अस्यैव निस्सृतमित्युपलक्ष्यते ॥ ४ ॥ ४ ॥ १० ॥ मुख्यतस्सर्वाश्रयो भगवानित्येतद्दृष्टांतेनाह ॥ **स यथेति** । स वक्ष्य माणो दृष्टांतो यथेत्यर्थः । सर्वासामपां समुद्रः वरुणः खातो वा एकायनं मुख्याश्रयः । एवमिति दार्ष्टांतिकोक्तिः । एवं सर्वजगतो

सयथासर्वासामपाःसमुद्रएकायनमेवःसर्वेषांस्पर्शानांत्वगेकायनमेवःसर्वेषाःरसानांजिह्वै
कायनमेवःसर्वेषांगंधानांनासिकेकायनमेवःसर्वेषांरूपाणांचक्षुरेकायनमेवःसर्वेषांशब्दानाः
श्रोत्रमेकायनमेवःसर्वेषाःसंकल्पानांमनएकायनमेवःसर्वासांविद्यानाःहृदयमेकायनमेवः
सर्वेषांकर्मणाःहस्तावेकायनमेवःसर्वेषामानंदानामुपस्थएकायनमेवःसर्वेषांविसर्गाणांपा
युरेकायनमेवःसर्वेषामध्वनांपादावेकायनमेवःसर्वेषांवेदानांवागेकायनमेवं ॥ ११ ॥
सयथासैंधवखिल्यउदकेप्रास्तउदकमेवानुविलीयेतनहास्योद्ग्रहणायैवस्याद्यतोयतस्त्वाददीतल
वणमेवंवाअरेइदंमहद्भूतमनंतमपारंविज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यति
नप्रेत्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः ॥ १२ ॥

भगवान् मुख्याश्रय इत्यर्थः । एवमग्रेपि । सर्वेषां संकल्पानामित्यादि सप्त दृष्टांता अपि मुख्यतो हरेस्सर्वाश्रयत्वे योज्याः । जगत्प्रतीतिरपीशाधीनेति मध्ये पंचभिर्दृष्टांतैराह ॥ **सर्वेषां स्पर्शानामित्यादिना** । त्वगेकायनं । मुख्यप्रतीतिसाधनं । एवं भगवान्मुख्यस्पर्शप्रतीतिहेतुरिति दार्ष्टांतिको योज्यः । एवमग्रेपि । अध्वनां गतिक्रियाणामित्यर्थः ॥ ४ ॥ ४ ॥ ११ ॥ न केवलं

संसारे जीवा भगवदाश्रिताः । मुक्तावपीत्येदृष्टांतेनाह ॥ स यथा सैंधवेति । स यथेत्युक्तार्थः । सैंधवखिल्यो घनीभूतलवण खंडः । उदके समुद्रोदके प्रास्तः प्रक्षिप्तः उदकमनुसृत्य विलीयेत । उदकानुगुणतया द्रवीभावं प्राप्य नोपलभ्यते । अस्य विलीनस्य सैंधवखिल्यस्य उद्ग्रहणाय उद्धरणाय उद्धृत्य ग्रहीतुं शक्तः कश्चिदपि नैव स्यात् । हेति प्रसिद्ध्यर्थः कुतस्तत्र विलीनमिति ज्ञायत इत्यत उक्तं ॥ यतो यत इति । यस्माद्यस्माद्देशादुदकमाददीत गृहीत्वा प्राशयेत् तत्र तत्र लवणमेव लवणरसोपेतमेवोदकं गृह्यते तेन ज्ञायत इत्यर्थः । उक्तानां समुद्रसैंधवखिल्योदकानां मध्ये कस्य स्थाने कः प्रकृत इत्यतो हरिस्समुद्रस्थानीयः समुद्र

साहोवाचमैत्रेय्यत्रैवमाभगवानमूमुहन्नप्रेत्यसंज्ञास्तीति सहोवाचनवाअरेअहंमोहंब्रवीमील्यं लंवाअरइदंविज्ञानाय ॥ १३ ॥

जलवत्पूर्वमुक्तः सैंधवखिल्यवन्नूतनमुक्त इत्याह ॥ एवमिति । अरे मैत्रेयि विज्ञानघनो जीवः एतेभ्यो भूतेभ्यो बादिभ्यस्समुत्थाय उत्पद्य । भूतपरिणामदेहसंबंधं प्राप्य निलीयमानानि देहोपादानभूतान्यन्वेव विनश्यति । देहवियोगलक्षणमुक्तत्वं प्रतिपद्यते ततश्चेदं महद्भूतमनंतमपारं पूर्वमुक्ताश्रयं हरिं प्राप्नोति । अत्र समुद्रजलस्थानीयाः पूर्वमुक्ता इत्यपि ग्राह्यं । सैंधवखिल्यसाम्यं नूतनमुक्तस्याह ॥ न प्रेत्येति । प्रेत्य मुक्त्यनंतरं स्थितस्य मुक्तस्य संज्ञा मुक्तविषयकसम्यग्ज्ञानमपरोक्षरूपममुक्तानामस्मदादीनां नास्तीत्यरे मैत्रेयि अहं ब्रवीमीति याज्ञवल्क्य उवाच ॥ ४ ॥ ४ ॥ १२ ॥ एवमुक्ता सा मैत्रेयी मुक्तस्य ज्ञानमेव नास्तीत्युक्त

वानिति मत्वाऽऽक्षिपतीत्याह ॥ सा होवाच मैत्रेयीति । भगवान् अत्रैव अवश्यज्ञातव्येऽर्थे मा मां अमूमुहत् मोहं प्रापितवानभूत् । कथं । प्रेत्य मुक्तस्य संज्ञा ज्ञानं नास्तीति परमपुमर्थे मोक्षे ज्ञानाभाववचनं कथं न मोहकं अतो यथावत्तत्स्वरूपं वाच्यमित्युवाचेत्यर्थः । एवमुक्तस्स याज्ञवल्क्यो अहं मोहं मोहकवाक्यं न ब्रवीमि किं तर्हीत्यत इदं मुक्तजातं विज्ञानाय यथायोग्यं परापरवस्तुविशेषेण ज्ञातुमलं शक्तमेवातो मद्वाक्यस्यामुक्ताज्ञेयत्वमेवार्थ इति भावः । व्याख्यातैषा श्रुतिरुत्क्रांतिपादीयानुव्या

यत्रहिद्वैतमिवभवतितदितरइतरंजिघ्रतितादितरइतरंपश्यतितादितरइतरꣳशृणोतितादितर
इतरमभिवदतितदितरइतरंमनुतेतादितरइतरंविजानाति यत्रवाअस्यसर्वमात्मैवाभूत्तत्केनकं
जिघ्रेत्तत्केनकंपश्येत्तत्केनकꣳशृणुयात्तत्केनकमभिवदेत्तत्केनकंमन्वीततत्केनकंविजानीयाद्येनेदꣳ
सर्वंविजानातितंकेनविजानीयाद्विज्ञातारमरेकेनविजानीयादिति ॥१४॥ चतुर्थमैत्रेयीब्राह्मणं॥४॥४॥

ख्यानसुधयोः ॥ ४ ॥ ४ ॥ १३ ॥ मुक्तावात्ममात्रावशेषेण द्वितीयस्याभावाज्ज्ञानाभाव एव मुक्तस्येति वदतां मतेऽतिप्रसंगं वक्तुं व्यतिरेकव्याप्तिं तावदाह ॥ यत्रेति । यत्र यदा द्वैतं द्वयोर्भावः द्विता भेदः तस्या इदं द्वैतं भिन्नं वस्तु द्वैतमिव भिन्नमिव परतंत्रं भिन्नं वस्तु भवतीतीव शब्दः पारतंत्र्यार्थः स्वरूपकथनायोक्तो न तु व्याप्तिशरीरप्रवेशितया । तत् तदा इतरः पुमान् इतरं गंधादिकं जिघ्रतीत्यादि ज्ञेयं । यत्र हीति हि शब्दो व्याप्तेरदुष्टतां द्योतयति । यदर्थं व्याप्तिरुक्ता तं प्रसंगमाह ॥ यत्र वा इति । यत्र यदि

मुक्तौ अस्य ज्ञानिनः सर्वं करणादिकमात्मैवाभूत् । स्वव्यतिरेकेण किमपि नासीत् तत्तर्हि केन करणेन किं जिघ्रेदित्यादि ध्येयं । गंधादिविषयभोगो न स्यादित्यर्थः । येनेश्वरेण इदं सर्वं जीवो विजानाति तं हरिं केन विजानीयात् तज्ज्ञानं च न स्यादित्यर्थः । विज्ञातारं स्वात्मानं केन विजानीयात् । मुक्तांतरं च केन विजानीयात् । अतो निर्विशेषज्ञानशून्यात्ममात्रावशेषो न मोक्षो पुमर्थत्वा पत्तेरिति भावः । व्याख्यातेपापि श्रुतिस्तत्त्वनिर्णयानुव्याख्यानादौ ॥४॥४॥१४॥छ॥ **चतुर्थं मैत्रेयीब्राह्मणं** ॥ छ ॥ स्वहृदिस्थ विष्णूपासनमेव मुक्तिहेतुर्न बहिष्ठोपासनमित्याद्येन ब्राह्मणेनोक्तं । तच्च जितेंद्रियस्यैव भवतीतींद्रियजयहेतूपास्त्यर्थविद्या द्वितीयेनोक्ता

इयंपृथिवीसर्वेषांभूतानांमध्वस्यैपृथिव्यैसर्वाणिभूतानिमधुयश्चायमस्यांपृथिव्यांतेजोमयोऽमृत
मयःपुरुषोयश्चायमध्यात्मꣳशारीरस्तेजोमयोऽमृतमयःपुरुषोऽयमेवसयोयमात्मेदममृतमिदं
ब्रह्मेदꣳसर्वं ॥ १ ॥

मूर्तामूर्तमूर्तसारविलक्षणतया भगवज्ज्ञानिनो विद्याः फलदा इति भावेन तृतीयब्राह्मणेन तच्चतुष्टयोक्तिपूर्वं तत्त्रियवैलक्षण्यं हरेरुक्त्वा चतुर्थे मूर्तसारत्वमुपपादयंस्तत्र हरावति स्नेहः कार्य इत्याद्युक्तं । अत्र तु आद्यब्राह्मणे अंतःस्थोपास्तेर्बहिष्ठभगवदुपास्तितो मुक्ति हेतुत्वोक्त्यांतःस्थबहिष्ठयो रूपयोः प्रतीतभेदं निवारयन् तयोरैक्यविषयां विद्यामाह ॥ **इयमित्यादिना**। इयं पृथिवी तदभि मानिनी सर्वेषां भूतानां मधु । मधुवत्सुखदा अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि मधु । शुश्रूषया सुखदानि यश्चा

यमस्यां पृथिव्यां पृथिव्यभिमानिन्यां तेजोमयोऽनंततेजाः । अमृतमयो नित्यः पुरुषोस्ति यश्चाध्यात्मं शारीरः शरीरमानिस्थः अयमेव सः पृथिव्यभिमानिस्थः एवकारेण न मात्रयापि विशेषोस्तीत्युच्यते तयोर्मूलरूपेण चाभेदमाह ॥ योयमात्मेति । य आत्मा सर्वगतो हरिः मूलरूपी सोप्ययमेव पृथिवीशारीरस्थहयशीर्षाख्य एक एवेत्यर्थः । केचित्तु अयमेव पृथिवीशारीरस्यां

इमाआपःसर्वेषांभूतानांमध्वासामपाᳪसर्वाणिभूतानिमधुयश्चायमास्वप्सुतेजोमयोमृतमयःपु
रुषोयश्चायमध्यात्मᳪरैतसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदᳪसर्वं ॥२॥
अयमग्निःसर्वेषांभूतानांमध्वस्याग्नेःसर्वाणिभूतानिमधुयश्चायमस्मिन्नग्नौतेजोमयोऽमृतमयःपुरु
षोयश्चायमध्यात्मंवाङ्मयस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदᳪसर्वं ॥३॥
अयंवायुःसर्वेषांभूतानांमध्वस्यवायोःसर्वाणिभूतानिमधुयश्चायमस्मिन्वायौतेजोमयोमृतमयः
पुरुषोयश्चायमध्यात्मंप्राणस्तेजोमयोऽमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदᳪसर्वं ॥४॥

स्स्थितः सः स कः योयमात्मा हयशीर्षाख्यः स एवेति योजयंति । आत्मस्वरूपमाह ॥ इदममृतमिति । अमृतं नित्यं ब्रह्म गुण पूर्णं सर्वमनूनं सर्वगमित्यर्थः । एवमग्रेपि योजना ध्येया ॥४॥५॥१॥ आपः अवभिमानिनी रैतसो रेतोमानिस्थो रैतसनामा हयास्यः ॥४॥५॥२॥ अयमग्निः अग्न्यभिमानी वाङ्मयो वागभिमानिस्थः ॥४॥५॥३॥ वायुः प्रवहः । प्राणः त्वगिंद्रियमानिप्राणवायुस्थः

॥४॥५॥४॥ आदित्यश्चेतनश्चाक्षुपश्चक्षुर्मानिगतः ॥४॥५॥५॥ दिशः दिङ्मानिन्यः श्रोत्रः श्रोत्रमानिगतः प्रातिश्रुत्कः प्रतिशृणोतीति

अयमादित्यःसर्वेषांभूतानांमध्वस्यादित्यस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्नादित्येतेजोमयोमृत
मयःपुरुषोयश्चायमध्यात्मंचाक्षुषस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं ॥५॥
इमादिशःसर्वेषांभूतानांमध्वासांदिशांसर्वाणिभूतानिमधुयश्चायमासुदिक्षुतेजोमयोऽमृत
मयःपुरुषोयश्चायमध्यात्मंश्रोत्रःप्रातिश्रुत्कस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृत
मिदंब्रह्मेदंसर्वं ॥६॥ अयंचंद्रःसर्वेषांभूतानांमध्वस्यचंद्रस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्
चंद्रेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंमानसस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेद
ममृतमिदंब्रह्मेदंसर्वं ॥७॥ इयंविद्युत्सर्वेषांभूतानांमध्वस्यैविद्युतःसर्वाणिभूतानिमधुयश्चा
यमस्यांविद्युतितेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंतैजसस्तेजोमयोमृतमयःपुरुषोयमेवसयो
यमात्मेदममृतमिदंब्रह्मेदंसर्वं ॥ ८ ॥

प्रातिश्रुत्कनामा ॥४॥५॥६॥ चंद्रश्चेतनः मानसो मनोभिमानिस्थः ॥४॥५॥७॥ विद्युत् विद्युन्मानी तैजसः देहगततेजोभिमानिस्थः

॥४॥५॥८॥ स्तनयित्नुः स्तनयित्नुमानी मुख्यवायुः शाब्दः देहस्थशब्दमानिमुख्यवायुरूपे स्थितः सौवरः स्वरस्थवायुरूपविशेषगतः

अयंस्तनयित्नुःसर्वेषांभूतानांमध्वस्यस्तनयित्नोःसर्वाणिभूतानिमधुयश्चायमस्मिंस्तनयित्नौतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंशाब्दः सौवरस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं ॥९॥ अयमाकाशःसर्वेषांभूतानांमध्वस्याकाशस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्नाकाशेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंहृद्याकाशस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं ॥१०॥ अयंधर्मःसर्वेषांभूतानांमध्वस्यधर्मस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्धर्मेतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंधार्मस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं ॥११॥ इदंसत्यंसर्वेषांभूतानांमध्वस्यसत्यस्यसर्वाणिभूतानिमधुयश्चायमस्मिन्सत्येतेजोमयोमृतमयःपुरुषोयश्चायमध्यात्मंसात्यस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदंसर्वं ॥ १२ ॥

॥४॥५॥९॥ आकाश आकाशमानी हृद्याकाशः हृदयाकाशमानिस्थः ॥४॥५॥१०॥ धर्मः धर्ममानी यमः । धार्मः धर्माभिमानियमगतः ॥४॥५॥११॥ सत्यं । सत्यमिति सत्याभिमानिवायोरूपांतरं । सात्यः सत्यमानिवायुरूपस्थः ॥४॥५॥१२॥ मानुषं मनुष्या

भिमानी स्वायंभुवमनुः मानुषः स्वायंभुवमनुस्थः॥४॥५॥१३॥ आत्मा विरिंचः अध्यात्ममात्मा जीवगतः ॥४॥५॥१४॥ जीव गतात्मनां हरेर्महिमानमाह॥ स वा इति। सर्वेषां भूतानां जीवानां। सर्वेषामात्मशब्दितविरिंचानां चेत्यपि ग्राह्यं। आधिपातिः।

इदंमानुषंसर्वेषांभूतानांमध्वस्यमानुषस्यसर्वाणिभूतानिमधुयश्चायमास्मिन्मानुषेतेजोमयोमृत मयःपुरुषोयश्चायमध्यात्मंमानुषस्तेजोमयोमृतमयःपुरुषोयमेवसयोयमात्मेदममृतमिदंब्रह्मेदꣳ सर्वं॥१३ अयमात्मासर्वेषांभूतानांमध्वस्यात्मनःसर्वाणिभूतानिमधुयश्चायमस्मिन्नात्मनि तेजोमयोमृतमयःपुरुषोयश्चायमध्यात्ममात्मातेजोमयोमृतमयःपुरुषोयमेवसयोयत्मात्मेदममृ तमिदंब्रह्मेदꣳसर्वं ॥१४॥ सवाअयमात्मासर्वेषांभूतानामधिपतिस्सर्वेषांभूतानाꣳराजातद्य थारथनाभौचरथनेमौचाराः सर्वेसमर्पिताएवमेवास्मिन्नात्मनिसर्वाणिभूतानिसर्वएतआत्मा नःसमर्पिताः ॥ १५ ॥

आधिक्येन पालनात् अधिपतिः राजा स्वामी कथमित्यतो दृष्टांतेनैतद्व्यनक्ति॥ तद्यथेति। तद्वक्ष्यमाणं निदर्शनं यथा। च शब्दा वन्योन्यसमुच्चये। हरिरधिदैवमध्यात्मं रूपद्वयेन जगद्धत्त इत्युक्तार्थोपपादनाय रथनाभौ च रथनेमौ चेति दृष्टांतद्वयोक्तिः। नाभिरं

तर्वस्तु । नेमिर्बाह्यवस्त्विति ज्ञेयं । आत्मानो विरिंचाः ॥४॥५॥१५॥ इयं मधुविद्याऽतिभद्रा पूर्वैरनुष्ठितत्वादुपदिष्टत्वाच्चेत्याह ॥ इदामिति । तदिदं मधु । मधुविद्यां दध्यङ्नामा मुनिराथर्वणोथर्वगोत्रजोश्विभ्यामुवाच वै प्रसिद्धमेतत् । प्रसिद्धत्वमेवाह ॥ तदित्यादिना । पश्यन्ज्ञानी ऋषिः मंत्रद्रष्टा तदेतत् दध्यङ्ङश्विभ्यामुवाचेत्येतत् । उवाचेत्यर्थः । कथमित्यतस्तद्वाक्यं पठति ॥ तद्वामिति । हे नरानरौ । अश्विनौ वां युवयोः यदुग्रं दंसः दधिचेः पूर्वशिरच्छेदनाश्वशिरःसंधानादिरूपमुग्रं कर्म

इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत् तद्वांनरासनयेदꣳसउग्रमाविष्कृणोमितन्यतुर्नवृष्टिं दध्यङ्हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाचेति ॥ १६ ॥
इदंवैतन्मधुदध्यङ्ङाथर्वणोश्विभ्यामुवाच तदेतदृषिःपश्यन्नवोचत् आथर्वणायाश्विनादधीचेऽश्व्यꣳशिरःप्रत्यैरयतꣳसवांमधुप्रवोचदृतायनत्वाष्ट्रंयद्दस्रावपिकक्ष्यंवामिति ॥ १७ ॥

यच्च दध्यङ्ङाथर्वणोश्वस्य शीर्ष्णा ईं शीर्ष्णैव वां युवाभ्यां मधु मधुविद्यां प्रोवाचेति तदुभयं सनये मोक्षादिपुमर्थलाभाय आविष्कृणोमि । कथं तन्यतुः स्तनयित्नुः वृष्टिं न वृष्टिमिव ॥४॥५॥१६॥ अत्रैवार्थे मंत्रांतरं वक्तुमाह ॥ इदामिति । किमवोचदित्यतो मंत्रं पठति ॥ आथर्वणायेति । हे दस्रौ शत्रुभेदकौ अश्विनौ युवां आथर्वणाय दधीचे अश्व्यं अश्वसंबंधिशिरः प्रत्यैरयतं संधितवंतौ स्थः । सः संधिताश्वशिराः दध्यङ् ऋतायन् युवयोर्मधुविद्यां वक्ष्यामीति प्राक् प्रतिज्ञातं सत्यं कुर्वन्वां युवाभ्यां

मधु मधुविद्यां यत्त्वाष्ट्रं । त्वष्टुः पुत्रेण विश्वरूपेण इंद्रायोक्तं कक्ष्यं नारायणकवचं तदपि प्रवोचत् प्रावोचत् । अडभावश्छांदसः । इंद्रो हि दधीचिं प्रतीमां विद्यां परस्मै ब्रूयाश्चेत्तवशिरः छेत्स्यामीत्युक्तवान् । अश्विभ्यां च दधीचिं प्रतीमां विद्याभावाभ्यां ब्रूहीत्युक्ते दधीचिरिंद्रोक्तमुक्त्वा तूष्णीमासीत् तदाश्विनौ तर्हि त्वां रक्षिष्याव इत्युक्त्वा तस्य शिरः छित्वाऽन्यत्र प्रस्थाप्याश्वशिरः समादाय दधीचेः संधित्वाऽश्वशिरसैव तेन विद्यायां प्रोक्तायामिंद्रेण च तदश्वशिरसि छिन्ने पुनर्यथापूर्वं तदीयमेव शिरः संधित वंताविति कथा ज्ञेया ॥ ४ ॥ ५ ॥ १७ ॥ यश्चायमध्यात्मं शारीर इति सर्वशरीरेषु हरिस्तिष्ठतीत्युक्तेऽर्थे मंत्रं वक्तुमाह ॥ इदमिति ।

इदंवैतन्मधुदध्यङ्ङाथर्वणोऽश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत्पुरश्चक्रेद्विपदःपुरश्चक्रेचतुष्प
दःपुरस्सपक्षीभूत्वापुरःपुरुषआविशदितिसवाअयंपुरुषःसर्वासुपूर्षुपुरिशयोनैनेनकिंचनानावृ
तंनैनेनकिंचनासंवृतं ॥ १८ ॥

पश्यन्नृषिः तदेतद्भगवतस्सर्वशरीरस्थत्वमुवाच । तं मंत्रमाह ॥ पुर इति । स पुरुषः द्विपदः पुरः शरीराणि । चक्रे । चतुष्पदः पुरः । शरीराणि चक्रे । ततः पक्षीभूत्वा द्विपदः पुरः चतुष्पदश्च पुरः आविशत् । पुरुषो जीव इति भ्रमनिरासाय पुरुषपदं निर्वक्ति । स वा अयमिति । स वा अयं हरिः पुरुष इत्युच्यते । कुतः । यतस्सर्वासु पूर्षु देहेषु । पुरि हृदि शयः । न केवलं पुरि स्थितिमात्रं किंतु अंतर्बहिश्चास्तीत्युच्यते ॥ नैनेनेति । एनेन अनेनात्मना किंचन वस्तु । अनावृतमंतरव्याप्तं न । किंतु व्याप्तमेव ।

असंवृतं अनाच्छादितं न । आच्छादितमेव । बहिर्व्याप्तमेवेत्यर्थः ॥ ४ ॥ ५ ॥ १८ ॥ अध्यात्ममात्मेति हरेस्सर्वजीवस्थत्वमुक्तं तत् दधीचाऽश्विभ्यामुक्तं चेत्याह ॥ इदमिति । तदिदं सर्वजीवस्थत्वं । तत्र मंत्रमाह ॥ रूपमिति । जीवो हरे रूपं रूपं प्रति प्रतिरूपः प्रतिबिंबो बभूव । तत् बिंबरूपं अस्य जीवस्य । प्रतिचक्षणाय । साक्षात्काराय भवति । नन्वेकस्य कथं बहुजीवेषु बिंबतया स्थिति रित्यत आह ॥ इंद्र इति । इंद्रः परमेश्वरः । मायाभिः स्वसामर्थ्यैः । पुरुरूपः अनंतजीवबिंबरूपः । ईयते ज्ञायते । अस्येंद्रस्य

इदंवैतन्मधुदध्यङ्ङाथर्वणोऽश्विभ्यामुवाचतदेतदृषिःपश्यन्नवोचत् । रूपंरूपंप्रतिरूपोबभूवतद स्यरूपंप्रतिचक्षणाय इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेत्य यंवैहरयोयंवैदशाच सहस्राणिबहूनिचानंतानिच तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूरित्यनु शासनं ॥ १९ ॥ मधुब्राह्मणं ॥ ४ ॥ ५ ॥

हरयो हरिनामकानि रूपाणि दशशतानि । युक्ताः संयुक्ताः । व्यूहशः संतीति । हि प्रसिद्धं । इंद्ररथस्थाश्वप्रतीतिं निवारयितुमाह॥ अयं वा इति । हरयो हरिनामकानि । दश मत्स्यादीनि । च शब्दान्नारायणादीनि शतानि अयमिंद्रः सहस्राणि विश्वादीनि । अयं बहूनि परादीनि । अयमनंतानि अजितादीनि । तस्य हरेर्महिमांतरमाह ॥ तदेतदिति । य आत्मा । यदात्मा । सर्वगतं ब्रह्म तदेतद्ब्रह्म गुणपूर्णं । अपूर्वं स्वस्मादन्यत् पूर्वं नेत्यपूर्वमनादीत्यर्थः । अनपरमनंतं । अनंतरं सर्वस्यापि स्वयमेवांतरं ।

अबाह्यं स्वस्मादन्यद्बाह्यं नेत्यबाह्यं । सर्वस्मादपि स्वयमेव बाह्य इत्यर्थः । अयमात्मा सर्वमनुभवतीति सर्वानुभूः । इत्यनुशासन मिति ॥ ४ ॥ ५ ॥ १९ ॥ पंचमं मधुब्राह्मणं ॥ छ ॥ अध्यायद्वयोक्ता विद्याः प्रवर्तकऋषिज्ञानपूर्वमनुष्ठिताः फलदा

अथ वंशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिका
त्कौशिकः कौंडिन्यात्कौंडिन्यः शांडिल्याच्छांडिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥
आग्निवेश्यादाग्निवेश्यः शांडिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लातो
गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳ सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजा
द्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापाय
नाद्बैजवापायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥

भवंतीत्यतः प्रवर्तकऋषीनाह ॥ अथ वंश इत्यादिना । गुरुशिष्यपरंपरारूपो वंशो निरूप्यत इत्यर्थः । अत्र प्रथमांतैरुप देश्यानां पंचम्यंतैरुपदेष्टॄणां निर्देशो ज्ञेयः । पाराशर्यात् विप्रभार्यायां पराशराज्जातात् वेदव्यासभिन्नात्कस्माच्चिदित्यर्थः । पाराशर्यो जातूकर्ण्यादित्यत्राप्येवं ध्येयं । परमेष्ठी ब्रह्मा । ब्रह्मणो हयग्रीवात् ब्रह्म स्वयंभु स्वतंत्रं । ब्रह्मणे नम इति वेदपुरुषवाक्यं ॥

घृतकौशिकाद्घृतकौशिकःपाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्योजातूकर्ण्याज्
जातूकर्ण्यःआसुरायणाच्चयास्काच्चासुरायणस्त्रैवर्णेस्त्रैवर्णिरौपंचधनेरौपंचधनिरासुरेरासुरिर्भा
रद्वाजाद्भारद्वाजआत्रेयादात्रेयोमांटेर्मांटिर्गौतमाद्गौतमोवात्स्याद्वात्स्यःशांडिल्याच्छांडि
ल्यःकैशोर्यात्काप्यात्कैशोर्यःकाप्यःकुमारहारितात्कुमारहारितोगालवाद्गालवोविदर्भीकौं
डिन्याद्विदर्भीकौंडिन्योवत्सनपादोबाभ्रवाद्वत्सनपाद्बाभ्रवःपथःसौभरात्पंथाःसौभरोऽयास्या
दांगिरसादयास्यआंगिरसआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रोविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽ
श्विभ्यामश्विनौदधीचआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणोदैवादथर्वादैवोमृत्योःप्राध्वंसनान्मृ
त्युःप्राध्वंसनःप्रध्वंसनात्प्रध्वंसनएकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिःसनारोस्स
नारुःसनातनात्सनातनःसनकात्सनकःपरमेष्ठिनःपरमेष्ठीब्रह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥ ३ ॥
वंशब्राह्मणं ॥ ४ ॥ ६ ॥ चतुर्थोध्यायः ॥ ४ ॥

॥ छ ॥ इतिषष्ठंवंशब्राह्मणं ॥ इतिश्रीकाण्वोपनिषदर्थसंग्रहे राघवेंद्रयतिकृते चतुर्थोध्यायः ॥ ४ ॥ ६ ॥

भगवानेव सर्वोत्तमः सर्वगुणपूर्णः सर्वमुमुक्षूपास्यो मोक्षदश्चेत्यध्यायद्वयोक्तमृपिभिर्मीमांसया समर्थितमित्याहानेनाध्यायेन । तत्रादौ मीमांसाप्रकारमेवाख्यायिकयाह ॥ जनको ह वैदेह इति । विदेहगोत्रजो वैदेहः । जनको नामतः बहुदक्षिणेनेति बहुव्रीहिः । ईजे अयजत् । ह प्रसिद्धं तत्र तस्मिन्यज्ञे कुरुपांचालानां । कुरूणां पांचालानां देशानां सकाशात् । ब्राह्मणा

जनकोहवैदेहोबहुदक्षिणेनयज्ञेनेजे तत्रहकुरुपांचालानांब्राह्मणाअभिसमेताबभूवुस्तस्यहजन
कस्यवैदेहस्यविजिज्ञासाबभूव कःस्विदेषांब्राह्मणानांअनूचानतमइति सहगवांसहस्रमवरुरोध
दशदशपादाःएकैकस्याःशृंगयोराबद्धाबभूवुः ॥ १ ॥ तान्होवाचब्राह्मणाभगवंतोयोवोब्रह्मिष्ठः
सएतागाउदजतामितितेहब्राह्मणानदधृषुरथहयाज्ञवल्क्यःस्वमेवब्रह्मचारिणमुवाचैताःसो
म्योदज(सो)सामश्रवा३इतिताहोदाचकारतेहब्राह्मणाश्चुक्रुधुःकथंनोब्रह्मिष्ठोब्रवीतीत्यथहज
नकस्यवैदेहस्यहोताआश्वलोबभूवसहैनंपप्रच्छत्वंनुखलुनोयाज्ञवल्क्यब्रह्मिष्ठोसी३इतिसहोवा
चनमोवयंब्रह्मिष्ठायकुर्मोगोकामाएववयंस्मइतितंहततएवप्रष्टुंदध्रेहोताश्वलः ॥ २ ॥

अभिसमेताः । मिलिता बभूवुः । विजिज्ञासा । विशेषेण ज्ञातुमिच्छा । किमिति येषां ब्राह्मणानां मध्ये । अनूचानतमोऽतिशयेन ब्रह्मज्ञानी कस्स्वित् को वा इति विजिज्ञासा बभूवेत्यर्थः । स ह जनको गवां सहस्रमवरुरोध । यज्ञवाटसमीपे मिलितं चकार ।

तासामेकैकस्या गोर्व्यक्तेः शृंगयोः दशदशपादाः । पलस्य चतुर्थो भागः पाद इत्याहुः । सुवर्णस्य दशदशपादाः प्रतिशृंगं दशपादा आबद्धा बभूवुः ॥ ५ ॥ १ ॥ १ ॥ हे ब्राह्मणाः भगवन्तः पूज्या इति संबोध्य । वो युष्माकं मध्ये यो ब्रह्मिष्ठः स एता गाः उदजतां । गृह्णात्विति तानुवाच हेति योजना । न दधृषुः आत्मनो ब्रह्मिष्ठत्वबुद्ध्या गोग्रहणे धैर्यवंतो नाभूवन् । अथानंतरं याज्ञवल्क्यो ह किल स्वं स्वकीयमेव ब्रह्मचारिणमुवाच । हे सोम्य सोमपानार्ह । (सा)सोमश्रवनामन् एता गाः उदज । आहर । मद्गृहं प्रति नयेत्युवाचेत्यर्थः । सोमश्रवा इत्यामंत्रणे प्लुतिः । ता गाः उदाचकार । आचार्यगृहं प्रति नीतवान् । आह्वयामासेति

याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंमृत्युनाप्तꣳसर्वंमृत्युनाभिपन्नंकेनयजमानोमृत्योराप्तिमातिमु

च्यतइति होत्रर्त्विजाग्निनावाचावाग्वैयज्ञस्यहोता तद्येयंवाक्सोयमग्निःसहोतासमुक्तिः

सातिमुक्तिः ॥ ३ ॥

वा । नोऽस्माकं मध्ये अयं ब्रह्मिष्ठ इति कथं ब्रवीतीत्येव ते चुक्रुधुः । अथ तेषामेवं क्रोधानंतरं जनकस्याश्वलो नाम होता बभूव ह । स हैनं याज्ञवल्क्यं पप्रच्छ । नोऽस्माकं मध्ये त्वं नु खलु ब्रह्मिष्ठोसी ३ इति पप्रच्छेत्यन्वयः । असी इति प्लुतिः काकुस्वरेणाक्षेपार्थो । स याज्ञवल्क्य उवाच किमिति । तदाह ॥ नम इत्यादि । न वयं ब्रह्मिष्ठाः किंतु ब्रह्मिष्ठाय नमस्कुर्म इति । तर्हि कथं ब्रह्मिष्ठपणभूता गा उदजध्वमित्यतो गोकामा इति । गोकामा एव वयं स्मो अतो गोग्रहणं कृतवंत इत्यर्थः । एतेन ज्ञानिनो ब्रह्मिष्ठेषु प्रावण्येन भाव्यमिति सूचितं । तं याज्ञवल्क्यं तत एव धाष्टर्याभावादेव अहं ब्रह्मिष्ठो भवाम्येवेत्यवचनेन धाष्टर्याभावं ज्ञात्वा प्रश्नं कर्तु

मनो दध्र इत्यर्थः ॥५॥१॥२॥ याज्ञवल्क्येति संबोध्योवाच होताऽऽश्वल इत्यनुषंगः । यदिदं सर्वं प्राणिजातं मृत्युनाप्तं । मृत्युनाभिपन्नं ग्रस्तं च केन पुंसा यजमानो मृत्योराप्तिमतिमुच्यत इत्युवाचेत्यन्वयः । इति पृष्टो याज्ञवल्क्य आह ॥ होत्रेति । होत्रर्त्विजा । अग्निना वाचा होत्रर्त्विगादिनामकेन होत्रर्त्विगग्निवाक्स्थितेन वासुदेवरूपेण हरिणोपासितेन यजमानो मृत्योरतिमुच्यत इत्युवाच याज्ञवल्क्य इति योज्यं । होतरि वाचि च स्थितरूपयोरन्योन्यं भेदः किमित्यतो नेत्याह ॥ वाग्वा इति । वाङ्नामा वागंतस्स्थो वासुदेवरूपो हरिरेव यज्ञस्य होता होतृनामा होतृसंस्थो वै प्रसिद्धः । वागंतस्स्थस्याग्निस्थस्य च रूपस्याभेदमाह ॥ तदयमिति ।

याज्ञवल्क्येति होवाच यदिदꣳ सर्वमहोरात्राभ्यामाप्तꣳ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानो होरात्रयोराप्तिमतिमुच्यत इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोसावादित्यः सोध्वर्युः स मुक्तिः सातिमुक्तिः ॥ ४ ॥

सा प्रसिद्धा चासौ या च तदयं वाक् वाङ्नामा । वागंतस्स्थो हरिः सोयमग्निः अग्निनामाग्निस्थः । तस्य होतृस्थेनाभेदमाह ॥ स होतेति । सोऽग्निस्थोग्निनामको हरिः होता । होतृसंस्थो होतृनामकः वागादिस्थस्य कथं मोचकत्वमित्यत आह ॥ स इति । स वागादिस्थः मुक्तिः मुक्तिदः । न केवलं मुक्तिदत्वमात्रं सोऽतिमुक्तिः । अतिशयितमुक्तिदश्च विधेयापेक्षया स्त्रीति निर्देशः । मनुष्येभ्यो देवानामधिकसुखदोपीत्यर्थः । एवमग्रेतनखंडत्रययोजना ध्येया ॥५॥१॥३॥ अहोरात्राभ्यां । तत्कृतविकाराभ्यामित्यर्थः ।

अध्वर्युणा ऋत्विजा। चक्षुषादित्येनेत्यस्याध्वर्य्वादिगतेन तन्नामकेन संकर्षणाख्यरूपेणोपासितेनेत्यर्थः ॥५॥१॥४॥ पूर्वपक्षेति। पूर्वपक्षापरपक्षकृतविकाराभ्यामित्यर्थः। उद्गात्रा ऋत्विजा। वायुना प्राणेनेत्यस्योद्गात्रादिस्थेन प्रद्युम्नाख्यरूपेणोपासितेनेत्यर्थः ॥५॥१॥५॥ यदिति। यद्यस्मादिदमंतरिक्षं आकाशमनारंभणमनालंबनामिव भासते अथ तस्मात् केनाक्रमेण कर्मणा साधनेन

याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंपूर्वपक्षापरपक्षाभ्यामाप्तꣳसर्वंपूर्वपक्षापरपक्षाभ्यामभिपन्नं केनयजमानःपूर्वपक्षापरपक्षयोराप्तिमतिमुच्यतइत्युद्गात्रर्त्विजावायुनाप्राणेनप्राणोवैयज्ञस्यो द्गातातद्योयंप्राणःसवायुःसउद्गातासमुक्तिःसातिमुक्तिः ॥ ५ ॥ याज्ञवल्क्येतिहोवाचयदि दमंतरिक्षमनारंभणमिवकेनाक्रमेणयजमानःस्वर्गंलोकमाक्रमतइतिब्रह्मणर्त्विजामनसाचंद्रे णमनोवैयज्ञस्यब्रह्मातद्यदिदंमनःसोसौचंद्रःसब्रह्मासमुक्तिःसातिमुक्तिरित्यतिमोक्षाअथसं पदः ॥ ६ ॥

यजमानः स्वर्गं लोकं मोक्षमाक्रमते प्राप्नोति ब्रह्मणा ऋत्विजा मनसा चंद्रेणेत्यस्य ब्रह्मर्त्विगाद्यन्तर्गतेन अनिरुद्धाख्यरूपेणोपासितेनेत्यर्थः। निगमयति ॥ इत्यतिमोक्षा इति। अतिशयितमोक्षहेतूपास्तय इत्युक्त्वा इत्यर्थः। अथ मोक्षहेतूपास्त्युक्त्यनंतरं देवपदप्राप्त्यादिरूपसंपत्साधनभूतोपास्तयो निरूप्यन्त इत्यर्थः। संपद्धेतुत्वादुपास्तयः संपच्छब्देनोक्ताः ॥ ५ ॥ १ ॥ ६ ॥

याज्ञवल्क्येति संबोध्योवाच किल होताश्वलः । किमिति । कतिभिः कियतीभिः ऋग्भिः अयं होता अद्य अस्मिन्यज्ञे शंसनाख्यं कर्म करिष्यतीति । उत्तरमाह याज्ञवल्क्यः ॥ तिसृभिरिति । पुनः पृच्छत्याश्वलः ॥ कतमास्तास्तिस्र इति । उत्तरमाह ॥ पुरोनुवाक्येत्यादि । यजनात्पूर्वं जप्या पुरोनुवाक्या यजनावसाने जप्या याज्या । होमानंतरं जप्याशस्येति टीकोक्तिः ।

याज्ञवल्क्येतिहोवाचकतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञेकरिष्यतीतितिसृभिरितिकतमास्ता
स्तिस्रइतिपुरोनुवाक्याचयाज्याचशस्यैवतृतीयाकिंताभिर्जयतीतियत्किंचेदंप्राणभृदिति ॥७॥
याज्ञवल्क्येतिहोवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञआहुतीर्होष्यतीति तिस्रइति कतमास्तास्ति
स्रइति याहुताउज्ज्वलंतियाहुताअतिनेदंतेयाहुताअधिशेरतेकिंताभिर्जयतीति याहुताउज्ज्वलं
तिदेवलोकमेवताभिर्जयतिदीप्यतइवहिदेवलोको याहुताअतिनेदंतेपितृलोकमेवताभिर्जयत्य
तीवहिपितृलोको याहुताअधिशेरतेमनुष्यलोकमेवताभिर्जयत्यधइवहिमनुष्यलोकः ॥ ८ ॥

पुरस्ताल्लक्ष्या पुरोनुवाक्या । उपरिष्टाल्लक्ष्या याज्येति याज्ञिकाः । एतासां फलं पृच्छति ॥ किं ताभिरिति । जयति प्राप्नोतीति पप्रच्छेत्यर्थः । उत्तरमाह ॥ यत्किंचिदिति । ताभिरित्यनुपज्यते । वासुदेवाख्यविष्ण्वधिष्ठानभूताभिः तत्र स्थितवासुदेवाख्य रूपेण स्मृतेनेति यावत् । यत्किंचेदं प्राणभृत् प्राणिजातं तज्जयति । प्राणभृतामीशो भवतीत्यर्थः ॥ ५ ॥ १ ॥ ७ ॥

याज्ञवल्क्येत्यादि प्राग्वत् । या हुताः अग्नौ प्रक्षिप्ताः समिदादयः उज्ज्वलंति या हुता आहुतयश्चरुप्रभृतयो अतिनेदन्ते । अतीव शब्दं कुर्वन्ति । या आहुतयः पयस्सोमरसादयः । अधि अधोगत्वा शेरते भूमावासते । फलं पृच्छति ॥ किमिति । ताभिः संकर्षणाख्यरूपेण अधिष्ठिताभिः । तिसृभिराहुतिभिः । तद्गतसंकर्षणाख्यरूपेणेति यावत् किं । जयतीति पृष्ट उत्तरमाह ॥ या इति । या आहुतयो हूयमानहविः पदार्थाः उज्ज्वलन्ति । ताभिः तन्निष्ठसंकर्षणरूपेण स्मृतेन देवलोकमेव जयति । देवलोकाधिपत्यं लभते । कथमित्यत उज्ज्वलनत्वसाम्यादित्याह ॥ दीप्यत इव हीति । एवमग्रेपि ध्येयं । पितृलोकः अतीव अत्यंतं

याज्ञवल्क्येतिहोवाच कतिभिरयमद्यब्रह्मायज्ञंदक्षिणतोदेवताभिर्गोपायतीत्येकयेतिकतमासै केतिमनएवेत्यनंतंवैमनोनंताविश्वेदेवाअनंतमेवसतेनलोकंजयति ॥ ९ ॥

नेदते नादवानिव । अध इव हि । नरकाद्यधोगतिसाम्यनिरासायेव शब्दः । देवलोकपितृलोकापेक्षयाधस्तन इत्यर्थः ॥५॥१॥८॥ यज्ञं दक्षिणतो । दक्षिणभागे स्थितो ब्रह्मा । अद्य यज्ञं कतिभिर्देवताभिः गोपायतीत्युवाचाश्वल इत्यर्थः । शिष्टं प्राग्वत् ॥ मनं एवेति । मनोभिमानी चतुर्मुख एवेत्यर्थः । तं स्तौति ॥ अनंतं वा इति । तदानंत्यमुपपादयति ॥ अनंता इति । यदधिष्ठिता विश्वेदेवा अप्यनंताः किमु मनोनंतमिति निश्चयेन विमोक्ष्यत्वाद्वा अनंताख्यविष्णूपासकत्वाद्वा अनंता विश्वेदेवा इत्यर्थः । एवं ज्ञानिनः फलमाह ॥ अनंतमिति । तेन मनोभिमानिचतुर्मुखस्थेन तदधिष्ठानदेवेषु विद्यमानेन च प्रद्युम्नाख्यरूपेणा

पासितेन तदुपासनयेति यावत् । अनंतं अनंताख्यविष्णुलोकं जयति प्राप्नोति ॥ ५ ॥ १ ॥ ९ ॥ स्तोत्रियाः सामारूढा ऋचः ता ऋचः । अध्यात्मं याः यदभिमन्यमानाः ता देवताः कतमा इत्यर्थः ॥ किं ताभिर्जयतीति । प्राणापानव्यानरूपदेवताभिः पुरोनुवाक्याद्यधिष्ठात्रीभिरित्यर्थः । पुरोनुवाक्यया पुरोनुवाक्याभानिप्राणगतेन । याज्यया याज्याभान्यपानस्थेन । शस्यया शस्याभानि व्यानस्थेनानिरुद्धेनोपासितेनेत्यर्थः । ततः स्वकृतप्रश्नानामुत्तरस्योक्तत्वादेव उपरराम । तूष्णीं बभूव ॥ ५ ॥ १ ॥ १० ॥ ७ ॥

याज्ञवल्क्येतिहोवाच कत्ययमद्योद्गातास्मिन्यज्ञेस्तोत्रियाःस्तोष्यतीतितिस्रइतिकतमास्तास्तिस्र
इतिपुरोनुवाक्याचयाज्याचशस्यैवतृतीयाकतमास्तायाअध्यात्ममितिप्राणएवपुरोनुवाक्या
अपानोयाज्याव्यानःशस्याकिंताभिर्जयतीतिपृथिवीलोकमेवपुरोनुवाक्ययाजयत्यंतरिक्षलो
कंयाज्ययाद्युलोकंशस्ययाततोहहोताआश्वलउपरराम ॥ १० ॥ ॥ इत्याश्वलब्राह्मणं ॥ ५ ॥ १ ॥
अथहैनंजारत्कारवआर्तभागःपप्रच्छयाज्ञवल्क्येतिहोवाचकतिग्रहाःकत्यतिग्रहाइत्यष्टौग्रहा
अष्टावतिग्रहाइतिएतेष्टौग्रहाअष्टावतिग्रहाःकतमेतइति ॥ १ ॥

प्रथममाश्वलब्राह्मणं ॥ ७ ॥ अथाश्वलोपरत्यनंतरं जरत्कारोरपत्यं जारत्कारवः ऋतभागस्यापत्यं आर्तभागः । गृह्णंति विषयानिति ग्रहाः इंद्रियाणि कति । अतिग्रहाः विषयाश्च कति कियन्त इत्युवाचेत्यन्वयः उत्तरमाह ॥ अष्टाविति । संख्येयान्पृच्छति ॥ एत इति । एते अष्टौ ग्रहा अष्टावतिग्रहाश्चोक्ताः । ते कतमे कीदृशा इत्युवाचेत्यन्वयः ॥ ५ ॥ २ ॥ १ ॥

उत्तरमाह ॥ प्राणो वा इति । प्राणः घ्राणेंद्रियं ग्रहः । अतिग्रहत्वप्रदर्शनपूर्वं प्राणाख्यातिग्रहं दर्शयति ॥ स इति । स प्राणोपानेनापानाभिमन्यमानेन गंधेनातिग्राहेण गृहीतः । अनेन घ्राणं गृह्णाति स्वाभिमुख्येनाहरतीति गंधोतिग्रह इति गंधस्य

प्राणोवैग्रहःसोपानेनातिग्रहेणगृहीतोपानेनहिगंधान्जिघ्रति ॥ २ ॥ वाग्वैग्रहःसनाम्नातिग्रहेणगृहीतोवाचाहिनामान्यभिवदति ॥ ३ ॥ जिह्वावैग्रहःसरसेनातिग्रहेणगृहीतोजिह्वयाहिरसान्विजानाति ॥ ४ ॥ चक्षुर्वैग्रहःसरूपेणातिग्रहेणगृहीतश्चक्षुषाहिरूपाणिपश्यति ॥ ५ ॥ श्रोत्रंवैग्रहःसशब्देनातिग्रहेणगृहीतःश्रोत्रेणाहिशब्दान्शृणोति ॥ ६ ॥ मनोवैग्रहःसकामेनातिग्रहेणगृहीतोमनसाहिकामान्कामयते ॥ ७ ॥ हस्तौवैग्रहःसकर्मणातिग्रहेणगृहीतोहस्ताभ्यांहिकर्मकरोति ॥ ८ ॥ त्वग्वैग्रहःसस्पर्शेनातिग्रहेणगृहीतस्त्वचाहिस्पर्शान्वेदयतइत्येतेष्टौग्रहाअष्टावतिग्रहाः ॥ ९ ॥

घ्राणातिग्रहत्वमुक्तं भवति । प्राणस्य ग्रहत्वं दर्शयति ॥ अपानेनेति । अपानाभिमन्यमानेन घ्राणेन गंधान् जिघ्रति जीवः हि यस्मात्तस्मात्प्राणो ग्रह इत्यर्थः ॥ ५ ॥ २ ॥ २ ॥ वाग्वा इति । प्राग्वद्योजना । एवमग्रेपि । इत्येते अष्टौ ग्रहा अष्टावतिग्रहा इत्येतत्पर्यंतं योजना ध्येया ॥५॥२-३-४-५-६ ॥ कामेन काम्यंन ॥५॥२-७-८॥ उपसंहरति ॥ इत्येतेष्टाविति ॥५॥२॥९॥

प्रष्टव्यांतरं पृच्छति॥ याज्ञवल्क्येति। यदिदं प्रमितं सर्वं यस्य मृत्योरन्नं स मृत्युः का देवता। स च मृत्युर्यस्या देवताया अन्नं सा च देवता केति योजना। आद्यस्योत्तरमग्निरिति। द्वितीयस्योत्तरं स इति। अत्रैके सोऽग्निरपां अवभिमानिनः सूर्यस्यान्नमिति वा अग्निपदेन चतुर्मुखोऽपशब्देन विष्णुरिति वार्थ इत्याहुः। एतज्ज्ञानिनः फलमाह॥ अपपुनरिति। अपमृत्युं पुनर्मृत्युं पुनर्मृतिं च जयति अतिक्रामति। मुक्तो भवतीति यावत्। य एवं वेदेति योज्यं॥५॥२॥१०॥ मनुष्यो ज्ञानी निर्याणकाले किं ब्रह्मनाड्या प्राणैस्सह

याज्ञवल्क्येतिहोवाचयदिदꣳसर्वंमृत्योरन्नंकास्वित्सादेवतायस्यामृत्युरन्नमित्यग्निर्वैमृत्युःसोपामन्नमपपुनर्मृत्युंजयति ॥१०॥ याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतउदस्मात्प्राणाःक्रामंत्याहो३ नेति नेतिहोवाचयाज्ञवल्क्योत्रैवसमवनीयंतेसउच्छ्वयत्याध्मायत्याध्मातोमृतःशेते ॥११॥

गच्छति उत यावच्छरीरलयमत्रैव स्थित्वा तल्लयं पश्चाद्गच्छतीति पृच्छति॥ याज्ञवल्क्येति। अयमात्मत्वरूपैकगुणोपासको ब्रह्मज्ञानी पुरुषो यत्र यदा म्रियते तदा अस्माज्ज्ञानिदेहात् प्राणा वागादींद्रियाभिमानिनः उत्क्रामंति॥ आहो ३ नेति। मृतिकाले इंद्रियाभिमानिभिस्सह ब्रह्मज्ञानी ब्रह्मनाड्योत्क्रामत्युत नेति प्रश्नार्थः। उत्तरमाह॥ नेति होवाचेति। अत्रैव समव(नी)लीयंते। यावच्छरीरनाशमत्रैव शरीरे तिष्ठंति स ज्ञानी उच्छ्वयति स्थूलदेहो भवति। आध्मायति। बाह्यवायुना पूरितो भवति। आध्मातो मृतो निश्चेष्टः शेते। एवं प्रारब्धफलभूतं देहोच्छूनतादिकमनुभूय पश्चान्मुक्तिं गच्छतीत्यर्थः॥ ५॥ २॥ ११॥

मुक्तौ विशेषं पृच्छति ॥ याज्ञवल्क्येति । अयं पुरुषो ब्रह्मज्ञानी यत्र यदा म्रियते मुक्तो भवति तदा एनं जीवं किं न जहाति न त्यजतीत्युवाचेत्यन्वयः । उत्तरमाह ॥ नामेतीति । कुत इत्यत आह ॥ अनंतमिति । नाम्नोनंतत्वं कुत इत्यतस्तद्वाच्यानां देवानामनंतत्वादित्याह ॥ अनंता वा इति । ब्रह्मरुद्रादिदेवानामनंतत्वात्तन्नामान्यप्यनंतानीत्यर्थः । एतज्ज्ञानिनः फलमाह ॥

याज्ञवल्क्येतिहोवाचयत्रायंपुरुषोम्रियतेकिमेनंनजहातीतिनामेत्यनंतंवैनामानंतावैविश्वेदेवा अनंतमेवसतेनलोकंजयति ॥१२॥ याज्ञवल्क्येतिहोवाचयत्रास्यपुरुषस्यमृतस्याग्निंवागप्ये तिवातंप्राणश्चक्षुरादित्यंमनश्चंद्रंदिशःश्रोत्रंपृथिवीꣳशरीरमाकाशमात्मौषधीर्लोमानिवनस्प तीन्केशाअप्सुलोहितंचरेतश्चनिधीयतेक्वायंतदापुरुषोभवतीत्याहरसोम्यहस्तमार्त्तभागाऽऽ वामेवैतस्यवेदिष्यावोननावेत्तत्सजनइतितौहोत्क्रम्यमंत्रयांचक्राते तौहयदूचतुःकर्महैवतदू चतुरथयत्प्रशशꣳसतुःकर्महैवतत्प्रशशꣳसतुःपुण्योवैपुण्येनकर्मणाभवतिपापःपापेनेति ततो ह जारत्कारवआर्तभागउपरराम ॥१३॥ ॥ इत्यार्तभागब्राह्मणं ॥५॥२॥

अनंतमेवेति । य एवं वेदेति शेषः ॥ ५ ॥ २ ॥ १२ ॥ इदानीं साधारणमृतिप्रकारं पृच्छति ॥ याज्ञवल्क्येति । यत्र यदा । वाक् वागभिमानी अग्निं अधिदैवभूतं मूलरूपमप्येति प्राप्नोति । वातं देहस्थवाय्वभिमानी प्राणः मूलरूपं । एवं चक्षुरित्यादावपि

ध्येयं । अत्राध्यात्मगतवागादिदेवानामधिदैवमाप्तिर्भागश एव भागशस्तु जीवेनेति ज्ञेयं । तथाच सूत्रं । अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वादिति । आत्मा देहप्रेरकतया हृदिस्थं हरे रूपं आकाशं वहिर्व्याप्तं स्वकीयं रूपं लोहितं रेतश्च तदुभयमानिद्वयं अप्सु निधीयते तदाऽयं पुरुषो जीवः क भवति । कुत्रस्थानं तिष्ठतीत्युवाचेत्यन्वयः । इति पृष्टस्योत्तरं वक्तुं तस्यातिगोप्यत्व ज्ञापनायोपोद्धातमाह ॥ आहरेति । हे सौम्य हस्तमाहर । गृहाण देहीति वा । हे आर्तभाग । आवामेव एतस्यैतत् त्वत्पृष्टं तत्त्वं वेदिष्यावः । नौ आवाभ्यां स जनोऽयोग्यजनः एतत् न विद्यादित्यर्थः । तौ याज्ञवल्क्यार्तभागौ उत्क्रम्योत्थाय । मंत्रयांचक्राते । किं मंत्रयामासतुरित्यत उपनिषत्स्वयमाह ॥ तौ हेति । यत् कर्मेव । कर्मफलदातृतया कर्मपदेन भगवान्ग्राह्यः । प्रशशंसतुरित्यर्थः । क तदा पुरुष इति कृतप्रश्नस्योत्तरमाह ॥ पुण्यो वा इति । स मृतः पुरुषो यदि पुण्यकर्मा तर्हि पुण्येन कर्मणा तत्स्थेन तन्नामकेन हरिणा पुण्यो भवति । स्वर्गादिपुण्यलोकस्थो भवति । पापकर्मा चेत्पापेन कर्मणा पापफलदातृतया पाप नामकेन पापस्थेन हरिणा पापो नरकादिलोकस्थो भवति । यदि ज्ञानी तर्हि ज्ञानस्थेन हरिणा मुक्तिमाप्नोतीत्यपि ग्राह्यं ॥ तत इति । स्वकृतप्रश्नस्योत्तरितत्वात् उपरराम तूष्णीं बभूवेति ॥ १३ ॥ द्वितीयमार्तभागब्राह्मणं ॥ छ ॥ छ ॥ अथार्तभागप्रश्नो

त्तरानंतरं भुज्युर्भुज्युनामा लह्यस्यापत्यं लाह्यायनिः एनं पप्रच्छ। एतत्प्रश्नस्य न त्वयोत्तरं वक्तुं शक्यमिति भावेन कांचन कथामाह ॥ याज्ञवल्क्येति । चरकास्तीर्थचारिणः संतो वयं मद्रेषु देशेषु पर्यव्रजाम पर्यटनवंतोभूम। ते वयं काप्यस्य कपिगोत्रोत्पन्नस्य पतंच(ज)लस्य पतं(ज)चलनाम्नो गृहानैम। अगमाम। तस्य पतं(ज)चलस्य दुहिता पुत्री गंधर्वगृहीता। गंधर्वेणाविष्टाऽऽसीत्।

अथहैनंभुज्युर्लाह्यायनिःपप्रच्छयाज्ञवल्क्येतिहोवाचमद्रेषुचरकाःपर्यव्रजाम तेपतं(च)जलस्य काप्यस्यग्रहानैम तस्यासीद्दुहितागंधर्वगृहीता तमपृच्छामकोसीतिसोब्रवीत्सुधन्वांगिरसइ तितंयदालोकानामंतानपृच्छामाथैनमब्रूमक्कपारीक्षिताअभवान्नितिक्कपारीक्षिताअभवन्सत्वा पृच्छामियाज्ञवल्क्यक्कपारीक्षिताअभवान्निति ॥ १ ॥

तं दुहित्राविष्टं त्वं क इत्यपृच्छाम। सोब्रवीत्। सुधन्वा आंगिरसोंगिरोगोत्रज इत्यब्रवीदित्यर्थः। तं गंधर्वं यदा लोकानामंतान् निर्णयानपृच्छाम। अथ तदा एनं गंधर्वं क्व पारीक्षिता अभवान्नित्यब्रूमेत्यर्थः। परितः ईक्षितृत्वात्परीक्षिद्विष्णुः। तत्पुत्रत्वा त्पारीक्षिताः अतीतानागतकामदेवा ज्ञेयाः। द्विरुक्तिरादरार्था। सोहं त्वा पृच्छामि ॥५॥३॥१॥ एवं पृष्टो याज्ञवल्क्य उवाच।

स सुधन्वांगिरसस्तुभ्यमुवाच वै । उक्तवानेव किल । अहं तु ब्रवीमीति मत्वोत्तरमाह ॥ अगच्छन्निति । यत्र लोके अश्वमेधयाजिनः शताश्वमेधयाजित्वेनाश्वमेधयाजिन इत्युक्ताः अश्वमेधयाजिनः गच्छंति तत् तत्र तं पारिक्षिता अगच्छन्नित्युवाच याज्ञवल्क्य इत्यर्थः । पुनः पृच्छति ॥ क न्वश्वमेधयाजिन इति । ब्रह्मांडाद्बहिस्तिष्ठंतीति वक्तुं ब्रह्मांडस्वरूपमेकदेशेनाह ॥

सहोवाचोवाचवैसोगच्छन्वैतेतद्यत्राश्वमेधयाजिनोगच्छंतीति क्वन्वश्वमेधयाजिनोगच्छंतीति द्वात्रिंशतंवैदेवरथाह्न्यान्ययंलोकस्तंसमंतंपृथिवीद्विस्तावत्पर्येतितांसमंतंपृथिवींद्विस्तावत्समुद्रःपर्येति तद्यावतीक्षुरस्यधारायावद्वामक्षिकायाःपत्रंतावानंतरेणाकाशस्तानिंद्रःसुपर्णोभूत्वावायवेप्रायच्छत्तान्वायुरात्मनिधित्वातत्रागमयद्यत्राश्वमेधयाजिनोभवन्नित्येवमिववैसवायुमेवप्रशशंसतस्माद्वायुरेवव्यष्टिर्वायुःसमष्टिरपपुनर्मृत्युंजयतियएवंवेदततोहभुज्युर्लाह्यायनिरुपरराम ॥ २ ॥ ॥ भुज्युब्राह्मणं ॥ ५ ॥ ३ ॥

द्वात्रिंशतमिति । द्वात्रिंशतं द्वात्रिंशत् । देवरथस्य परिवर्तमानस्याहानि मुहूर्तानि देवरथाहानि । तैर्व्याप्तानि योजनानि देवरथाह्न्यानि यावंति योजनानि देवस्य सूर्यस्याहोभिः प्रकाशैर्वा व्याप्तानि अयं । सौरप्रकाशव्याप्तो देशो लोकनामा द्वात्रिंशन्मुहूर्तात्मकाहोरात्राभ्यां यावंतं देशं सूर्यरथः परिभ्रमति तावति देशं सौरप्रकाशः । यावति च सौरप्रकाशः तावान्देशो लोक इत्युच्यत इत्यर्थः ।

यावान्लोकनामको देशः द्विस्तावत् द्विगुणितस्तावान् देशः काठिण्यात्पृथिवीत्युक्तं तमः । तं लोकनामकं देशं समंतं समंतात्पर्येति । परितो वर्तते । यावांस्तमः प्रदेशः द्विस्तावत्समुद्रः घनोदकनामा तां पृथिवीं समंतं समंतात्पर्येति परितो वर्तते ततस्त्वंडं च सौवर्णं तद्भिन्नं हरिणा पुरेति ग्राह्यं । यावती क्षुरस्य धारा अग्रं यावद्वा मक्षिकायाः पत्रं तावान् तत्र सौवर्णांडे अंतरेणाकाशोस्ति । तेन मार्गेणेंद्रः सामर्थ्यादिंद्रनामा पुरुषरूपी गरुडः सुपर्णो भूत्वा सुपर्णरूपी भूत्वा पारीक्षितान्वायवे प्रायच्छत् वायुस्तान्पारीक्षितान् आत्मनि स्वशरीरे धित्वा तत्रागमयत् यत्र प्रद्युम्ननामके विष्णौ अश्वमेधयाजिनो मुक्तिगा इंद्रा अभवन्निति । यथाहं पारीक्षितानां मोक्षदातृतया वायुं स्तौमि । एवमिव वै । एवमेव वै । स गंधर्वोपि वायुमेव प्रशशंस । वेदपुरुषः स्वयं वायुं स्तौति ॥ तस्मादिति। पारीक्षितानां मोक्षदातृत्वाद्वायुरेव व्यष्टिः । वि विविधं प्रत्येकमनेकविधं देवर्षिपितृयक्षगंधर्वमानुषोरगासुरभेदेन यदष्टकं तन्नयतीति व्यष्टिः वायुरेव समष्टिः सं संपूर्णं यत् सुपर्णशेषेंद्रतत्स्त्रीरूपाष्टकं तन्नयति प्रेरयतीति समष्टिः । एकादशस्कंधैकादशाध्यायतात्पर्ये तु पंचभूतमनोबुद्धिरुद्राणां प्रतिदेहकं । बाह्यतश्चापि नेतृत्वाद्वायुर्व्यष्टिः समष्टिक इत्युक्तं । व्यष्टिसमष्टित्वेन वायुज्ञानिनः फलमाह ॥ अपपुनरिति । अपमृत्युं पुनर्मृत्युं मृतिं च जयति अतिक्रामतीत्यर्थः ॥ ५ ॥ ३ ॥ २ ॥ छ ॥ तृतीयं भुज्युब्राह्मणं ॥ ३ ॥

अथ भुज्युप्रश्नोत्तरानंतरं चक्रस्यापत्यं चाक्रायण उपस्तनामा एनं याज्ञवल्क्यं पप्रच्छ। साक्षादन्यप्रसादं विना अपरोक्षं यथा भवति तथा अत्ति अनुभवति स्वस्वरूपमन्यच्चेति साक्षादपरोक्षात्। ब्रह्म। सर्वगुणपूर्णः। यश्चात्मा सर्वेषां नियामकः सर्वनियमने अन्यापेक्षा नास्तीत्याह ॥ सर्वांतर इति। सर्वं सामर्थ्यं स्वांतरेवास्तीति सर्वांतर इत्यर्थः। सर्वशक्तिमानिति यावत् इति यत् यो मया श्रुतः तं लक्षणेन मे व्याचक्ष्वेति होवाचेत्यन्वयः। उत्तरमाह ॥ एष इति। तं तव आत्मा नियामकः साक्षादपरोक्षत्वाद्यु

अथहैनमुषस्तश्चाक्रायणःपप्रच्छयाज्ञवल्क्येतिहोवाचयत्साक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतर
स्तंमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्यसर्वांतरोयःप्राणेनप्राणितिसतआत्मा
सर्वांतरोयोपानेनापानितिसतआत्मासर्वांतरोयोव्यानेनव्यानितिसतआत्मासर्वांतरोयउदाने
नोदानितिसतआत्मासर्वांतरो(यःसमानेनसमानितिसतआत्मासर्वांतर)एषतआत्मासर्वांतरः ॥१॥

क्तगुणविशिष्टस्त्वया पृष्टः। एष वक्ष्यमाण इत्यर्थः। एष क इति पृच्छति ॥ कतमो याज्ञवल्क्य सर्वांतर इति। सर्वांतरत्वा दिगुणकः किं लक्षणक इत्यर्थः। तस्य ब्रह्मात्मशब्दप्रवृत्तिनिमित्तान्येव लक्षणानीति भावेनात्मशब्दार्थमाह ॥ य इति। यः प्राणेन प्राणनाम्ना मुख्यवायुरूपेण प्राणिति जगत्प्राणनं करोति स ते तव आत्मा सर्वांतरः सर्वशक्त्यादिमत्त्वरूपप्रागुक्तगुणक इत्यर्थः। एवमग्रेपि योजना ध्येया ॥ अपानिति। मलादिविसर्जनं प्राणिनां करोति। व्यानिति। भुक्तमन्नादिकं शरीरे विविधं नयति। उदानिति। ऊर्ध्वं नयति। श्वासादि करोति। समानेन समानितीत्यपि ग्राह्यं। निगमयति ॥ एष त इति। ते

आत्मा सर्वांतर एषः प्राणादिपंचरूपमुख्यवायुद्वारेण प्राणनादिव्यापारकर्तृत्वलक्षणक इत्यर्थः ॥५ ॥४ ॥ १ ॥ वाग्यंतरोक्तरीत्या देवतांतराणामपीदं लक्षणं सममतो साधारणं लक्षणं तस्य नाम च ब्रूहीति भावेन पुनः पृच्छति ॥ **स होवाचेत्यादिना** । गवादिस्वरूपे पृष्टे असौ चतुष्पात् गौरसौ चतुष्पादश्व इति यथा कश्चिद्विब्रूयात् वदेत् । एवमेवैतत् त्वया व्यपदिष्टं उक्तं भवति। यथा चतुष्पात्त्वादिलक्षणं गवाश्वादिसाधारणं एवं प्राणनादिकर्तृत्वलक्षणं त्वयोक्तं वाग्यंतरोक्तदिशा हरहिरण्यगर्भादिसाधारणमिति

**सहोवाचोषस्तश्चाक्रायणोयथाविब्रूयादसौगौरसावश्वइत्येवमेवैतद्व्यपदिष्टंभवति यदेवसाक्षा दपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तंमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्यसर्वांतरो नदृष्टेर्द्रष्टारंपश्येर्नश्रुतेःश्रोतारंशृणुयानमतेर्मंतारंमन्वीथानविज्ञातेर्विज्ञातारंविजानीयाएष तआत्मासर्वांतरोऽतोन्यदार्तंततोहोषस्तश्चाक्रायणउपरराम ॥ २ ॥ उषस्तब्राह्मणं ॥ ५ ॥ ४ ॥**

नेदं निर्णायकमिति भावः ॥ **यदेवेति** । य एव साक्षादपरोक्षात्त्वादिगुणकः श्रुतो मया तं अन्यासाधारणलक्षणादियुक्ततया मे मह्यं व्याचक्ष्वेति प्रश्नार्थः । एष इत्यादि प्राग्वत् ॥ साकल्येनाज्ञेयत्वं लक्षणमाह ॥ **न दृष्टेरित्यादिना** । दृष्टेर्द्रष्टारं श्रुतेश्श्रोतारमित्यादेः द्रष्टव्यस्य द्रष्टारं श्रोतव्यस्य श्रोतारमित्यादिरूपेण दृष्टेरित्यादेर्द्रष्टारमित्यादौ कर्मार्पिकतया वा द्रष्टारं दृष्टेः चक्षुषा न पश्येरित्यादिरूपेण वार्थो ज्ञेयः । विज्ञाति शब्दो बुद्धिपरोत्र ज्ञेयः । एवं न पश्येः न शृणुया इत्यादिना चक्षुराद्यगोचरत्वमेक

मितरासाधारणं लक्षणमुक्त्वा चेतनत्वे सत्यार्तिशून्यत्वमप्यपरमसाधारणं तत्तु नान्यत्रेति भावेनाह ॥ अतोन्यदिति । अतः अकारवाच्याद्धरेरित्यर्थः । अन्यत् ब्रह्मादिजीवजातं आर्तं दुःखीत्यर्थः । अत इत्यनुवादबलादकारवाच्यत्वमपीतरासाधारणं लक्षणमुक्तं भवति । तत इत्याद्युक्तार्थं ॥ ५ ॥ ४ ॥ २ ॥ चतुर्थमुषस्तब्राह्मणं ॥ ४ ॥ छ ॥ अथोषस्तोपरमानंतरं कुषीतकेरपत्यं

अथहैनंकहोलःकौषीतकेयःपप्रच्छ याज्ञवल्क्येतिहोवाच यदेवसाक्षादपरोक्षाद्ब्रह्मयआत्मासर्वांतरस्तमेवमेव्याचक्ष्वेत्येषतआत्मासर्वांतरःकतमोयाज्ञवल्क्यसर्वांतरोयोशनायापिपासेशोकंमोहंजरांमृत्युमत्येत्येतंवैतमात्मानंविदित्वाब्राह्मणाःपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंतियाह्येवपुत्रैषणासावित्तैषणायावित्तैषणासालोकैषणोभेह्येतेईषणेएवभवतस्तस्माद्ब्राह्मणःपांडित्यंनिर्विद्यबाल्येनतिष्ठासेद्बाल्यंचपांडित्यंचनिर्विद्याथमुनिरमौनंचमौनंचनिर्विद्याथब्राह्मणःसब्राह्मणःकेनस्याद्येनस्यात्तेनेदृशएवातोन्यदार्तंततोहकहोलःकौषीतकेयउपरराम ॥ १ ॥ कहोलब्राह्मणं ॥ ५ । ५ । ॥ ॥

कौषीतकेयः कहोलनामा मुक्तानां भगवतो भेदज्ञानाय प्रागुक्तानुवादपूर्वं मुक्तेशयोर्वैलक्षण्यं पप्रच्छेत्याह ॥ अथेत्यादिना ॥ तमेवेति ॥ मुक्तवैलक्षण्ययुक्तमेव मे व्याचक्ष्वेत्यर्थः । एष इत्यादि प्राग्वत् मुक्तपरमात्मनोर्वैलक्षण्यज्ञानाय भगवत्स्वरूपं ताव

दाह ॥ योऽशनायेति । य आत्मा अशनाया अशितुमिच्छा पातुमिच्छा पिपासा ते अशनायापिपासे । शोकं दुःखं मोहं मिथ्याज्ञानं । जरां देहावस्थाविशेषं । मृत्युं मरणं । अत्येति । स्वत एवानाद्यनंतकालेष्वतिक्रम्य वर्तते । एष त आत्मा सर्वांतरस्त्वया पृष्ट इत्यर्थः । एवं भगवत्स्वरूपमुक्त्वा मुक्तस्वरूपमाह ॥ एतमिति । एतमशनायाद्यतिक्रांतं प्रागुक्तसाक्षादपरोक्षात्त्वादिगुणं आत्मानं विदित्वा वै विदित्वैव साक्षात्कृत्यैव । साक्षात्कृतब्रह्मप्रसादेनैवेति यावत् । ब्राह्मणाः ब्रह्माणनवंतः अण गतौ । ब्रह्मप्राप्तिमंतः मुक्ता इति यावत् । भवन्तीति शेषः । स्वत एवानाद्यनंतकालं शोकाद्यतीतं ब्रह्म । मुक्तास्तु तत्प्रसादात्तशोकाद्यतिक्रमवंतोऽतस्तयोर्वैलक्षण्यमिति भावः । कथं मुक्ता इत्यत आह ॥ पुत्रेति । अन्योन्यसमुच्चये च शब्दाः । ईषणा नाम आकांक्षा । ईषणात्रयादुत्थाय । तत्त्रितयमपि विहाय ब्राह्मणा भवंतीत्यन्वयः । यद्वा पुत्रेत्यादेरुत्तरेणाथेत्यादिना वैलक्षण्यांतरोक्तिपरग्रंथेनान्वयः । अथ मुक्त्यनंतरं भिक्षाचर्यं चरंति हरेस्सकाशाद्विप्लुडानंदभिक्षवो भवन्ति ब्राह्मणा इत्यनुषंगः । मुक्तावपि भिक्षावंतश्चेद्दुःखिनः स्युरित्यतोऽतीतेषणत्वान्न दुःखित्वमिति भावेनोक्तं । पुत्रेषणायाश्चेत्यादि । ब्रह्मादेर्मुक्तवर्गस्य विप्लुडानंदभिक्षुत्वाद्धरेरपरिमितानंदत्वात्तयोर्वैलक्षण्यं ध्येयमिति भावः । किमेतास्तिस्रोपीषणा अन्योन्यं स्वतंत्रा इत्यतो नेत्याह ॥ या ह्येवेति । वित्तस्य प्रायः पुत्रार्थत्वाद्वित्तेषणा पुत्रेषणायामंतर्गतेत्यर्थः । पुत्रवित्तयोस्स्वर्गादिलोकहेतुत्वात् पुत्रेषणावित्तेषणे द्वे अपि लोकेषणायामंतर्भवत इत्यर्थः । तथा चैकैवेषणेति भावः । पुत्रेषणवित्तेषणयोरेव दृष्टविषयतयैक्यविवक्षया पुत्रवित्तेषणे एका लोकेषणा तु अदृष्टविषयत्वादन्येति द्वे एव ईषणे भवत इति द्वित्वपक्षोऽप्युभे इत्यतः पूर्वं ग्राह्यः ।

ननु लोकैषणाया यागादिनार्थ्यमानत्वात्कथं लोकैषणाया व्युत्थायेत्युक्तिरित्यतस्तस्या अपि त्याज्यत्वमाह ॥ उभे इति । दृष्टादृष्टविषयतया द्विधाभूते पुत्रैषणावित्तैषणलोकैषणे उभे हि यस्मादीषणे एव भवतात ईषणात्वाद्दुःखरूपे एवेत्यर्थः ॥ यथा पूर्वमुक्ता भिक्षुका एवं मुच्यमानोपि भिक्षुक इति येन स्यादित्यनेन वक्तुं मुक्तिसाधनान्याह ॥ तस्मादिति । मोक्षेतरलोकैषणाया अपि दुःखरूपतया ब्रह्मसाक्षात्कारस्यैव परमपुमर्थमुक्तिहेतुत्वात् ब्राह्मणो ब्रह्माणनयोग्यः पांडित्यं आगमजन्यं ज्ञानं प्राप्नुयादिति शेषः । पांडित्यं निर्विद्य नितरां लब्ध्वा बाल्येन युक्तिसहितज्ञानेन मननेनेति यावत् । तिष्ठासेत् । स्थातुमिच्छेत् । मननजज्ञानं संपादयेदित्यर्थः । एवं पांडित्यं बाल्यं च निर्विद्य प्राप्य । अथानंतरं मुनिर्ध्यानी भवति । एवं मौनं ध्यानं । च शब्दाच्छ्रवणमननं च निर्विद्य । मौनं भगवत्साक्षात्कारं च । प्राप्नोति । अथेश्वरसाक्षात्कारानंतरं ब्राह्मणो मुक्तो भवति । स ब्राह्मणो मुक्तः येन स्यात् येन केनापि भोगेन वर्तेत तेन वर्तनेन । ईदृश एव यथा संसारदशायां भिक्षुकः तथा हरेर्विशुद्धानंदभिक्षुक एवेत्यर्थः स्तुतयेनुमतिर्वेत्यधिकरणभाष्यादौ तु अथ ब्राह्मण इति वाक्यस्य जीवन्मुक्तपरत्वमुपेत्य येनेत्यस्याधिकारिभेदेनाविधिबंधेन विहितसर्वानुष्ठानपरत्वं विहितेषु कतिचिदनुष्ठानपरत्वं यथेष्टाचारविधिपरत्वमित्येवं रूपार्थत्रयपरत्वरूपकामचारार्थकत्वमुक्तं । तथा च सूत्राणि । ॐपरामर्शं जैमिनिरचोदना चापवदति हि ॐ । ॐअनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ । ॐ विधिर्वा धारणवदिति । मुक्ताद्भगवतो वैलक्षण्यांतरमाह ॥ अत इति । अतो भगवतोऽन्यद्ब्रह्मादिमुक्तजातं कदाचिदार्तं न तथा भगवानित्यर्थः । ततः । स्वकृतप्रश्नस्योत्तरितत्वादित्यर्थः ॥ ५ ॥ ५ ॥ १ ॥ छ ॥ पंचमं कहोलब्राह्मणं ॥ छ ॥ ५ ॥ छ ॥ पूर्वत्र मुक्तेशयोर्भेदज्ञा

पनायानेकवैलक्षण्यमुक्तं अत्र तु मुक्तानां तारतम्यमुच्यते । अथ कहोलप्रश्नानंतरं वचक्नोरपत्यं वाचक्नवी गार्गी नामतः याज्ञ

अथहैनंगार्गीवाचक्नवीपप्रच्छयाज्ञवल्क्येतिहोवाच यदिदꣳसर्वमप्स्वोतंचप्रोतंचेतिकस्मिन्नुखल्वापओताश्चप्रोताश्चेतिवायौगार्गीतिकस्मिन्नुखलुवायुरोतश्चप्रोतश्चेत्यंतरिक्षलोकेषुगार्गीतिकस्मिन्नुखल्वंतरिक्षलोकाओताश्चप्रोताश्चेतिगंधर्वलोकेषुगार्गीतिकस्मिन्नुखलुगंधर्वलोकाओताश्चप्रोताश्चेत्यादित्यलोकेषुगार्गीतिकस्मिन्नुखल्वादित्यलोकाओताश्चप्रोताश्चेतिचंद्रलोकेषुगार्गीतिकस्मिन्नुखलुचंद्रलोकाओताश्चप्रोताश्चेतिनक्षत्रलोकेषुगार्गीतिकस्मिन्नुखलुनक्षत्रलोकाओताश्चप्रोताश्चेतिदेवलोकेषुगार्गीतिकस्मिन्नुखलुदेवलोकाओताश्चप्रोताश्चेनींद्रलोकेषुगार्गीतिकस्मिन्नुखल्विंद्रलोकाओताश्चप्रोताश्चेतिप्रजापतिलोकेषुगार्गीतिकस्मिन्नुखलुप्रजापतिलोकाओताश्चप्रोताश्चेतिब्रह्मलोकेषुगार्गीतिकस्मिन्नुखलुब्रह्मलोकाओताश्चप्रोताश्चेतिसहोवाचगार्गिमातिप्राक्षीर्मातेमूर्धाव्यप(त)प्तदनातिप्रश्न्यांवैदेवतामातिपृच्छसिगार्गिमातिप्राक्षीरितिततोहगार्गीवाचक्नव्युपरराम ॥ ॥ १ ॥ गार्गिब्राह्मणं ॥ ६ ॥ ॥ ॥ ॥

वल्क्येति संबोध्योवाच । तदाह ॥ यदिति । यदिदं मुक्तमनुष्योत्तमजातं अप्सु आपिबंत्यखिलान् भोगानित्यप् शब्द

वाच्येषु मुक्तचक्रवर्तिषु ऽ्तं आश्रितं नैतदौपचारिकमित्याह ॥ प्रोतामिति । आपः मुक्तचक्रवर्तिनः कस्मिन्नोताश्च प्रोताश्चेति पप्रच्छेत्यनुषंगः । प्रश्नस्योत्तरमाह ॥ वायाविति । प्रधानवायुपुत्रे चक्रनामके मुक्ते ओताश्च प्रोताश्चेत्युवाचेत्यनुषंगः । एवमग्रेपि । हे गार्गीति संबोधनं ॥ कस्मिन्नु खल्वु वायुरिति । मुक्तचक्रनामा वायुसुतः गंधर्वलोकेषु गंधर्वाख्यस्य प्रधानवायुसुतस्य लोकेषु लोक शब्दोत्र संसारालुप्तानां कानि सुखानीति व्युत्पत्त्या स्वरूपभूतानुभूयमानानंदपरः । लोकेषु सुखमिति मुक्तगंधर्व नामकवायुसुतसुखाधीनं मुक्तचक्रनामकस्वरूपसुखमिति यावत् । एवमग्रेपि । गंधर्वलोका गंधर्वाख्यमरुत्स्वरूपसुखानुभवाः । अंतरिक्षलोकेषु अंतरिक्षाख्यवायुसुतस्य मरुतो मुक्तस्य सुखेषु ऽ्ता इत्यर्थः । आदित्यलोकेषु मुक्तसूर्यानंदेषु चंद्रलोकेषु चंद्र शब्दवाच्यमुक्तानिरुद्धानंदेषु नक्षत्रलोकेषु नक्षत्राख्यमुक्तेंद्रसुखेषु देवलोकेषु रुद्रानंदेषु इंद्रलोकेषु । मुक्तसरस्वत्यानंदेषु प्रजापतिलोकेषु । मुक्तब्रह्मानंदेषु ब्रह्मलोकेषु परब्रह्मानंदेषु । ब्रह्मानंदस्याप्याश्रयप्रश्ने प्रत्युत्तरमाह ॥ मातीति । अति अतिक्रम्य माप्राक्षीः । प्रश्नं माकार्षीः ते मूर्धा शिरः मा व्यप(प्त)तत् । पतितं न भवेत् कुतः यतस्त्वं अनतिप्रश्न्यां आश्रयप्रश्नानर्हां देवतामति अतिक्रम्य पृच्छसि तदाश्रयप्रश्नस्यानर्थहेतुत्वान्नैवं प्रश्नं कुर्विति ॥ १ ॥ षष्ठं गार्गिब्राह्मणं ॥ छ॥ पूर्वत्र ब्रह्मलोकेषु गार्गीति मुक्तसर्वाश्रयत्वेनोक्तस्य हरेः । एष त आत्मा सर्वांतर इति नियंतृत्वेनोक्तस्य इह पुनस्सर्वनियंतृत्वमुच्यते । अथेत्युक्तार्थं । अरुणस्यापत्यं आरुणिरुद्दालको नामतः । वक्ष्यमाणप्रमेये श्रद्धाजननाय आख्यायिकामाह ॥

मद्रेष्वित्यादिना । काप्यस्य कपिगोत्रोत्पन्नस्य नामतः पतंचलस्य गृहेषु यज्ञं यज्ञविद्यामधीयानास्ते प्रसिद्धा वयं ।

अथहैनमुद्दालकआरुणिःपप्रच्छ याज्ञवल्क्येतिहोवाच मद्रेष्व(व)सामतेपतंचलस्यकाप्यस्यगृहेषु यज्ञमधीयानास्तस्यासीद्भार्यागंधर्वगृहीतातमपृच्छामकोसीतिसोब्रवीत्कबंधआथर्वणइति सो ब्रवीत्पतंचलंकाप्यंयाज्ञिकाꣳश्च वेत्थनुत्वंकाप्य तत्सूत्रंयेनायंचलोकःपरश्चलोकःसर्वाणिचभूता निसंहब्धानिभवंतीति सोब्रवीत्पतंचलःकाप्योनाहंतद्भगवन्वेदेतिसोब्रवीत्पतंचलंकाप्यंयाज्ञि काꣳश्चवेत्थनुत्वंकाप्यतमंतर्यामिणंयइमंचलोकंपरंचलोकꣳसर्वाणिचभूतानियोंतरोयमयतीति सोब्रवीत्पतंचलःकाप्योनाहंतंभगवन्वेदेतिसोब्रवीत्पतंचलंकाप्यंयाज्ञिकाꣳश्चयोवैतत्काप्यसूत्रं विद्यात्तंचांतर्यामिणमितिसब्रह्मवित्सलोकवित्सदेववित्सवेदवित्सभूतवित्सआत्मवित्ससर्व विदिति तेभ्योब्रवीत्तदहंवेदतच्चेत्त्वंयाज्ञवल्क्यसूत्रमाविद्वाꣳस्तंचांतर्यामिणंब्रह्मगवीरुदजसेमूर्धा तेविपतिष्यतीति वेदवाअहंगौतमतत्सूत्रंतंचांतर्यामिणमितियोवाइदंकश्चिद्ब्रूयाद्वेदवेदेतियथा वेत्थतथाब्रूहीति ॥ १ ॥

मद्रेषु मद्रदेशेषु अ(व)साम तत्र स्थिता अभूम तस्य पतं(च)जलस्य भार्या गंधर्वगृहीता गंधर्वाविष्टा आसीत् । कोसीति

तमपृच्छाम। कबंधनामकोथर्वणः पुत्र इति सोब्रवीत्। याज्ञिकांश्च यज्ञमधीयानानस्मांश्च कबंधोब्रवीत्। पप्रच्छेत्यर्थः। नदाह। वेत्थेति। हे काप्य येनायं पृथिव्यादिलोकः। परोंतरिक्षादिलोकः। सर्वाणि भूतानि च। संदृब्धानि स्तंभितानि। भवंति तत्सूत्रं स्यूतमस्मिन् जगदिति व्युत्पत्त्या सूत्रनामकं। त्वं वेत्थ नु जानासि किं। इत्यब्रवीदित्यन्वयः। पुनः गंधर्वः पप्रच्छेत्याह ॥ सोब्रवीत्पतंचलमित्यादि। अत्र गंधर्ववाक्ये योंतर इत्यत्र द्वितीयः य शब्दः पूर्णत्वाद्य इतीर्यत इत्युक्तेः विष्णुवाची। तथाच यो यः विष्णुः। इममादिलोकं भूतानि चांतरोंतस्थस्सन् यमयति। तमंतर्यामिणं वेत्थ नु इत्यब्रवीदिति योजना ॥ तमिति। अंतर्यामिणमित्यर्थः। एवं सूत्रांतर्यामिणौ न जानामीति काप्येनोक्ते तज्ज्ञानमावश्यकमिति भावेन तौ जानतः फलमाह गंधर्वः ॥ सोब्रवीदित्यादिना। हे काप्येति संबोधनं इति विद्यादितीति पदस्यान्वयः ॥ भूम्यादिलोकादिधारकत्वसर्वलोकाद्यंतर्नियंतृत्व रूपस्वाविज्ञातप्रकारेण जानीयादित्यर्थः। तं चांतर्यामिणमित्यत्रापि इति विद्यादित्यन्वेति। ब्रह्मवित् पूर्णवित् लोकानां कर्तृवेदनाल्लो कवित्। देवानां देवस्य वेदनाद्देववित्। वेदार्थवेदनाद्वेदवित् भूतनियंतृवेदनाद्भूतवित् आत्मवेदनाद्व्याप्तज्ञानादात्मवित् सर्वसारस्य वेदनात् सर्ववित् इति शब्दानंतरमुक्त्वेति शेषः। इत्येवं सूत्रांतर्यामिणोर्ज्ञानफलमुक्त्वा तेभ्यः काप्यप्रभृतिभ्योस्मभ्यं सूत्रांतर्यामि स्वरूपमब्रवीत्। तत् सूत्रांतर्यामिणोस्स्वरूपं अहं उद्दालकनामकोहं वेद जानामीति। तच्च सूत्रं तं चांतर्यामिणं। अविद्वान जानंश्चेत् त्वं ब्रह्मगवीः ब्राह्मणानां गाः उदजसे आहरसि तर्हि ते मूर्धा विपतिष्यतीति उद्दालक उवाचेत्यन्वयः। एवमुद्दालके

नोक्तो याज्ञवल्क्य उत्तरमाह ॥ वेद वा अहमिति । गौतमेत्युद्दालकस्य संबोधनं । याज्ञवल्क्य उवाचेति योज्यं । उद्दालकः पुनस्तं प्रत्याह ॥ इदमिति । यो वा कश्चित् यः कोपि वेदेति जानामीति ब्रूयात् । न तु वक्ति । यथा येन प्रकारेण वेत्थ तथा ब्रहीत्युवाचोद्दालक इत्यर्थः ॥५॥७॥१॥ एवमुद्दालकेनोक्तो याज्ञवल्क्य उत्तरमुक्तवानित्याह वेदपुरुषः ॥ स होवाचेति । सः याज्ञवल्क्यः । हे गौतम त्वया पृष्टं तत् सूत्रं वायुर्वै मुख्यावायुरेव । प्राक् गंधर्वोक्तं सूत्रलक्षणं वायावस्तीत्याह ॥ वायुना वा इति ।

सहोवाचवायुर्वैगौतमतत्सूत्रं वायुनावैगौतमसूत्रेणायंचलोकःपरश्चलोकःसर्वाणिचभूतानिसं
दृब्धानिभवंतितस्माद्वैगौतमपुरुषंप्रेतमाहुर्व्यस्रꣳसिषतास्यांगानीति वायुनाहिगौतमसूत्रेणसं
दृब्धानिभवंतीत्येवमेवैतद्याज्ञवल्क्यांतर्यामिणंब्रूहीति ॥ २ ॥

सर्वलोकादिस्तंभकत्वं वायोरनुभवारूढं करोति ॥ तस्मादिति । वायोः सर्वलोकाधारत्वादेव वाय्वपगमे प्रेतं पुरुषं प्रत्याहुः । किमिति । अस्यांगानि करचरणाद्यवयवाः व्यस्रंसिषत अधोपतन् इत्याहुरित्यन्वयः । एवं वायोः सर्वलोकस्तंभकत्वमनुभवारूढं कृत्वा साध्यमाह ॥ वायुना हीति । संदृब्धानीत्यनंतरं अयं च लोक इत्याद्यनुषज्यते इत्युवाचेतीति पदस्य पूर्वेणान्वयः। उद्दालको वक्ति ॥ एवमिति । हे याज्ञवल्क्य एतत् वायुर्वै सूत्रमिति त्वयोक्तमेवमेव । नात्र विमतिरस्ति । अंतर्यामिणं

ब्रूहीत्युवाचोद्दालकइत्यर्थः ॥ ५ ॥ ७ ॥ २ ॥ आह याज्ञवल्क्यः ॥ यः पृथिव्यामित्यादिना । पृथुं नारायणं समादाय वाति गच्छतीति व्युत्पत्त्या पृथिवी शब्दोत्र गरुडपरः तद्भार्यापरश्च । अत्र भाष्येऽनुक्तानामपि शाकल्यब्राह्मणे वक्ष्यमाणपृथिव्यादिदेवतानामत्रापि ग्रहणस्य तत्रैव भाष्ये वक्ष्यमाणत्वात् । यः पृथिव्यां पृथिवीमानिनि गरुडे । तिष्ठन् तत्र प्रविष्टतया तत्स्थः पृथिव्या अंतरः । अत्र व्यासतीर्थीयटीकारीत्या अतिप्रियत्वाच्च हरेरंतरत्वमुदाहृतमिति स्मृतेरेतद्विषयत्वात् पृथिव्या इत्यादि पंचम्याः षष्ठ्यर्थत्वेन पृथिव्याः गरुडस्यांतरोतिप्रिय इत्यर्थ इति भवति । सूत्रभाष्यटीकाचंद्रिकयोस्तु बाह्यापेक्षां विनेति श्लोको द्वितीयां

य:पृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंय:पृथिवीमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ३ ॥

तरपदस्यैवार्थद्वयपर इत्युपेत्य पृथिव्या इत्यादिपंचमीस्वारस्यानुसारेणांतरो विविक्त इत्यर्थ उक्तः । एतन्मते पृथिव्या अंतरोऽद्भ्योंतर इत्यादि पंचम्यंतपदोपेतवाक्यजातस्यार्थोत्र भाष्ये नोक्त इति ज्ञेयं । यं पृथिवी गरुडो न वेद साकल्येन । यस्य पृथिवी शरीरमिव शरीरं यथा जीवतंत्रं तथा पृथिव्यपि यत्तंत्रतया यस्य शरीरमिति तमंतःकृत्वा तिष्ठतीति वा शरीरं । यः पृथिवीमंतरो बाह्यापेक्षां विना रममाणश्च अतिप्रियस्सन् यमयति नियमयति तदीयधर्माणां स्वरूपसत्तायाश्च स्वामीति यावत् । एषः यच्छब्दप्रपंचकेन निर्दिष्टस्ते तव उद्दालकस्यात्मा स्वामी अमृतो नित्योंतर्यामी अंतस्स्वतंत्रस्सन् नियमनकर्तेत्यर्थः । एषत इत्युक्तजीवेशभेदज्ञापनाय आत्मपदस्य स्वरूपार्थत्वे अत इति षष्ठ्या औपचारिकत्वापातात् । एवमग्रेपि अधिदैवाधिभूताध्यात्मरूपप्रकरणत्र

यगतविंशतिवाक्यान्यपि योजनीयानि ॥ ५ ॥ ७ ॥ ३ ॥ अप्सु अबभिमानिनि वरुणे ॥ ४ ॥ अग्नौ प्रसिद्धभूताग्नि मानिनि ॥ ५ ॥ अंतरिक्षे हरे । स्वांतर्गतं सर्वं इच्छया क्षपयेदिति व्युत्पन्त्या हरोत्रांतरिक्षनामा । सर्वस्यांतरीक्षणहेतुनांतरिक्ष

योप्सुतिष्ठन्नद्भ्योंतरोयमापोनाविदुर्यस्यापःशरीरंयोपोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ४ ॥
योग्नौतिष्ठन्नग्नेरंतरोयमग्निर्नवेदयस्याग्निःशरीरंयोग्निमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ५ ॥
योंतरिक्षेतिष्ठन्नंतरिक्षादंतरोयमंतरिक्षंनवेदयस्यांतरिक्षंशरीरंयोंतरिक्षमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ६ ॥ योवायौतिष्ठन्वायोरंतरोयंवायुर्नवेदयस्यवायुःशरीरंयोवायुमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥७॥ योदिवितिष्ठन्दिवोंतरोयंद्यौर्नवेदयस्यद्यौःशरीरंयोदिवमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ८ ॥ यआदित्येतिष्ठन्नादित्यादंतरोयमादित्योनवेदयस्यादित्यःशरीरंयआदित्यमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ ९ ॥ योदिक्षुतिष्ठन्दिग्भ्योंतरोयंदिशोनाविदुर्यस्यादिशःशरीरंयोदिशोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १० ॥

नाम्नी वायुभार्याप्यंतरिक्षपदेन ग्राह्या ॥ ६ ॥ वायौ मुख्यवायौ ॥ ७ ॥ दिवि सरस्वत्यां उमा च ग्राह्या ॥ ८ ॥ आदित्ये

सूर्ये ॥ ९ ॥ दिक्षु दिगभिमानिषु ॥ १० ॥ चंद्रतारक इति द्वंद्वैकवद्भावः । क्रमात्तदभिमानिकामेंद्रयोरित्यर्थः ॥ ११ ॥
आकाशे आकाशाभिमानिनि विघ्नेशे ॥ १२ ॥ तामयति ग्लापयतीति व्युत्पत्त्या तमसि दुर्गायां ॥ १३ ॥ तेजसि चित्प्रकृतौ ॥



यश्चंद्रतारकेतिष्ठंश्चंद्रतारकादंतरोयंचंद्रतारकंनवेदयस्यचंद्रतारकंशरीरंयश्चंद्रतारकमंतरोय मयत्येषतआत्मांतर्याम्यमृतः ॥ ११ ॥ यआकाशेतिष्ठन्नाकाशादंतरोयमाकाशोनवेदयस्या काशःशरीरंयआकाशमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १२ ॥ यस्तमसितिष्ठंस्तम सोंतरोयंतमोनवेदयस्यतमःशरीरंयस्तमोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १३ ॥ यस्ते जसितिष्ठंस्तेजसोंतरोयंतेजोनवेदयस्यतेजःशरीरंयस्तेजोंतरोयमयत्येषतआत्मांतर्याम्यमृतः इत्यधिदैवतमथाधिभूतं ॥ १४ ॥ यःसर्वेषुभूतेषुतिष्ठन्सर्वेभ्योभूतेभ्योंतरोयंसर्वाणिभूतानिन विदुर्यस्यसर्वाणिभूतानिशरीरंयःसर्वाणिभूतान्यंतरोयमयत्येषतआत्मांतर्याम्यमृतइत्याधिभूत मथाध्यात्मं ॥ १५ ॥

इत्यधिदैवतं स्वस्वलोकस्थदेवताजातं तदंतर्यामिनिरूपणं कृतं । अथानंतरं भवनशब्दितोत्पत्त्यधिकारे स्थितत्वादधिभूतं सर्वजीवतदंतर्यामिनिरूपणं क्रियत इत्यर्थः ॥ ५ ॥ ७ ॥ १४ ॥ सर्वेषु भूतेषु मनुष्यादिजीवेषु । इत्यधिभूतं ॥ व्याख्या

तप्रायमेतत् ॥ अथानंतरमात्मानं जीवशरीरमधिकृत्य वर्तमानं इंद्रियाभिमानिजातं तदंतर्यामी निरूप्यत इत्यर्थः ॥ १५ ॥

यःप्राणेतिष्ठन्प्राणादंतरोयंप्राणोनवेदयस्यप्राणःशरीरंयःप्राणमंतरोयमयत्येषतआत्मांतर्याम्य
मृतः ॥ १६ ॥ योवाचितिष्ठन्वाचोंतरोयंवाङ्नवेदयस्यवाक्शरीरंयोवाचमंतरोयमयत्येषतआ
त्मांतर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषितिष्ठंश्चक्षुषोंतरोयंचक्षुर्नवेदयस्यचक्षुःशरीरंयश्चक्षुरंतरोयम
यत्येषतआत्मांतर्याम्यमृतः ॥ १८ ॥ यःश्रोत्रेतिष्ठंश्रोत्रादंतरोयंश्रोत्रंनवेदयस्यश्रोत्रंशरीरं
यःश्रोत्रमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ १९ ॥ योमनासितिष्ठन्मनसोंतरोयंमनोनवे
दयस्यमनःशरीरंयोमनोंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥ २० ॥ यस्त्वचितिष्ठंस्त्वचों
तरोयंत्वङ्नवेदयस्यत्वक्शरीरंयस्त्वचमंतरोयमयत्येषतआत्मांतर्याम्यमृतः ॥२१॥ योविज्ञाने
तिष्ठन्विज्ञानादंतरोयंविज्ञानंनवेदयस्यविज्ञानंशरीरंयोविज्ञानमंतरोयमयत्येषतआत्मांतर्या
म्यमृतः ॥ २२ ॥

प्राणे प्राणमानिनि ॥ १६ ॥ एवं वाचि चक्षुपीत्यादावपि तदभिमानिनो ग्राह्याः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ विज्ञाने

सर्वजीवाभिमानिनि चतुर्मुखे ॥ २२ ॥ रेतसि रेतोभिमानिनि । अत्र चेतनमात्रनियमनोक्तावप्यचेतननियमनस्य कैमुत्यसिद्धत्वाज्ज डांतर्यामी न पृथगुक्तः । अंतर्यामिणो महिमांतरमाह ॥ अदृष्ट इति । अदृष्टः चक्षुरगोचरः । द्रष्टा सर्वं साक्षात्कर्ता । अश्रुतः साकल्येन श्रवणागोचरः । श्रोता सर्वस्य स्वयंश्रोता । अमतः साकल्येन मननागोचरः । मंता मनोग्राहकः । अविज्ञातः विज्ञानलक्षणबुद्ध्यगोचरः । विज्ञाता विज्ञानलक्षणबुद्धिग्राहकः । अतोंतर्यामिणोन्यस्स्वातंत्र्येण द्रष्टा नास्ति । एवं विज्ञातेत्यंतं

योरेतसितिष्ठन्रेतसोंतरोयꣳरेतोनवेदयस्यरेतःशरीरंयोरेतोंतरोयमयत्येषतआत्मांतर्याम्यमृतोऽ
दृष्टोद्रष्टाऽश्रुतःश्रोताअमतोमंताअविज्ञातोविज्ञातानान्योतोस्तिद्रष्टानान्योतोस्तिश्रोताना
न्योतोस्तिमंतानान्योतोस्तिविज्ञातैषतआत्मांतर्याम्यमृतोतोन्यदार्तंततोहोद्दालकआरुणिरुपर
राम ॥ २३ ॥ इत्यंतर्यामिब्राह्मणं ॥ ५ ॥ ७ ॥ अथहवाचक्नव्युवाचब्राह्मणाभगवंतोहंताहमिमं
द्वौप्रश्नौप्रक्ष्यामितौचेन्मेवक्ष्यतिनवैजातुयुष्माकमिमंकश्चिद्ब्रह्मोद्यं जेतेति पृच्छगार्गीति ॥ १ ॥

योजना ध्येया । कुतोन्यस्य न स्वातंत्र्यमित्यतो दुःखित्वादिति भावेनाह ॥ अतोन्यदार्तमिति । अंतर्यामी त्वनार्त इति शेषः । अयं च ब्राह्मणः भगवद्विषयतया निर्णीतः सूत्रकृता अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् इत्यादौ ॥ ५ ॥ ७ ॥ २३ ॥
सप्तममंतर्यामिब्राह्मणं ॥ पूर्वब्राह्मणे वाचक्नवी जीवानामुत्तरोत्तराश्रितत्वं अंततः सर्वेषां भगवदाश्रितत्वं च पृष्टवती दत्तोत्तरा

अधुना चित्प्रकृतेस्सर्वाधारत्वं भगवदाश्रितत्वं प्रागपृष्टं प्रष्टुं ब्राह्मणानुज्ञार्थं तान् प्रति किंचिद्वाक्यमुक्तवतीत्याह वेदपुरुषः ॥ अथ हेति । उद्दालकोपरत्यनंतरं । वाचक्नवी वचक्नोरपत्यं गार्गी । ब्राह्मणानुवाच । किमिति । ह ब्राह्मणा भगवंतः पूज्याः । अहमिमं याज्ञवल्क्यं । पुनर्द्वौ प्रश्नौ प्रष्टव्यार्थौ प्रक्ष्यामि । हंत यदि भवतामनुमतिर्भवेदित्यर्थः । तौ चेत्प्रष्टव्यार्थौ । मे मह्यं । वक्ष्यति याज्ञवल्क्यः तर्हि जातु कदाचित् । युष्माकं मध्ये । कश्चित्कोपि । इमं याज्ञवल्क्यं । ब्रह्मोद्यं ब्रह्मवादिनं । संतं न वै नैव । जेता भवेदिति ब्राह्मणानुवाचेति पूर्वेणान्वयः । विजिगीषुकथात्वात्तस्यां च सभ्यानुज्ञया प्रष्टव्यमिति तदनुज्ञानार्थं तेषा

**साहोवाचाहंवैत्वायाज्ञवल्क्ययथाकाश्योवावैदेहोवोग्रपुत्रउज्ज्यंधनुरधिज्यंकृत्वाद्वौबाणवंतौ सपत्नातिव्याधिनौहस्तेकृत्वोपोत्तिष्ठेदेवमेवाहंत्वाद्वाभ्यांप्रश्नाभ्यामुपोदस्थांतौमेब्रूहीति पृच्छ गार्गीति ॥ २ ॥**

मुपकाराय तान् प्रत्येवमुक्तवतीति ज्ञेयं ॥ पृच्छ गार्गीतीति । ब्राह्मणा अनुजज्ञिर इति योज्यं ॥ ५ ॥ ८ ॥ १ ॥ सैवं ब्राह्मणै रनुज्ञाता गार्गी याज्ञवल्क्यमुवाच । अहं वै त्वा द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते । प्रष्टव्यार्थयोरनुत्तरत्वेन महत्त्वं तावद्दृष्टांतपूर्वकमाह ॥ यथेति । यथा उग्रपुत्रः क्रूरपुत्रः । काश्यः काश्यां भवो वा वैदेहो विदेहराजा वा । उज्ज्यं उद्गतज्यं धनुरधिज्यं अधिगतज्यं कृत्वा । बाणवंतौ अयोमयाग्रवंतौ । सपत्नातिव्याधिनौ शत्रुवधकरौ द्वौ शराविति शेषः ॥ हस्ते गृहीत्वोपोत्तिष्ठेदेवमेवाहं

त्वां द्वाभ्यां प्रश्नाभ्यां उपादस्थां लिङर्थे लुङ् उपतिष्ठेयं । त्वदाभिमुख्येन तिष्ठेयं । तौ मे ब्रूहीत्युवाचेत्यर्थः । आह याज्ञवल्क्यः पृच्छ गार्गीति ॥ ५ ॥ ८ ॥ २ ॥ सैवमुक्त्वा वाचक्नवी । याज्ञवल्क्येति संबोध्योवाच । दिवः द्युशब्दवाच्यात्स्वर्गलोकात् । ऊर्ध्वं उपरि । यदस्ति । पृथिव्या अवा(र्वा)गधस्ताद्यदस्ति । द्यावापृथिवी द्यावाभूम्योः । अंतरा मध्ये । यदस्ति । इमे द्यावा पृथिवी च । भूतं अतीतं च । भवच्च वर्तमानं च । भविष्यदागामि चेति यदाचक्षते ज्ञानिनः । तत्सर्वं कस्मिन् ओतं च प्रोतं

साहोवाचयदूर्ध्वंयाज्ञवल्क्यदिवोयद(वा)र्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्च भविष्यच्चेत्याचक्षतेकस्मिꣳस्तदोतंचप्रोतंचेति ॥३॥ सहोवाचयदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्या यदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशेतदोतंचप्रोतंचेति ॥ ४ ॥ सा होवाचनमस्तेस्तुयाज्ञवल्क्यर्योमएतंव्यवोचोथापरस्मैधारयस्वेति पृच्छगार्गीति ॥ ५ ॥

चेत्युवाचेत्यर्थः ॥३॥ स एवं पृष्टो याज्ञवल्क्य उवाच । किमुवाचेत्यत उक्तानुवादपूर्वमुत्तरमाहेत्याहोपनिषत् ॥ यदूर्ध्वमित्यादिना । यदाचक्षते तत्र आकाशे आ समंतात्काशमानत्वहेतुना आकाश शब्दिते श्रीतत्वे ओतं च प्रोतं चेत्युवाचेत्यन्वयः ॥ ४ ॥ सा लब्ध प्रथमप्रश्नपरिहारा । उवाच ह किल किमिति । हे याज्ञवल्क्य । यस्त्वं । मे मदीयं । एतं दुरुत्तरं प्रश्नार्थं । व्यवोचः विविच्योक्तवानसि । अतस्ते तुभ्यं नमोस्तु । अथेत्यर्थांतरे । अपरस्मै अन्यस्मै प्रश्नाय । धारयस्व मनो धत्स्वेत्युवाचेत्यर्थः । पृच्छ गार्गीत्याह

याज्ञवल्क्यः ॥ ५ ॥ आकाश शब्दितप्रकृतेस्सर्वाधारत्वमनुपचरितमिति वाचयितुं पूर्वपृष्टमेव पुनः पृच्छति ॥ साहेति ॥ ६ ॥ विदिताभिप्रायो याज्ञवल्क्यः यदूर्ध्वमित्यादिना उक्तानुवादपूर्वमनुपचरितमेव सर्वाधारत्वं प्रकृतेरित्याह आकाश एवेत्येवकारेण

साहोवाचयदूर्ध्वंयाज्ञवल्क्यदिवोयदवाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभ
विष्यच्चेत्याचक्षतेकस्मिंस्तदोतंचप्रोतंचेति ॥ ६ ॥ सहोवाचयदूर्ध्वंगार्गिदिवोयदवाक्पृथि
व्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षतआकाशएवतदोतंचप्रोतंचेतिकस्मि
न्नुखल्वाकाशओतश्चप्रोतश्चेति ॥ ७ ॥ सहोवाचैतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमन
ण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वनाकाशमसंगमरसमगंधमचक्षुष्कमश्रोत्रमवा
गमनोतेजस्कमप्राणममुखममात्रमगोत्रमजरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमन
परमनंतरमबाह्यंनतदश्नातिकिंचननतदश्नातिकश्चन ॥ ८ ॥

स्वाभिमतं लब्ध्वा वाचक्नवी द्वितीयं पृच्छति ॥ कस्मिन्न्विति ॥७॥ एवं पृष्टस्स याज्ञवल्क्यस्सर्वाधारप्रकृत्याधारत्वं हरेर्महिमोक्ति पूर्वमाह ॥ एतद्वा इत्यादिना खंडचतुष्टयेन । तत् प्रकृत्याश्रयत्वेन वक्ष्यमाणं । अक्षरं चतुर्विधनाशहीनतया अक्षरपदवाच्यं ब्रह्म एतत् एतल्लक्षणकं । ब्राह्मणा अभिवदंति वै । एतच्छब्दार्थं व्यनक्ति ॥ अस्थूलमित्यादिना । प्राकृतस्थूलसूक्ष्मह्रस्वदीर्घवैलक्षण्यादस्थू

लमित्याद्युच्यते। सूत्रभाष्यादौ तु अस्थूलादिपदैः स्थौल्यादिविरुद्धाणुत्वादिग्रह इत्यप्युक्तं। अलोहितमिति लोहिताद्युपलक्षितमाकृतरूपरहितं। एवमस्नेहमित्यपि ज्ञेयं। अच्छायं छायाशब्दिताविद्याहीनं। यद्वा व्याप्तत्वाच्छायाहीनं। अतमः आवरणहीनं। अवाय्वनाकाशमतेजस्कमिति पंचभूतास्पृष्टदेहं। असंगं अलेपं। अरसमित्यादेः प्राकृतरसगंधादिहीनमित्यर्थः। अतेजस्कं प्राकृतवर्चोहीनं। अप्राणं प्राकृतप्राणापानादिहीनं। अमुखं मुखोपलक्षितप्राकृतदेहहीनं। अमात्रं मितिहीनं। भिन्नांशशून्यं वा।

एतस्यवाअक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठत एतस्यवाअक्षरस्यप्रशासनेगार्गि द्यावापृथिव्यौविधृतेतिष्ठत एतस्यवाअक्षरस्यप्रशासनेगार्गिनिमेषामुहूर्ताअहोरात्राण्यर्धमासामासाऋतवःसंवत्सराइतिविधृतास्तिष्ठंत्येतस्यवाअक्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यः स्यंदंतेश्वेतेभ्यःपर्वतेभ्यःप्रतीच्योऽन्यायांयांचदिशमन्वेतस्यवाअक्षरस्यप्रशासनेगार्गिददतोमनुष्याःप्रशंसंति यजमानंदेवादर्वीपितरोन्वायत्ताः ॥ ९ ॥

स्वापेक्षया अंतरं बाह्यं नेत्यनंतरं अबाह्यं सर्वापेक्षया स्वयमेवांतरं बाह्यं चेत्यर्थः। तदक्षरं किंचन नाश्नाति उपजीवनार्थं नात्ति अशुभं नात्तीति वा। जीवाद्यं नात्तीति वार्थः। कश्चन कोपि तदक्षराख्यं ब्रह्म नाश्नाति नात्ति। स्वातंत्र्यान्न केनापि अद्यत इति भावः। तदाह सूत्रे। अन्यभावव्यावृत्तेश्चेति ॥५॥८॥८॥ प्रकृतिद्वारा सर्वाधारत्वं हरेरनायासेनैवेति भावेनाह याज्ञवल्क्यः ॥ एतस्य

वा इति। एतस्य प्रागुक्तगुणकस्य। प्रशासने वै प्रशब्दोक्तानन्याधीनासंकुचिताज्ञायां आज्ञानिमित्तमेव। सूर्याचंद्रमसौ सर्वपरिज्ञातृत्वाह्लादकत्वाभ्यां हेतुभ्यां क्रमात्सूर्याचंद्रपदोक्तौ ब्रह्मरुद्रौ। विधृतौ विशेषेण धृतौ तिष्ठतः। एवमग्रेपि। द्यावापृथिव्यौ दीप्यमानत्वपृथुत्वहेतुभ्यां क्रमात् द्यावापृथिवीशब्दिते श्रीभूमी। निमेषादिशब्दास्तदभिमानिपराः। इति शब्द आद्यर्थः। प्राच्यः प्राक् प्रवहंत्यः। अन्याः काश्चन। श्वेतेभ्यः श्वेतनामकेभ्यः। प्रतीच्यः प्रत्यक् पश्चिमसमुद्रं प्रति प्रवहंत्यः। अन्याः काश्चन। किंबहुना। यां यां दिशमनुस्यंदंते एतस्याक्षरस्य प्रशासन एव स्यंदंत इत्यर्थः। ददतो दानं कुर्वतः पुरुषान्। मनुष्याः प्रशंसंति

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यंतवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥

स्तुवंति। यजमानं यागकर्तारं। देवाः प्रशंसंतीत्यनुषंगः। उच्छिष्टपिंडावसरे दर्वीं पितरोन्वायत्ताः। अनुसृत्य स्थिताः। तदेतत्सर्वं एतस्याक्षरस्य प्रशासन एवेत्यर्थः। तदाह सूत्रे। सा च प्रशासनादिति। एतस्य वा इत्याद्यभ्यास आदरार्थः ॥५॥८॥९॥ एतदक्षरस्य ज्ञानमवश्यसंपाद्यमिति भावेन तदज्ञानज्ञानयोरनर्थपुमर्थावाह याज्ञवल्क्यः ॥ यो वा इति। जुहोति अग्नौ हविः प्रक्षिपति। यजते। देवतोद्देशेन हविर्ददाति। तपः कृच्छ्रचांद्रायणादि। तप्यते तपति करोतीति यावत्। बहूनि वर्षसहस्राणीत्येतज्जुहोतीत्या

दिपु त्रिष्वप्यन्वेति । अस्यानात्मविदः । तद्धोमादिकं । अंतवदेव नश्वरफलमेव भवति । प्रैति मृतो भवति । स कृपणः शोच्यः । अथेत्यर्थांतरे । ब्राह्मणो मुक्तो भवति ॥ ५ ॥ ८ ॥ १० ॥ महिमांतरमाह ॥ तद्वा एतदिति । अन्यैः साकल्येनादृष्टं । स्वयं च तथा सर्वद्रष्टृ । एवमग्रेपि । अमतं मनोगोचरं । स्वयं मंतृ मनोज्ञातृ । अविज्ञातं बुद्ध्यगोचरं । विज्ञातृ बुद्धिज्ञातृ । यद्वा अदृष्ट मित्यादिना साक्षात्कारश्रवणमननध्यानानां साकल्येनाविषय इत्युच्यते । अक्षरं दृष्टृश्रोत्रिति कथमुच्यते । द्रष्ट्रंतरादेर्भावादित्यत

तद्वाएतदक्षरंगार्ग्यदृष्टंद्रष्टृश्रुतꣳश्रोत्रमतंमंत्रविज्ञातंविज्ञातृनान्यदतोस्तिद्रष्टृनान्यदतोस्तिश्रो तृनान्यदतोस्तिमंतृनान्यदतोस्तिविज्ञात्रेतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेति ॥ ११ ॥ साहोवाचब्राह्मणाभगवंतस्तदेवबहुमन्यध्वंयदस्मान्नमस्कारेणमुच्यध्वं नवैजातुयुष्माकमिमंक श्चिद्ब्रह्मोद्यंजेतेतिततोहवाचक्नव्युपरराम ॥ १२ ॥ इत्यक्षरब्राह्मणं ॥ ५ ॥ ८ ॥

आह ॥ नान्यदिति । अतोक्षरादन्यत्स्वातंत्र्येण द्रष्टृ नास्तीत्यर्थः । एवमग्रेपि । यदर्थमियता ग्रंथेनाक्षरस्य महिमोक्तस्तदिदानी माह ॥ एतस्मिन्निति । तद्वा एतदित्यादिनोक्तमाहात्म्यवत्यक्षरे चतुर्विधनाशहीने विष्णावित्यर्थः । तदाह सूत्रे । अक्षरमंबरांत धृतेरिति ॥ ५ ॥ ८ ॥ ११ ॥ एवं लब्धप्रश्नद्वयोत्तरा सा वाचक्नवी । ब्राह्मणानुवाच । हे ब्राह्मणाः भगवंतः यूयमस्माद्याज्ञ वल्क्यात् । नमस्कारेण मुच्यध्वं मुक्ता भवत । मया यदुच्यते तदेव बहुमन्यध्वं । कुत इत्यत उक्तं नेति । युष्माकं मध्ये

कश्चिदिमं । ब्रह्मोद्यं ब्रह्मिष्ठं । याज्ञवल्क्यं । जातु कदापि । जेता नैवास्त्यत इति योजना ॥ ५ ॥ ८ ॥ १२ ॥ इत्यष्टममक्षर ब्राह्मणं ॥ ॥ अथ वाचक्नवीप्रश्नोत्तरानंतरं । शकलस्यापत्यं शाकल्यो विदग्धनामा । एनं याज्ञवल्क्यं देवाः कतीति पप्रच्छ । स याज्ञवल्क्यः । एतया वक्ष्यमाणया । निविदा निविच्छब्दितमंत्रेण । वैश्वदेवस्य शस्त्रस्य निविदियावंतो देवा उच्यंते तावतो

अथहैनंविदग्धःशाकल्यःपप्रच्छकतिदेवायाज्ञवल्क्येति सहैतयैवनिविदाप्रतिपेदेयावंतोवैश्व देवस्यनिविद्युच्यंते त्रयश्चत्रीचशतात्रयश्चत्रीचसहस्रेत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येति त्रयस्त्रिंशदित्योमितिहोवाच कत्येवदेवायाज्ञवल्क्येतिषडित्योमितिहोवाच कत्येवदेवाया ज्ञवल्क्येतित्रयइत्योमितिहोवाच कत्येवदेवायाज्ञवल्क्येतिद्वावित्योमितिहोवाच कत्येवदेवा याज्ञवल्क्येत्यध्यर्धइत्योमितिहोवाच कत्येवदेवायाज्ञवल्क्येत्येकइत्योमितिहोवाचकतमेतेत्र यश्चत्रीचशतात्रयश्चत्रीचसहस्रेति ॥ १ ॥

देवान् । प्रतिपेदे ज्ञातवान् । तां निविदं पठति ॥ त्रयश्चेति ॥ त्रयश्च त्री च शता त्रयस्त्रिंशच्छतानि । त्रयश्च त्री च सहस्रा । त्रयस्त्रिंशत्सहस्राणीत्यर्थः । अनेककोटिसंख्याकत्वेपि देवानां तेषु त्रयस्त्रिंशत्सहस्रसंख्याका देवाः अधिकास्तेषु च त्रयस्त्रिंशद्देवा अधिका इत्येवमुक्तं । याज्ञवल्क्योक्तमुत्तरमंगीकरोति । ओमित्युवाच ह शाकल्यः । त्रयस्त्रिंशत्सहस्रेत्युक्तदेवेषूत्तमान्पृच्छति

शाकल्यः ॥ कत्येवेति । उत्तरमाह ॥ त्रयस्त्रिंशदिति । एवमग्रेपि प्रश्नपरिहारार्थौ ज्ञेयौ । ओमित्यभ्युपगमश्च ज्ञेयः । आधिकतया आ ऋद्धोऽध्यर्धः । संख्येयस्वरूपाणि पृच्छति ॥ कतम इति । त्रयस्त्रिंशत्संख्याकास्त्रयस्त्रिंशत्सहस्रसंख्याकाश्च देवाः कतमे कीदृशा इति सर्वे समाः किंवा न्यूनाधिकभावमापन्ना इति प्रश्नार्थः ॥ ५ ॥ ९ ॥ १ ॥ स एवं पृष्टो याज्ञवल्क्यः त्रयस्त्रिंशदेव देवाः । तु विशिष्टाः । एषां त्रयस्त्रिंशद्देवानां । एते त्रयस्त्रिंशत्सहस्रसंख्याका देवाः । महिमानः महिना माहात्म्येन

सहोवाचमहिमानएवैषामेतेत्रयस्त्रिꣳशत्त्वेवदेवाइतिकतमेतेत्रयस्त्रिꣳशदित्यष्टौवसवएकादशरुद्राद्वादशादित्यास्तएकत्रिꣳशदिंद्रश्चैवप्रजापतिश्चत्रयस्त्रिꣳशाइति ॥ २ ॥ कतमेवसवइत्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचादित्यश्चद्यौश्चचंद्रमाश्चनक्षत्राणिचैतेवसवएतेषुहीदꣳवसुसर्वंहितमितितस्माद्वसवइति ॥ ३ ॥

मानः परिमिताः । न्यूनाः अतः परिवारभूता एवेति यावत् इत्युवाचेत्यर्थः । तु शब्देन विशेषितान्देवान्पृच्छति ॥ कतमे त इति । इंद्रश्च प्रजापतिश्च त्रयस्त्रिंशौ त्रयस्त्रिंशत्संख्यापूरकौ इत्युवाच याज्ञवल्क्य इत्यर्थः ॥ ५ ॥ ९ ॥ २ ॥ अष्टानां स्वरूपं पृच्छति ॥ कतम इति । अग्रं विष्णुं नयतीत्यग्निः सुपर्णः । पृथिवी सौपर्णी । वायुः सूत्रात्मा मुख्यवायुः । अंतरिक्षं तत्पत्नी श्रद्धानाम्नी । आदित्यः शिवः । द्यौः तद्भार्योमादेवी । चंद्रमाः कामः । कामस्यानिरुद्धपितृत्वेन तदनुविष्टत्वादनिरुद्धः पृथङ्

नोक्तः । नक्षत्राणींद्रः रूपबाहुल्याद्बहुवचनं । नाम्नां निरुक्तिर्भाष्ये ध्येया । एते वसव इति कुत एषां वसुत्वमित्यत आह ॥ एतेषु हीति । वसतीति वसु जगत् इदं सर्वं वसु । एतेष्वष्टसु देवेषु हितं निहितमिति । हि यतस्तस्माद्वसव इति । वस निवास इत्यस्मात् अंतर्णीतण्यर्थादु प्रत्यये वासयंति जगदिति वसव इत्युक्तं भवति ॥ ५ ॥ ९ ॥ ३ ॥ पुरुषे जीवे । वर्तमानाः प्राणाः । ज्ञानेंद्रिय कर्मेंद्रियप्रेरकाः । इमे प्रसिद्धाः । दक्षाग्निप्रमुखा वायुपुत्राः दश । आत्मा बुद्धिमानी बृहस्पतिः एकादशः । शिवान्यरुद्राणामपि

कतमेरुद्राइतिदशेमेपुरुषेप्राणाआत्मैकादशस्तेयदास्माच्छरीरान्मर्त्यादुत्क्रामंत्यथरोदयंतितद्य द्रोदयंतितस्माद्रुद्राइति ॥ ४ ॥ कतमआदित्याइतिद्वादशवैमासाःसंवत्सरस्यैतआदित्याएते हीदꣳसर्वमाददानायंति तेयदिदꣳसर्वमाददानायंतितस्मादादित्याइति ॥ ५ ॥

प्राणाविष्टत्वेन दक्षादिग्रहणेन गृहीतत्वान्न पृथगुक्तिः । कथं रुद्रत्वमेषामित्यतो निर्वक्ति ॥ तइत्यादिना । ते प्राणाः आत्मा च । मर्त्यात् म्रियमाणात् शरीरात् । अथ तदा म्रियमाणसंबंधिनो जनान् ते प्राणाद्या रोदयंति । यद्रोदयंति तत्तस्माद्रुद्रा इत्युच्यंत इत्यर्थः । रुदिर् अश्रुविमोचन इत्यतोंतर्णीतण्यर्थाद्रक्प्रत्ययेरुद्रइति सिद्धेरिति भावः ॥५॥९॥४॥ संवत्सरस्य संवत्सरात्मककालस्य द्वादश मासा वै प्रसिद्धाः । एते द्वादशमासाभिमानिनो धात्रर्यमविवस्वत्पूषत्वष्टृसवितृभगपर्जन्यवरुणमित्रयमचंद्रशब्दिता आदित्याः । तेष्वादित्य शब्दं निर्वक्ति ॥ एतइति । एते द्वादशादित्याः इदं सर्वं प्राणिनामायुरादिकं आददानाःयंति गच्छंति । ते यद्यस्मादिदं सर्वमाददाना

यंति तस्मादादित्या इत्युच्यंत इत्यर्थः। आङ्पूर्वाभ्यां दाणू दाने या प्रापण इत्याभ्यां ड प्रत्यये ददातेरिदादेशे चादित्य इति रूपसिद्धेरिति भावः। अश्विनिर्ऋतिकुबेरविनायकानामुत्तमत्वेप्यर्यमांशधातृविधातृसूर्येषु विशेषावेशान्न पृथगुक्तिः ॥ ५ ॥ ९ ॥५॥ अशनिरिति वज्राभिमानी वायुजेंद्रः पशवः पश्वभिमानी जयंत इत्यर्थः। अपकृष्टोपि जयंतो मन्वावेशात्त्रयस्त्रिंशत्सूक्तः ॥ ६ ॥ त्रयस्त्रिंशत्सु षडुत्तमा उक्तास्तान्पृच्छति ॥ कतमे षडिति। पप्रच्छेत्यनुषंगः। उत्तरमाह ॥ अग्निश्चेति। अग्न्यादिशब्दिता

कतमइंद्रःकतमःप्रजापतिरितिस्तनयित्नुरेवेंद्रोयज्ञःप्रजापतिरिति कतमःस्तनयित्नुरित्यशनि रितिकतमोयज्ञइतिपशवइति ॥ ६ ॥ कतमेषडित्यग्निश्चपृथिवीचवायुश्चांतरिक्षंचादित्यश्चद्यौ श्चैतेषडेतेषुहीदꣳसर्वंषडिति ॥७॥ कतमेतेत्रयोदेवाइतीमएवत्रयोलोकाएतेषुहीमेसर्वेदेवाइति कतमौतौद्वौदेवावित्यन्नंचैवप्राणश्चेति ॥ ८ ॥

वसुत्वेनोक्ता एव ग्राह्याः। एतेषां षण्णां त्रयस्त्रिंशत्सु वरत्वे हेतुमाह ॥ एतेषु हीति। इदं षड् षट्कं ज्ञानविज्ञानैश्वर्यवीर्यश्रीयशो रूपगुणषट्कं। एतेषु गरुडादिषु सर्वं संपूर्णं हि यतोतः एते षडुत्तमा इत्यर्थः ॥ ७ ॥ षट्सूत्तमांस्त्रीन्पृच्छति ॥ कतमे त इति। इमे एव प्राक् अग्निवाय्वादित्यशब्दिता वींद्रवायुमहेश्वराः स्वस्वभार्याणामाश्रयत्वाद्वा ज्ञानरूपत्वाद्वा लोका इत्युक्तास्त्रय इत्यर्थः। कथमेषां षड्भ्योप्युत्तमत्वमित्यत आह ॥ एतेषु हीमे सर्वे देवा इति। आयत्ता इति योज्यं। इति यतोत उत्तमा इत्यर्थः। ब्रह्म

शेषयोर्वायुरुद्रपदसाम्यात्तयोः पृथगनुक्तिः । त्रिष्वपि द्वौ वरावित्युक्तं प्राक् । तौ पृच्छति ॥ **कतमाविति** । अन्नं प्रागंतरिक्ष पदोक्ता श्रद्धा प्राणस्तत्पतिर्मुख्यवायुः ॥ ५ ॥ ९ ॥ ८ ॥ प्राक् तयोरध्यर्धोऽधिक इत्युक्तं तं पृच्छति ॥ **कतम इति** । यः सर्व लोकाश्रयतया पवते अयं वायुरध्यर्ध इति । तदाहुर्वायोरध्यर्धत्वविषयेनुत्पत्तिमाहुः । किमिति अयं वायुः यद्यस्मादेक इवैव पवते अथ तस्मात् । कथमध्यर्धः । अर्धेनाधिको ह्यध्यर्ध इति वाच्यत्वादिति उत्तरमाह ॥ **यदास्मिन्निति** । यद्यस्मादस्मिन्वायौ । इदं सर्वं बुद्धिस्थं ज्ञानादिगुणजातं अध्यार्ध्नोत् आधिक्येन ऋद्धमभूत् । तेन हेतुनाध्यर्ध इत्येव न त्वर्धेनाधिकोऽध्यर्ध इति । यद्वा

कतमोऽध्यर्धइतियोयंपवतइतितदाहुर्यदयमेकइवैवपवतेथकथमध्यर्धइतियदास्मिन्निदꣳसर्वमध्या
र्ध्नोत्तेनाध्यर्धइतिकतमएकोदेवइतिप्राणइतिसब्रह्मत्यादित्याचक्षते ॥ ९ ॥

कथमध्यर्ध इति प्रश्नस्य गुणसमृद्धिमत्त्वादध्यर्ध इत्युत्तरे कृते सति कथमस्य गुणसमृद्धत्वमित्यतस्तदाहुरित्यादि वाक्यं । तत् गुणसमृद्धतयोत्तमत्वमाहुः । यद्यस्मादयं वायुरेक इवैव मुख्य इव स्वतंत्र इवैवेति वा पवते अतो हेतोरध्यर्ध इत्यर्थः । वायोरपि विष्णोरुत्तमस्य सत्त्वादेक इवेत्युक्तं द्वयोरेकोऽधिक इत्युक्तं तं पृच्छति ॥ **कतम एक इति** ॥ **प्राण इतीति** ॥ आ समंतात्प्रकृष्टः ण आनंदो यस्य स प्राणो विष्णुः एक इत्युच्यते । अन्यस्य तादृशस्याभावादुत्तम इत्यर्थः । श्रीस्तदत्यंतांतरंगत्वान्न पृथगुक्ता कुतस्तस्योत्तमतेत्यत आह ॥ **स इति** । स प्राणनामा विष्णुः ब्रह्म गुणपूर्णः यथा श्रुत्यादावुदितस्तथैवाविकारेणानंतकालेषु

याति वर्तत इति त्यत् इत्याचक्षतं ज्ञानिन इत्यर्थः ॥ ५ ॥ ९ ॥ ९ ॥ प्रष्टव्यार्थज्ञानिनः फलोक्तिपूर्वं प्रष्टव्यं पृच्छति ॥ पृथिव्येवेति । एव शब्दः प्रसिद्धिपरः । प्रसिद्धा पृथिव्येव । यस्य पुरुषस्यायतनं यत्पुरुषाभिमन्यमाना यस्य पुरुषस्याग्निः । अत्तीति व्युत्पत्त्या अग्निनाम्नी अग्निस्था रमा । लोकः मनोवृत्तिरूपबाह्यप्रकाशहेतुः । यस्य पुरुषस्य मनः वांग्ररूपतया मनोनाम्नी

पृथिव्येवयस्यायतनमग्निर्लोको मनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणंसवैवेदिना
स्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषंसर्वस्यात्मनःपरायणंयमात्थयएवाय॑शारीरःपुरुषःसएष वदै
वशाकल्य तस्यकादेवतेत्यमृतमितिहोवाच ॥ १० ॥ कामएवयस्यायतन॑हृदयंलोको मनो
ज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायण॑सवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुष॑
सर्वस्यात्मनःपरायणंयमात्थयएवायंकाममयःपुरुषःसएषवदैवशाकल्यतस्यकादेवतेतिस्त्रियइ
तिहोवाच ॥ ११ ॥

मनस्था रमा ज्योतिः स्वरूपज्ञप्त्यभिव्यक्तिहेतुः । तं सर्वस्यात्मनो जीवजातस्य परायणमुत्तमाश्रयं पुरुषं यो वै य एत्राधिकारी विद्याज्जानीयात्। स वै स एव वेदिता ज्ञानी स्यात्तं पुरुषं हे याज्ञवल्क्य वेत्थ किमिति पप्रच्छेति योज्यं। उत्तरमाह याज्ञवल्क्यः । वेद वा इति । यमात्थ तं पुरुषं सर्वस्यात्मानं परायणमहं वेद वै जानाम्येव । तमाह य एवायं शारीरः सर्वजीवाभिमानी पुरुषः

स्वायंभुवो मनुः स एष त्वया पृष्टः पुनः पृच्छेत्याह याज्ञवल्क्यः ॥ वदैव शाकल्येति । पृच्छैवेत्यर्थः । पृच्छति तस्य शारीरपुरुषस्य मनोः का देवता नियमनादिकर्त्रीति अमृतं वायुरिति होवाच ॥ ५ ॥ ९ ॥ १० ॥ एवमग्रेतनखंडसप्तकस्यापि योजना ध्येया । काम एव मनोवृत्तिविशेषः स्त्रीरागः । हृदयं हृद्ग्रयनाद्धृदयनाम्नी बुद्धिस्था रमा । लोकः बाह्यप्रकाशहेतुः ।

रूपाण्येवयस्यायतनंचक्षुर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदिता स्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवासावादित्येपुरुषःसएषवदै वशाकल्यतस्यकादेवतेतिसत्यमितिहोवाच ॥ १२ ॥ आकाशएवयस्यायतनꣳश्रोत्रंलोकोमनो ज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳ सर्वस्यात्मनःपरायणंयमात्थयएवायꣳश्रोत्रःप्रातिश्रुत्कःपुरुषःसएषवदैवशाकल्यतस्यकादेवते तिदिशइतिहोवाच ॥ १३ ॥

यस्येत्यनुषज्यते मनोनाम्नी ज्योतिः । स्वरूपज्ञानाविर्भावहेतुः । एवमग्रेपि । काममयः कामाभिमानी प्रद्युम्नः । स्त्रियः श्री सरस्वत्युमाः ॥११॥ रूपाणि शुक्लादीनि । दृष्टिहेतुत्वहेतुना चक्षुर्नाम्नी चक्षुस्था रमा। आदित्ये पुरुषः रुद्रः। सत्यं चतुर्मुखः॥१२॥ आकाश एव भूताकाश एव । श्रोत्रं श्रवणहेतुतया श्रोत्रनाम्नी श्रोत्रस्था रमा । श्रोत्रः श्रोत्रगतः । प्रतिशृणोतीति प्रातिश्रुत्कः

पुरुषः । चंद्रः । दिशो गरुडशेषदक्षाः ॥ ५ ॥ ९ ॥ १३ ॥ तम एवांधकार एव । अत्रोत्तरखंडद्वये च प्रागुक्तनिरुक्त्या बुद्धिस्था रमैव हृदयपदार्थः । सर्वत्र मनः शब्देनापि रमैव । छायामयः पुरुषः छायाभिमानी निर्ऋतिः । मृत्युर्यमः ॥ १४ ॥ रूपाण्येव

तमएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंछायामयःपुरुषःसएषवदेवशाकल्यतस्यकादेवतेतिमृत्युरितिहोवाच ॥१४॥ रूपाण्येवयस्यायतनंचक्षुर्लोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायमादर्शेपुरुषःसएषवदेवशाकल्यतस्यकादेवतेत्यसुरितिहोवाच ॥१५॥ आपएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदितास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायमप्सुपुरुषःसएषवदेवशाकल्यतस्यकादेवतेतिवरुणइतिहोवाच ॥ १६ ॥

प्रसिद्धानि । चक्षुश्चक्षुस्था रमा । आदर्शे दर्पणे । पुरुषः तदभिमानी सूर्यः । असुः अंतर्गतो वायुः ॥ १५ ॥ आपो जडभूताः ।

अप्सु पुरुषः पर्जन्यः । वरुणः प्रसिद्धः ॥५॥९॥१६॥ रेत एव प्रसिद्धं । पुत्रमयः पुरुषः पुत्राभिमानी शक्रः । प्रजापतिः प्रजापालको ब्रह्मा ॥१७॥ एवमतिप्रश्नान् कुर्वंतं प्रति शाकल्येति संबोध्योवाच याज्ञवल्क्यः । किमिति तदाह ॥ त्वां स्विदिति । इमे ब्राह्मणाः । त्वां स्वित् त्वां किल । अंगारावक्रयणं । अक्रता ३ अकृपत अकुर्वन् । प्लुतिर्दयाविशेषद्योतिका । अरे शाकल्यांगारविक्षेपहेतुभूतकाष्ठमेते अकुर्वन् त्वं न जानासि । ब्रह्मसंघप्रेरितस्त्वं मदभिमुखो भूत्वा बहुप्रश्नान् पृच्छसि । मत्कोपेन तव क्षेमः कथं

रेतएवयस्यायतनꣳहृदयंलोकोमनोज्योतिर्योवैतंपुरुषंविद्यात्सर्वस्यात्मनःपरायणꣳसवैवेदि
तास्याद्याज्ञवल्क्यवेदवाअहंतंपुरुषꣳसर्वस्यात्मनःपरायणंयमात्थयएवायंपुत्रमयःपुरुषस्सएष
वदैवशाकल्यतस्यकादेवतेतिप्रजापतिरितिहोवाच ॥ १७ ॥ शाकल्येतिहोवाचयाज्ञवल्क्य
स्त्वाꣳस्विदिमेब्राह्मणाअंगारावक्रयणमक्रता३इति ॥ १८ ॥ याज्ञवल्क्येतिहोवाचशाकल्यो
यदिदंकुरुपांचालानांब्राह्मणानत्यवादीःकिंब्रह्मविद्वानितिदिशोवेदसदेवाःसप्रतिष्ठाइति ॥ १९ ॥

भविष्यति । अलमियतेति दयया तं प्रत्युवाचेत्यर्थः । अंगारा अवक्रियंते इतस्ततो विक्षिप्यंते येन स काष्ठविशेषोंगारावक्रयणशब्दार्थः ॥१८॥ तद्वचनमगणयन् पुनस्तज्जयेच्छया पृच्छति ॥ याज्ञवल्क्येति । कुरुपांचालानां संबंधिनस्तद्देशीयानिति यावत् । ब्राह्मणानति अतिक्रम्य । अवज्ञायेति यावत् । मामंगारावक्रयणमक्रतेति यदवादीः । तत्किं ब्रह्म विद्वानिति बुद्ध्या अवादीरिति

शाकल्येन पृष्टो याज्ञवल्क्यः । सत्यं अरे अहं ब्रह्म विद्वानेवेति भावेनाह ॥ दिशो वेद सदेवाः स प्रतिष्ठाइति । अहं दिशः सदेवाः अभिमानिदेवतासहिताः । सप्रतिष्ठाः साधाराः वेद ॥ १९ ॥ एवं याज्ञवल्क्येनोक्ते पृच्छति शाकल्यः ॥ यदिति । यत् यदि । सदेवा दिशः वेत्थ तर्हि । अस्यां प्राच्यां दिशि । किं देवतासि का देवता अधिष्ठात्री ज्ञाता येन स किं देवतासि । एतद्दिगधिष्ठात्रीं कां देवतां ज्ञात्वा वर्तसे तद्वदेति प्रश्नार्थः । उत्तरमाह ॥ आदित्यदेवत इति । आदित्यो देवता प्राक् दिग

यद्दिशोवेत्थसदेवाःसप्रतिष्ठाःकिंदेवतोस्यांप्राच्यांदिश्यसीतिआदित्यदेवतइति सआदित्यः
कस्मिन्प्रतिष्ठितइति चक्षुषीतिकस्मिन्नुचक्षुःप्रतिष्ठितमिति रूपेष्विति चक्षुषाहिरूपाणिपश्य
तिकस्मिन्नुरूपाणिप्रतिष्ठितानीतिहृदयइतिहोवाचहृदयेनहिरूपाणिजानातिहृदयेह्येवरूपाणि
प्रतिष्ठितानिभवंतीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥

धिष्ठात्री ज्ञाता येन स आदित्यदेवतोऽस्मीति शेषः । आदित्यं प्राक् दिगधिष्ठातारं जानामीत्यर्थः । दिशः सदेवाः सप्रतिष्ठा वेदेत्यत्र सदेव इत्यंशः पृष्टः उत्तरितश्च । अधुना सप्रतिष्ठ इत्यंशं पृच्छति ॥ स आदित्यः कस्मिन्प्रतिष्ठित इति । तस्योत्तरं ॥ चक्षुषीति । दृष्टिशक्तिप्रेरके चक्षुर्मानिनि स्वायंभुवमनाविति । कस्मिन् चक्षुः प्रतिष्ठितमित्यस्योत्तरं ॥ रूपेष्विति । रूपाभिमानींद्रे तदुपपादयति ॥ चक्षुषेति । स्वायंभुवमनुना तत्प्रसादेन रूपाणि पश्यतीत्यर्थः । रूपाणि रूपाभिमानींद्रः

कस्मिन्नित्यस्योत्तरं ॥ हृदय इति । बुद्धिमान्युमायां प्रतिष्ठितानीत्येतदुपपादयति ॥ हृदयेनेति । निगमयति ॥ हृदये ह्येवेति । तदुक्तमभ्युपैति ॥ एवमेवैतदिति ॥ ५ ॥ ९ ॥ २० ॥ एवमुत्तरखंडचतुष्टयेपि प्रश्नोत्तरपरवाक्ययोजना ध्येया । यज्ञे

किंदेवतोऽस्यांदक्षिणायांदिश्यसीतियमदेवतइतिसयमःकस्मिन्प्रतिष्ठितइतियज्ञइतिकस्मिन्नुयज्ञःप्रतिष्ठितइतिदक्षिणायामितिकस्मिन्नुदक्षिणाप्रतिष्ठितेतिश्रद्धायामितियदाह्येवश्रद्धत्तेऽथदक्षिणांददातिश्रद्धायांह्येवदक्षिणाप्रतिष्ठितेतिकस्मिन्नुश्रद्धाप्रतिष्ठितेतिहृदयइतिहोवाचहृदयेनहिश्रद्धांजानातिहृदयेह्येवश्रद्धाप्रतिष्ठिताभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥ किंदेवतोऽस्यांप्रतीच्यांदिश्यसीतिवरुणदेवतइतिसवरुणःकस्मिन्प्रतिष्ठितइत्याप्स्वितिकस्मिन्न्वापःप्रतिष्ठिताइतिरेतसीतिकस्मिन्नुरेतःप्रतिष्ठितमितिहृदयइतितस्मादपिप्रतिरूपंजातमाहुर्हृदयादिवसृप्तोहृदयादिवनिर्मितइतिहृदयेह्येवरेतःप्रतिष्ठितंभवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

यज्ञमानिन्यनिरुद्धे । दक्षिणायां दक्षिणाभिमानिन्यां रतिदेव्यां । श्रद्धायां श्रद्धामानिनि कामे । तदुपपादकं ॥ यदा ह्ीत्यादि । हृदय इतीति प्राग्वत् । बुद्धिमान्युमायामित्यर्थः । एवमग्रेपि ॥ २१ ॥ अप्सु अवभिमानिनि चंद्रे । रेतसि रेतोमानिबृहस्पतौ । हृदये उमायां । तस्मादपि तस्मादेव । जातं । प्रतिरूपं पुत्रमाहुर्वैदिकाः । किमिति किं पितृहृदयादिवायं पुत्रः सृप्तः विनिस्सृतः । हृदयादिव निर्मित इत्याहुरित्यन्वयः । यत एवमतो हृदय एव रेतः प्रतिष्ठितमित्यर्थः । हृदये देवे रेतो देवः प्रतिष्ठित इत्यर्थः॥२२॥

दीक्षायां दीक्षामानिन्यां शतरूपायां । सत्ये स्वायंभुवमनौ । तस्मादपि तस्मादेव । दीक्षितं पुरुषं सत्यं वदेत्याहुः । तस्मात्सत्ये ह्येव दीक्षा प्रतिष्ठितेति निगमनं । हृदये उमायां ॥ २३ ॥ ध्रुवायां प्राचीदक्षिणामध्यमायां दिशि । वाचि वागभिमानिबृहस्पतौ ।

किंदेवतोस्यामुदीच्यांदिश्यसीतिसोमदेवतइतिससोमःकस्मिन्प्रतिष्ठितइतिदीक्षायामितिक
स्मिन्नुदीक्षाप्रतिष्ठितेतिसत्यइतितस्मादपिदीक्षितमाहुःसत्यंवदेतिसत्येह्येवदीक्षाप्रतिष्ठिते
तिकस्मिन्नुसत्यंप्रतिष्ठितमितिहृदयइतिहोवाचहृदयेनहिसत्यंजानातिहृदयेह्येवसत्यंप्रतिष्ठितं
भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२३॥ किंदेवतोस्यांध्रुवायांदिश्यसीत्यग्निदेवतइतिसोग्निःकस्मि
न्नुप्रतिष्ठितइतिवाचीतिकस्मिन्नुवाक्प्रतिष्ठितेतिहृदयइतिकस्मिन्नुहृदयंप्रतिष्ठितमिति ॥ २४ ॥
अहल्लिकेतिहोवाचयाज्ञवल्क्योयत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानोवैनद
द्युर्वयाꣳसिवैनद्विमथ्नीरन्निति ॥ २५ ॥

हृदये उमायां ॥ २४ ॥ कस्मिन्नु हृदयं प्रतिष्ठितमित्युमाया अप्याश्रयं पृष्टे याज्ञवल्क्यः आक्षिपति ॥ अहल्लिकेति । अहज्ज्ञानं लीनमस्येति अहर्लीकः । स एवाहल्लिकः । हे अज्ञेत्यर्थः । अहल्लिकेति संबोध्योवाच । कुतस्तस्याज्ञत्वमित्यत उच्यते । यत्र यत् । एतत् हृदयं । हृदयमानिनीमुमां । अस्मत् अहंकाराभिमानिरुद्रात् अन्यत्र । मन्यासै मन्यसे जानासि । प्रसिद्धमपि

रुद्राश्रितत्वमज्ञात्वा त्वं कस्मिन् प्रतिष्ठितामिति पृच्छसि। अतोऽन्नेति। तस्या रुद्रानाश्रितत्वं बाधकमाह ॥ यद्धीति। यत् यदि। एतत् हृदयं। हृदयमानिनी उमा। अस्मत् अहंकाराभिमानिरुद्रात् अन्यत्र स्यात्। तदनाश्रिता स्यादिति यावत्। तर्हि बुद्धिमान्युमायाः देहाभिरक्षणोपयोगिबुद्धिशक्त्यभावप्रसंगेनैतच्छरीरं श्वानो वाऽद्युः। वयांसि वैनच्छरीरं विमथ्नीरन् विकर्षेरन्। कस्यापि

कस्मिन्नुत्वंचात्माचप्रतिष्ठितौस्त(स्थ)इति प्राणइति कस्मिन्नुप्राणःप्रतिष्ठितइत्यपानइति कस्मिन्न्वपानःप्रतिष्ठितइतिव्यानइति कस्मिन्नुव्यानःप्रतिष्ठितइत्युदानइति कस्मिन्नूदानःप्रतिष्ठितइतिसमानइति सएषनेतिनेत्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्यतेऽसितोनव्यथतेनरिष्य इत्येतान्यष्टावायतनान्यष्टौलोकाअष्टौदेवाअष्टौपुरुषाःसयस्तान्पुरुषान्निरुह्यप्रत्युह्यात्यक्रामत्तंत्वौपनिषदंपुरुषंपृच्छामितंचेन्मेनविवक्ष्यसिमूर्धातेविपतिष्यतीतितꣳहनमेनेशाकल्यस्तस्यहमूर्धाविपपातापिहास्यपरिमोषिणोस्थीन्यपजहुरन्यन्मन्यमानाः ॥ २६ ॥

जीवनं न स्यादिति भावः। इत्युवाच याज्ञवल्क्य इतीति पदान्वयः ॥ ५ ॥ ९ ॥ २५ ॥ एवमाक्षेपपूर्वमुक्तोपि शाकल्यः रुद्रोमयोरप्याश्रयं पृच्छति ॥ कस्मिन्निति। त्वं चाहं चेति रूपवानहंकाराभिमानी रुद्रः। आत्मेत्युक्तबुद्धिमानिन्युमा चेत्येतौ द्वौ कस्मिन्प्रतिष्ठितौ (स्त)स्थ इति पप्रच्छेत्यर्थः। प्राणे प्राणनामके शेष इत्युवाच याज्ञवल्क्य इत्यर्थः। अपाने अपाननाम्न्यां भारत्यां।

व्याने व्यानाभिधे वायौ। उदाने उदाननाम्न्यां च श्रीदेव्यां। समाने समाननामके हरौ। कुतः समाननाम्नो हरेः सर्वाधारत्वमित्यत आह ॥ स एष इति। स कतम एको देवः प्राण इतीत्युक्तः। स एषः समाननामा आत्मा विष्णुः इति न दुःखास्पृष्टरमावन्न भवति। इति न दुःखस्पृष्टब्रह्मादिवच्च नेत्यर्थः। यद्वा। इति न बद्धब्रह्मादिवन्न। इति न रमादिमुक्तवच्च नेत्यर्थः। तत्र हेतुमाह ॥ अगृह्य इत्यादि। अगृह्यः साकल्येन ग्रहणायोग्यः। कुत एवमित्यतः साकल्येन गृह्यत इत्यत्र मानाभावादित्याह ॥ न हीति। साकल्येन गृह्यत इत्यत्र प्रमाणं नास्तीत्यर्थः। अशीर्यः कारणात् कालतोपि वा विशरणशून्यः। कुत इत्यतो ॥ न हीति। पूर्ववदर्थः। एवमग्रेपि। असंगः सर्वत्र सन्नपि तत्कृतदोषलेपशून्यः। न हीति प्राग्वत्। असितः न कदाचिद्बद्धः। न व्यथते दुःखीभवतीत्यत्र प्रमाणं न हीत्यर्थः ॥ नरिष्य इतीति। कालत्रयेपि नाशहीन इत्यर्थः। अत्र न हि रिष्यत इत्यपि वाक्यं ग्राह्यं प्रकरणबलात्। एवं शाकल्यप्रश्नस्य सर्वस्योत्तरमुक्त्वा सामर्षो याज्ञवल्क्यः शाकल्यं स्वयं पृच्छति ॥ एतानीति। एतानि पृथिव्येव यस्यायतनमित्यादिनोक्तानि पृथिव्यादीनि अष्टावायतनानि। अग्निर्लोक इत्यादिना उक्ता अष्टौ लोकाः। अमृतमिति होवाचेत्यादिनोक्ता अष्टौ देवाः। शारीरः पुरुष इत्यादिनोक्ता अष्टौ पुरुषाः। स प्रसिद्धो। यस्तान् पुरुषान्। आयतनलोकदेवानपीत्यापि ग्राह्यं। निरूह्य पुरुषाद्यपेक्षां विनैव निरूह्य निर्गत्य। स्थितेनेति शेषः। बहिष्ठरूपेणेति यावत्। उद्ध्वा प्रत्यूह्य। प्रतिप्रति तत्तदंतर्यामिरूपेणांश उद्ध्वा। अत्यक्रामत् अतिक्रांतवान्। तं औपनिषदं उपनिषदेकगम्यं। पुरुषं त्वा त्वां पृच्छामि। तं पुरुषं चेद्यदि। मे मह्यं। त्वं त्वि विशेषेण न वक्ष्यसि। तर्हि ते मूर्धा शिरः अविपतिष्यतीत्युवाच याज्ञवल्क्यः। शाकल्यस्तं याज्ञवल्क्यपृष्टं भगवंतं

न मेने नाज्ञासीत् ह किल। तस्य मूर्धा विपपात ह। न केवलमयं मृतः किंतु अस्य शाकल्यस्य। अस्थीन्यपि परिमोषिणस्तेना

अथहोवाचब्राह्मणाभगवंतोयोवःकामयतेसमापृच्छतुसर्वेवामापृच्छतयोवःकामयतेतंवःपृच्छा
मिसर्वान्वावःपृच्छामीतितेहब्राह्मणानदधृषुः ॥२७॥ तान्हैतैःश्लोकैःपप्रच्छ ॥ यथावृक्षोवन
स्पतिस्तथैवपुरुषोमृषा ॥ तस्यलोमानिपर्णानित्वगस्योत्पाटिकाबहिः ॥ त्वचएवास्यरुधिरंप्रस्यं
दित्वचउत्पटः ॥ तस्मात्तदातृणात्प्रैतिरसोवृक्षादिवाहतात् ॥ मांसान्यस्यशर्कराणिकीनाटं
स्नावतःस्थिरं ॥ अस्थीन्यंतरतोदारूणिमज्जामज्जोपमाकृता ॥ यद्वृक्षोवृक्णोरोहतिमूलान्नवतरः
पुनः ॥ मर्त्यःस्विन्मृत्युनावृक्णःकस्मान्मूलात्प्ररोहति ॥ रेतसइतिमावोचतजीवतस्तत्प्रजाय
ते ॥ धानारुहइववैवृक्षोंजसाप्रेत्यसंभवः ॥ यत्समूलमावृहेयुर्वृक्षंनपुनराभवेत् ॥ मर्त्यःस्विन्मृ
त्युनावृक्णःकस्मान्मूलात्प्ररोहति ॥ जातएवनजायतेकोन्वेनंजनयेत्पुनः ॥ विज्ञानमानंदंब्रह्म
रातिर्दातुःपरायणं ॥ तिष्ठमानस्यतद्विदइति ॥२८॥ इतिशाकल्यब्राह्मणं ॥ ५। ९ ॥ इतिश्री
बृहदारण्यकेपंचमोध्यायः ॥ ५ ॥

अन्यन्मन्यमानाः रजतं मन्यमानाः अपजह्रुः अपहृतवंतः ॥ ५ ॥ ९ ॥ २६॥ अथ शाकल्यपातानंतरं। याज्ञवल्क्य उवाच। हे ब्राह्मणाः

भगवंतः वो युष्माकं मध्ये यः कामयते मां प्रष्टुमिच्छतीत्यर्थः। स मां पृच्छतु सर्वे वा यूयं मां पृच्छत वा। यद्वा वः युष्माकं मध्ये यः कामयते याज्ञवल्क्यो मां पृच्छत्वितीति यावत्। तमहं पृच्छामि सर्वान् यो युष्मान् वा पृच्छामीत्युवाचेत्यन्वयः। एवं तेनोक्तास्ते ब्राह्मणाः न दधृषुः धैर्यवंतो नाभवन् ॥ २७॥ तान् ब्राह्मणानेतैर्वक्ष्यमाणश्लोकैः पप्रच्छ याज्ञवल्क्यः। महाप्रलयानंतरं जीवस्य देहयोगरूपोत्पत्तिकर्ता क इति प्रष्टुं तस्य नित्यत्वं तावदाह ॥ यथेति। यथा वनस्पतिः वनस्पतौ। व्यत्ययात्। वृक्ष इत्ययं शब्दो अमृषा अन्वर्थस्तथैव। पुरुषः पुरुष इत्ययं शब्दः अमृषा अन्वर्थ एव। वृक्षपदप्रवृत्तिनिमित्तं वृक्णत्वं यथा वनस्पतौ विद्यते। तथा पुरुकाले सत्वरूपं पुरुषपदवृत्तिनिमित्तं पुरुषे विद्यत एव। तथा चोक्तनिमित्तेन पुरुषपदवाच्यत्वात् जीवो नित्यः सिध्यतीति भावः। वृक्षसदृशतया प्रकृतपुरुषस्य शरीरे हेयत्वज्ञापनाय वृक्षसारूप्यं वक्ति ॥ तस्येत्यादिना। तस्य पुरुषस्य देहस्य लोमानि पर्णानि। वृक्षपर्णानीव अस्य पुरुषदेहस्य। त्वक् लोमाश्रयभूतं चर्म। बहिरुत्पाटिका। वृक्षस्य बहिर्भूतत्वगिव। तद्व्यनक्ति ॥ त्वच इति। यथास्य वनस्पतेः त्वच उत्पटो निर्यासः प्रस्यंदि। तथास्य पुरुषस्य त्वच एव रुधिरं प्रस्यंदि। तदेव व्यनक्ति ॥ तस्मादिति। तस्मात्साम्यादेव। तस्मादाहताद्वृक्षाद्रस इव आतृणात्सम्यक् छिन्नाद्देहाद्रुधिरं प्रैति प्रकर्षेण एति। निर्गच्छति। वृक्षदेहयोः साम्यांतरमाह ॥ मांसानीति। शर्कराणि वृक्षशकलस्थानीयानि मांसानि। स्नावतः स्थिरं स्नावास्थिमध्ये यत्स्थिरं विद्यते अस्थिसल्लीनं तत्कीनाटमिव दारुसंश्लिष्टपाशवत्। पुरुषस्यास्थीनि वृक्षस्यांतरे विद्यमानदारूणीव। वृक्षांतस्थसारभूत दारूणीव। वनस्पतिमज्जा पुरुषमज्जोपमाकृता। एवं पुरुषस्य वृक्षसाम्यमुपपाद्याधुना नाशोत्पत्तिमत्त्वेनापि साम्योक्तिपूर्वं यत्प्रष्टव्यं

तत्पृच्छति ॥ यदिति । यद्यथा । वृक्णः छिन्नो । वृक्षो मूलान्नवतरः पुनः प्ररोहति उत्पद्यते । तथा मृत्युना वृक्णः मर्त्यः स्वित् मर्त्योपि । पुनः पुरुषांतरात् प्ररोहति । स वृक्षो मर्त्यश्च कस्मात् मूलात् कारणात्प्ररोहति उत्पद्यते। वृक्षपुरुषयोः स्वातंत्र्येणोत्पादकः कः किं लक्षणकश्चेति प्रश्नाभिप्रायः । याज्ञवल्क्यः । स्वयमेव संभावितकारणांतरमाशंक्य निराह ॥ रेतस इतीति । हे ब्राह्मणाः रेतसः सकाशात्पुरुषः प्ररोहतीति मावोचत मैवं वदत । कुत इत्यत उक्तं ॥ जीवत इति । यस्मात् तद्रेतो जीवतः पित्रादेः प्रजायते । मया तु अंजसा प्रेत्य स्थितस्य महाप्रलयानंतरं संभवः उत्पादकः क इति पृच्छ्यते । न हि तदा रेतोस्तीति भावः । वृक्षस्य बीजजन्यत्वस्य प्रत्यक्षसिद्धत्वात् तदुत्पादकप्रश्नो न युक्त इत्यत उक्तं ॥ धानारुह इव वै वृक्ष इति । धाना बीजं । बीजरुह इव वृक्षो न वस्तुतः स्वातंत्र्येण तज्जन्य इत्यर्थः । नन्वथापि वृक्षो मूलाद्रोहतीत्युक्तत्वात्कथमुत्पादकप्रश्न इति चेन्न । तस्यांगीकारवादमात्रत्वात् कुत इत्यतस्तमपि पक्षं दूषयति ॥ यादिति । यद्यदा स मूलं वृक्षं पुरुषाः आवृहेयुः उद्धर्तयेयुः । तदा उन्मूलो वृक्षः पुनरा सम्यक् । न भवेत् किं । यथा एवं मृत्युना वृक्णः मर्त्यः स्वित् मर्त्योपि पुनर्न भवेत् किं । भवेदेव । वृक्षो मर्त्यश्च तत्कस्मान्मूलात्प्ररोहतीत्यर्थः । एवं याज्ञवल्क्येन पृष्टे पुरुषस्य पुनरुत्पादकं भगवंतं जानंतोपि ब्राह्मणाः तत्पृष्टं सर्वं वक्तुमशक्तत्वात्तूष्णीं बभूवुः । अतः स्वयमेवोत्तरमाह याज्ञवल्क्यः ॥ जात एवेति । विज्ञानं पूर्णज्ञानरूपं । आनंदं पूर्णसुखरूपं । ब्रह्म परब्रह्मैव । सृज्यसर्जनकारणमिति शेषः । स्रष्टावानंदोद्रेक एव हेतुरिति द्योतनायानंदमिति विशेषणं । सृष्ट्युपयुक्तसार्वज्ञोक्त्यर्थं

विज्ञानमिति । ब्रह्मणोऽपि जनकोऽस्ति किमित्यतो नेत्याह ॥ जात एवेति । अयं भगवान् जात एवानादिकालतश्चिदानंददेह युक्ततयाविर्भूत एवातो न जायते । तस्मादेनं को नु जनयेत् न कोपीति । न केवलमयं सृष्टिकर्तैव किंतु । दातुः स्वोद्देशेन हविरादिदातुः यजमानस्य राति रिष्टः तद्विदो ब्रह्मविदश्च तिष्ठमानस्य नित्यं तद्भावनावतस्तु । परायणं परमाश्रय इत्युवाच याज्ञवल्क्य इत्यर्थः ॥५॥९॥२८॥ नवमं शाकल्यब्राह्मणं ॥ इति श्रीमत्कण्वोपनिषदर्थसंग्रहे राघवेंद्रयतिकृते पंचमो

जनकोहवैदेहआसांचक्रेऽथहयाज्ञवल्क्यआवव्राजतंहोवाच याज्ञवल्क्यकिमर्थमचारीः पशू
निच्छन्नण्वंतानित्युभयमेवसम्राळितिहोवाच ॥ १ ॥

ध्यायः ॥५॥ छ ॥ आगतानामृषीणां मध्ये यो ब्रह्मिष्ठस्तं गुरुत्वेन वरीतुं श्रेष्ठत्वनिर्णयाय हि कथायां कारितायां याज्ञवल्क्यस्य श्रेष्ठत्वेऽवधारिते सति । तं गुरुत्वेन जनको वव्र इत्याहात्राध्याये । वैदेहो विदेहदेशाधीशो जनकनामा । आसांचक्रे बभूव । ह किल । अव्यग्रमना आसीदिति यावत् । अथ तदा । याज्ञवल्क्य आवव्राज आजगाम । तं होवाच जनक इत्यनुषंगः । अचारीः पर्यटनमकार्षीः । संभावितं कोटिद्वयं स्वयमेवोट्टंकयति ॥ पशूनिति । किं पशूनिच्छन्नुताण्वंतान्वक्तुमिति शेषः । इत्युवाच जनक इत्यन्वयः । अण्वंतानित्यस्याणुर्भगवान् । तद्विषयान् निर्णयानित्यर्थः । उभयं पशूनण्वंतवचनं चेत्युभयमुद्दिश्यैव

संचरामि हे सम्राडिति होवाच याज्ञवल्क्यः ॥६॥१॥१॥ यद्यप्यनंतान् वक्तुमागतस्तर्हि मह्यमुपदिशेति राज्ञा प्रार्थितो याज्ञवल्क्यः ।

यत्तेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेजित्वाशैलि(नो)निर्वाग्वैब्रह्मेतियथामातृमान्पितृमाना
चार्यवान्ब्रूयात्तथानच्छैलिनोब्रवीद्वाग्वैब्रह्मेत्यवदतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्रतिष्ठां
नमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्य वागेवायतनमाकाशःप्रतिष्ठाप्रज्ञेत्ये
नदुपासीत काप्रज्ञतायाज्ञवल्क्य वागेवसम्राडितिहोवाच वाचावैसम्राड्बंधुः प्रज्ञायत ऋग्वे
दोयजुर्वेदः सामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्याना
निव्याख्यानानीष्टंहुतमाशितंपायितमयंचलोकःपरश्चलोकःसर्वाणिचभूतानिवाचैवसम्राट्प्र
जायंते वाग्वैसम्राट्परमंब्रह्म नैनंवाग्जहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येति
यएवंविद्वानेतदुपास्ते हस्त्यृषभंसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपि
तामेमन्यतनाननुशिष्यहरेतेति ॥ २ ॥

अन्येभ्यः श्रुतादप्यधिकं विवक्षुरन्येभ्यो विदितमनुवदेत्याह ॥ यदिति । ते तुभ्यं । कश्चिज्ज्ञानी । यदब्रवीत् तत्तावद्वयं शृणवामेत्यु वाच याज्ञवल्क्यः । एवमुक्तो राजा वक्ति ॥ अब्रवीदिति । मे मह्यं । शिलिनस्यापत्यं शैलिनो । जित्वानमा मुनिः । ब्रह्म गुणपूर्णं ।

वक्तृत्वहेतुना वाङ्नामकमब्रवीत् । इत्याह जनकः । शैलिनोपदिष्टं स्तोतुं याज्ञवल्क्यः तस्य आप्तत्वमाह ॥ यथेति । मातृपित्राचार्य शिक्षितः पुरुषो यथा स्वशिष्याय ब्रूयात् तथा तत् वाग्वै ब्रह्मेत्येतदब्रवीत् । वाग्वै ब्रह्मेत्येतदुपपादयति ॥ अवदतो वक्तृत्वहीनस्य किं फलं स्यात् न किमपि । अतो वक्तृत्वदातृत्वाद्वाक् ब्रह्मेत्यर्थः । इत्युवाच याज्ञवल्क्य इत्यन्वयः । तस्य वाङ्नामकस्य हरेः आयतनं स्थानं प्रतिष्ठां प्रतिमां तं तुभ्यमब्रवीत् । तु शब्दः काक्वर्थे । अब्रवीत्किमित्यर्थः । एवं याज्ञवल्क्येन पृष्टो राजोवाच ॥ न मे ब्रवीदिति । तं प्रति मुनिराह । हे सम्राट् एतत् जित्वोपदिष्टं उपास्यस्य हरेर्वाङ्नामकत्वमेकपादं इति । आयतनप्रतिमादेर्मुमुक्षुणा ज्ञेयत्वात्तस्य चानुपदेशादसंपूर्णमेतदित्यर्थः । एवमुक्तः स सम्राडाह ॥ स इति । हे याज्ञवल्क्य । स त्वं ब्रह्मिष्ठत्वेन प्रसिद्धस्त्वं नोऽस्मभ्यं ब्रूहि । आयतनादिकमिति शेषः । एवमुक्तो मुनिराह ॥ वागेवेति । प्रसिद्धवागिंद्रियमेवायतनमधिष्ठानं । आकाशः आसमंताद्दीप्तत्वादाकाशनाम्नी रमा । प्रतिष्ठा प्रतिमा । एतत् एतत्प्रज्ञेत्युपासीत । राजाह ॥ का प्रज्ञतेति । धर्मधर्मिणोरभेद बुद्ध्योत्तरमाह ॥ वागेव सम्राडिति होवाचेति । वाङ्नामकं भगवद्रूपमेवेत्यर्थः । तस्य प्रज्ञतामुपपादयति । वाचेति ॥ वाचा वै वाङ्नामकभगवद्रूपेण वै बंधुः प्रज्ञायते । को बंधुरित्यत आह ॥ ऋगिति । ऋगादेर्बंधुत्वमिष्टोपायबोधकत्वेन ज्ञेयं । ऋगादि पदार्थाः व्यक्ताः । विद्येत्यमिताक्षरं पंचरात्रमुच्यते । श्लोकपदेन मिताक्षरं पंचरात्रमुच्यते । सूत्राणि ब्रह्मसूत्रादीनि । अनुव्याख्यानपदेन वेदव्याख्यानबृहत्तर्कादि विस्तारग्रंथसंग्रहः । व्याख्यानपदेन ब्रह्मतर्कादि वेदव्याख्यानसंग्रहः । इष्टं यजनं । हुतं दानं । आशितं अशितं अन्नदानं । पायितं जलपानं । अयं च भूम्यादिलोकः । परश्च स्वर्गादिलोकः । सर्वाणि भूतानि वाचैव प्रज्ञायंते ।

निगमयति ॥ वाग्वा इति । एवमुपासकस्य फलमाह ॥ नैनमिति । योऽधिकारी । एवमायतनादियुक्तत्वेन वाङ्नामकं । एतत् परमं ब्रह्म । विद्वानुपास्ते । एनमधिकारिणं वाक् वाङ्नामकं ब्रह्म । न जहाति । सः देवान्देवत्वं । अप्येति प्राप्नोति । ततो

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मउदंकःशौल्बायनःप्राणोवैब्रह्मेतियथामातृमान्पितृमा
नाचार्यवान्ब्रूयात्तथातच्छौल्बायनोब्रवीत्प्राणोवैब्रह्मेत्यप्राणतोहिकिᳪस्यादित्यब्रवीत्तुतेतस्या
यतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्साम्राडितिसवैनोब्रूहियाज्ञवल्क्य प्राणएवायतनमाका
शःप्रतिष्ठाप्रियमित्येनदुपासीतकाप्रियतायाज्ञवल्क्यप्राणएवसम्राडितिहोवाच प्राणस्यैवस
म्राट्कामायाऽयाज्यंयाजयत्यप्रतिगृह्यस्यप्रतिगृह्णात्यपितत्रवधाशंकंभवतियांदिशमेतिप्राणस्यैव
सम्राट्कामाय प्राणोवैसम्राट्परमंब्रह्मनैनंप्राणोजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वा
देवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभᳪसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचया
ज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ३ ॥

देवो भूत्वा स्वोत्तमदेवसायुज्यमाप्नोति । ततो ब्रह्मणा सह भगवंतं प्राप्नोतीत्यर्थः । तत्र मुक्तौ सर्वाणि भूतानि तदवरमुक्तचेतनानि एनं मुक्तमभिक्षरंति अस्मै सर्वभोगान्दुहंतीत्यर्थः । देवत्वायोग्योमनुष्यश्चेत्तज्ज्ञानी तदा देवलोकस्थः सन्देवसायुज्यं प्राप्य स्वावरैः

पूज्यत इति ज्ञेयं। एवमुपदिष्टः सम्राट् क्षत्रियत्वात्स्वोचितगुरुदक्षिणादानप्रतिज्ञामकरोदित्याह ॥ हस्त्यृषभमिति। द्वंद्वैकवद्भावः। सहस्रं सहस्रसंख्योपेतं। किमुवाचेत्यत आह ॥ पिता मेऽमन्यतेति। अननुशिष्य शिष्यायोपदेष्टव्यं सर्वमनुपदिश्य। गुरुदक्षिणां नाहरेत। न गृह्णीयादिति। मे पिता अमन्यत। व्यजानात्। अतः समग्रमुपदिश्य गृह्णामीत्युवाच याज्ञवल्क्य इत्यर्थः ॥६॥१॥२॥ यदेवेत्यादिखंडपंचकेप्येवमेव प्रश्नोत्तररूपतया योजना ध्येया। शुल्बायनस्यापत्यं शौल्बायनः। उदंको नामतः। ब्रह्म प्राणो वै जगत्प्रणयनात्प्राणशब्दितं वै। प्रसिद्धं। इत्यब्रवीदुदंक इत्यन्वयः। अप्राणतः उच्छ्वासनिःश्वासरहितस्य। तद्व्यापारकर्तृप्राणशब्दितभगवद्रूपहीनस्येति वा। किं स्यात्। न किमपि। प्रवृत्तिमात्रपरिलोपः स्यादित्यर्थः। प्राण एव प्राणापानादिरूपो वायुरेवायतनं स्थानं। एनत्प्राणनामकं प्रियमित्युपासीत। तस्य प्रियत्वमुपपादयति ॥ प्राणस्यैवेति। हे सम्राट्। प्राणस्थस्य प्राणनाम्नो हरेरेव कामाय संप्रीत्यै। भोजनं भवेदिति शेषः। तादृशभोगार्थमेवाज्ञोपि जनः। प्राणस्य प्राणनाम्नो हरेः। कामाय इच्छयैवायाज्यं शूद्रादिकमपि याजयति। अप्रतिगृह्यस्य प्रतिग्रहानर्हस्य सकाशात्प्रतिगृह्णाति। प्राणस्य कामेन यां दिशमेति तत्र वधाशंकं चौर्यकर्म भवत्यतः प्राणः प्रिय इत्यर्थः। वध आशंक्यते येन कर्मणा तद्वधाशंकमिति व्युत्पत्त्या चौर्यकर्म वधाशंकपदार्थः। निगमयति ॥ प्राणो वै सम्राट् परमं ब्रह्मेति ॥ नैनं प्राणः इति। प्राणः प्राणस्थः तन्नामा हरिर्न जहातीत्यर्थः ॥६॥१॥३॥ वृष्णस्यापत्यं वा(र्ष्णिः)र्ष्णः बर्कुर्नामतः। ब्रह्म चक्षुर्वै सर्वदर्शनाच्चक्षुर्नामकं वै अपश्यतः दर्शनादि

प्रदचक्षुर्नामकहरिहीनस्य किं स्यात् । जाग्रद्दर्शनहेतुभूतस्य विश्वाख्यस्य भगवद्रूपस्य चक्षुःस्थस्याभावे पदार्थदर्शनमात्रलोपेन प्रवृत्त्यादिर्न स्यादिति भावः । चक्षुरेव चक्षुरिंद्रियमेवायतनं स्थानं । चक्षुःस्थस्य हरेः सत्यत्वमुपपादयति ॥ चक्षुषेति । चक्षुषा

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेब(कु)र्कुर्वार्ष्णश्चक्षुर्वैब्रह्मेतियथामातृमान्पितृमा नाचार्यवान्ब्रूयात्तथातद्वार्ष्णोऽब्रवीच्चक्षुर्वैब्रह्मेत्यपश्यतोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्र तिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यचक्षुरेवायतनमाकाशःप्र तिष्ठासत्यमित्येनदुपासीतकासत्यतायाज्ञवल्क्यचक्षुरेवसम्राडितिहोवाचचक्षुषावैसम्राट्प श्यंतमाहुरद्राक्षीरितिसआहाद्राक्षमितितत्सत्यंभवतिचक्षुर्वैसम्राट्परमंब्रह्मनैनंचक्षुर्जहाति सर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददा मीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यःपितामेऽमन्यतनाननुशिष्यहरेतेति ॥ ४ ॥

चक्षुर्नामकेन तत्स्थेन विश्वाख्यरूपेण तत्प्रेरणयेति यावत् । पश्यंतं पुरुषं प्रत्याहुः । अन्ये पुरुषा अद्राक्षीरिति स पश्यन्पुरुष आह॥ अद्राक्षमिति । पुनर्दृष्टं चेत्तद्वस्तु सत्यं यथास्थितं भवत्यतः चक्षुर्नामकस्य हरेः यथार्थज्ञानहेतुत्वाच्चक्षुःस्थं ब्रह्म सत्यं भवतीत्यर्थः। अत्र चक्षुःस्थविश्वाख्यरूपस्य सत्यार्थविषयकदर्शनहेतुत्वोक्त्या सत्यत्वोपपादनमुपलक्षणं । शब्दस्पर्शरूपरसगंधादिज्ञानहेतुत्वाच्च

सत्यत्वं ध्येयं । अत एव चक्षुःस्थविश्वरूपस्य कंठस्थानागमनं सति चक्षुर्निमीलनं सर्वबाह्येंद्रियव्यापारोपरतिश्च भवतीति ज्ञेयं ॥ नैनमिति । एनमुपासकं । चक्षुर्नामकं चक्षुःस्थं ब्रह्म न जहातीत्यर्थः ॥ ६ ॥ १ ॥ ४ ॥ गर्दभी गर्दभदेशीयः । विपीतो नामतः ।

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेगर्दभीविपीतोभारद्वाजःश्रोत्रंवैब्रह्मेतियथामातृमा न्पितृमानाचार्यवान्ब्रूयात्तथातद्भारद्वाजोब्रवीच्छ्रोत्रंवैब्रह्मेत्यशृण्वतोहिकिंस्यादित्यब्रवीत्तुनेत स्यायतनंप्रतिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यश्रोत्रमेवायतनमा काशःप्रतिष्ठाऽनंतइत्येनदुपासीतकानंततायाज्ञवल्क्य दिशएवसम्राडितिहोवाचतस्माद्वैसम्रा डपियांकांचदिशंगच्छतिनैवास्याअंतंगच्छत्यनंताहिदिशः दिशोवैसम्राट्श्रोत्रंश्रोत्रंवैसम्राट् परमंब्रह्मनैनंश्रोत्रंजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपा स्तेहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोहवैदेहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननु शिष्यहरेतेति ॥ ५ ॥

भरद्वाजस्यापत्यं भारद्वाजः । ब्रह्म श्रोत्रं वै श्रवणशक्तिदत्वाच्छ्रोत्रनामकं वै इत्यब्रवीदित्यन्वयः । अशृण्वतः श्रवणव्यापारदात् भगवद्धीनस्य किं स्यात् । सच्छास्त्रश्रवणादेरसंभवादतस्तद्दातृत्वाच्छ्रोत्रं ब्रह्मेत्यर्थः । श्रोत्रमेव श्रोत्रेंद्रियमेवायतनं स्थानं ॥ दिश एवेति । दिक्षु स्थितो दिङ्नामा विष्णुरेवेत्यर्थः । दिगंतर्गतस्य विष्णोरनंतत्वमुपपादयति ॥ तस्मादिति । हे सम्राट् हि यतो

दिशोऽनंताः दिक्षु स्थितो दिङ्नामा विष्णुः सर्वव्यापी । तस्माद्वै तस्मादेव । यः कोपि । यां कां च दिशं तन्नामकभगवदधिष्ठितां दिशं । गच्छति । अस्याः दिशोंतमवसानं न गच्छतीत्यर्थः । यदधिष्ठितदिशामेवानंतत्वं सोनंत इति किमु वाच्यमिति भावः । ननु

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेसत्यकामोजाबालोमनोवैब्रह्मेतियथामातृमान्पितृमा नाचार्यवान्ब्रूयात्तथातज्जाबालोब्रवीन्मनोवैब्रह्मेत्यमनसोहिकिंस्यादित्यब्रवीत्तुतेतस्यायतनंप्र तिष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यमनएवायतनमाकाशःप्रतिष्ठाऽऽ नंदइत्येनदुपासीतकानंदतायाज्ञवल्क्यमनएवसम्राडितिहोवाचमनसावैसम्राट्स्त्रियमभिहार्यते तस्यांप्रतिरूपःपुत्रोजायतेसआनंदोमनोवैसम्राट्परमंब्रह्मनैनंमनोजहातिसर्वाण्येनंभूतान्यभि क्षरंतिदेवोभूत्वादेवानप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोवै देहःसहोवाचयाज्ञवल्क्यःपितामेमन्यतनाननुशिष्यहरेतेति ॥ ६ ॥

दिङ्नामकस्य दिक्षु स्थितस्य हरेरनंतत्वे श्रोत्रांतःस्थस्य चानंतत्वेनोपासनं कथमित्यत आह ॥ दिशो वै सम्राट् श्रोत्रमिति । दिक्षु स्थितमेव रूपं श्रोत्रस्थमित्यर्थः । एनमुपासकं । श्रोत्रं श्रोत्रस्थं तन्नामकं ब्रह्म । न जहातीत्यर्थः ॥६॥१॥५॥ जबालाया अपत्यं जाबालः । सत्यकामो नामतः । ब्रह्म मनो वै मंत्रत्वतो मनोनामकं वै । इत्यब्रवीदित्यन्वयः । अमनसः मननशक्तिदातृ

मनोनामकभगवद्रूपहीनस्य किं स्यात् । मननादेरसंभवात् । मन एव मनोरूपेंद्रियमेवायतनं । एनन्मनोनामकं ब्रह्म आनंदः आनंद हेतुरित्युपासीत । आनंदता आनंदहेतुता । मनोगतस्य हरेरानंदहेतुत्वमुपपादयति ॥ **मनसेति** । मनसा मनोनामकभगवदधिष्ठितेन

यदेवतेकश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेविदग्धःशाकल्योहृदयंवैब्रह्मेतियथामातृमान्पितृमाना
चार्यवान्ब्रूयात्तथातच्छाकल्योब्रवीद्धृदयंवैब्रह्मेत्यहृदयस्यकिंस्यादित्यब्रवीत्तुनेतस्यायतनंप्रति
ष्ठांनमेब्रवीदित्येकपाद्वाएतत्सम्राडितिसवैनोब्रूहियाज्ञवल्क्यहृदयमेवायमायतनमाकाशःप्रति
ष्ठास्थितिरित्येनदुपासीतकास्थितताहृदयमेवसम्राडितिहोवाचहृदयंवैसम्राड्सर्वे
षांभूतानामायतनंहृदयंवैसम्राड्सर्वेषांभूतानांप्रतिष्ठाहृदयेह्येवसम्राड्सर्वाणिभूतानिप्रतिष्ठि
तानिभवंतिहृदयंवैसम्राट्परमंब्रह्मनैनंहृदयंजहातिसर्वाण्येनंभूतान्यभिक्षरंतिदेवोभूत्वादेवा
नप्येतियएवंविद्वानेतदुपास्तेहस्त्यृषभंसहस्रंददामीतिहोवाचजनकोवैदेहःसहोवाचयाज्ञवल्क्यः
पिताममन्यतनाननुशिष्यहरेतेति ॥ ७ ॥ इतिषडाचार्यब्राह्मणं ॥ ६ ॥ १ ॥ ॥ ॥ ॥

मनसा । पुमान् स्त्रियमभिहार्यते अभिगच्छति । तस्यां स्त्रियां । प्रतिरूपोऽनुरूपः । पुत्रो जायते । स जातः पुत्रः । आनंदः

आनंदहेतुः । एवं यदधिष्ठितमनोव्यापारेण जातः पुत्रः सुखहेतुः स आनंदरूपो हरिः सुखहेतुरिति किमु वाच्यमित्यर्थः । एनमुपासकं । मनो मनोनामकं मनःस्थं ब्रह्म । न जहातीत्यर्थः ॥ ६ ॥ १ ॥ ६ ॥ विदग्धो नामतः । शकलस्यापत्यं शाकल्यः । ब्रह्म हृदयं वै । हृद्ययत इति व्युत्पत्त्या हृदयनामकं वै इत्यब्रवीत् । अहृदयस्य बुद्धिहेतुहृदयनामकभगवद्धीनस्य किं स्यात् । न किमप्यतो बुद्धिदातृत्वाद्धृदयं ब्रह्मेत्यर्थः । हृदयं प्रसिद्धमेवायतनं स्थानं । स्थितिहेतुरित्यर्थः । स्थितिता स्थितिहेतुता । उत्तरमाह॥ हृदयमेवेति । हृदयनामकं हृदयगतमेव । हृदये सर्वशो व्याप्तं प्रादेशपरिमितं तथा हृत्कर्णिकामूलगतं अंगुष्ठाग्रप्रमाणकं । तथा हृत्कर्णिकाग्रगतमंगुष्ठमात्रपरिमितं चेति भगवद्रूपत्रयमेव स्थितिहेतुरित्यर्थः । आद्यस्य हृदयनाम्नो हरेः स्थितिहेतुत्वमुपपादयति ॥ हृदयं वा इति । हृदयं हृदयनामकं । हृदयमभिव्याप्य स्थितं । प्रादेशपरिमितं रूपं सर्वेषां भूतानामायतनं स्थानं वै । द्वितीय तृतीयरूपयोः स्थितिहेतुतामुपपादयति ॥ हृदयं वा इति । हृत्कर्णिकामूलगतं । हृत्कर्णिकाग्रगतं च सर्वेषां भूतानां प्रतिष्ठा धारकं सदा सुप्तौ चेति ज्ञेयं । तद्व्यनक्ति ॥ हृदये ह्येवेति । हृत्कर्णिकामूलगते विष्णुरूप एव सर्वाणि भूतानि सदा प्रतिष्ठितानि भवंतीत्यर्थः । तथा हृदये हृदयनाम्नि । कर्णिकाग्रगते हरौ सर्वाणि भूतानि विशेषतोऽपि सुप्तौ प्रतिष्ठितानि भवंतीत्यर्थः । एनमुपासकं । हृदयं हृदयनामकं रूपं न जहातीत्यर्थः । शिष्टं प्राग्वत् ॥ ६ ॥ १ ॥ ७ ॥ इति षडाचार्यब्राह्मणं ॥ जनको ह वैदेहः स्वयोग्यरूपज्ञानं श्रोतुं कूर्चात्सिंहासनादवरुह्य उपावसर्पन् उपसत्तिं कुर्वन् कृत्वेति यावत् । उवाच तदाह ॥नम इत्यादि।

अनु अनुरूपं । मम योग्यज्ञानं यथा भवति तथा । मा मां शाधि शिक्षयेत्युवाचेत्यर्थः । एवमुक्तो याज्ञवल्क्यः मुक्तौ यत्स्वात्मना प्राप्यं तद्रूपमुपास्यैवमुक्तो भवतीति भावेन प्राप्यं पृष्टवानसि किमिति राजानं पृच्छति ॥ स होवाचेत्यादिना । हे सम्राट् । यथा कश्चित्त्वादृशः सम्राट् राजा महांतमध्वानं मार्गं । स्थले जले वा एष्यन् गच्छन् । यथाक्रमं रथं नावं वा । समाददीत एवमेवैताभिः पूर्वोक्ताभिः । वाग्वै ब्रह्मेत्यादिभिरुपनिषद्भिः समाहितात्मा स्वस्थमानसः । असि । एवं दृश्यमानप्रकारेण वृंदारकः वृंदैः

जनकोहवैदेहः कूर्चादुपावसर्पन्नुवाचनमस्तेस्तुयाज्ञवल्क्यानुमाशाधीतिसहोवाचयथावैसम्राण्म हांतमध्वानमेष्यन्रथंवानावंवासमाददीतैवमेवैताभिरुपनिषद्भिःसमाहितात्मास्येवंवृंदारकआ ढ्यःसन्नधीतवेदउक्तोपनिषत्कइतोविमुच्यमानःक्वगमिष्यसीतिनाहंतद्भगवन्वेदयत्रगमिष्यामी त्यथवैतेऽहंतद्वक्ष्यामियत्रगमिष्यसीतिसहोवाचब्रवीतुभगवानिति ॥ १ ॥

भृत्यादिसंघैः प्राप्यतमः । आढ्यः धनी सन्नप्यधीतवेदः उक्तोपनिषत्कः व्याख्यातोपनिषत्कः त्वमित्यतः संसाराद्विमुच्यमानः क्व गमिष्यसीति पृष्टो राजा वक्ति ॥ नाहमिति । यत्र गमिष्यामि तन्मया प्राप्यं अहं न वेदेत्युवाच राजेत्यर्थः । मुनिराह ॥ अथेति । एवं तर्हीत्यथ शब्दार्थः । ते तुभ्यं । राजा वक्ति ॥ ब्रवीतु भगवानिति ॥ ६ ॥ २ ॥ १ ॥ मुनिरुपदिशति ॥ इंध इति । योयं प्रसिद्धः सर्वेषां दक्षिणेऽक्षन् अक्षणि वर्तमानः पुरुषः दीप्तत्वादिंधो वै नाम प्रसिद्धः । एष मुक्तो राजभिः

प्राप्यः। अतः स एव तद्धृदिस्थः उपास्यः। तं राजहृदयांतर्गतं। एतं दक्षिणाक्षिस्थं। इंधनामानं संतं इंद्र इति परोक्षेणाप्रसिद्धनाम्ना आचक्षते देवाः। कुत एवमाहुरित्यत आह॥ परोक्षेनि। हि यस्माद्देवाः परोक्षप्रियाः। अप्रसिद्धनाम्नैव भगवदुपदेशप्रियाः। प्रत्यक्षद्विषः प्रसिद्धनाम्ना हरेरुपदेशद्वेषिणः। प्रत्यक्षोपदेशे अयोग्यानामपि ज्ञानप्राप्तेः तेषां सम्यग्ज्ञानाभावस्य देवानां प्रियत्वादिति भावः।

इंधो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिंधꣳसंतमिंद्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥२॥ अथैतद्वामेऽक्षाणि पुरुषरूपमेषास्य पत्नी विराट्तयोरेष सꣳस्तावो य एषोंतर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोंतर्हृदये लोहितपिंडोऽथैनयोरेतत्प्रावरणं यदेतदंतर्हृदये जालकमिवाथैनयोरेषा सृतिःसंचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशःसहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योंतर्हृदये प्रतिष्ठिता भवंत्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥

तदाह सूत्रे अनाविष्कुर्वन्नन्वयादिति। साधून्प्रति प्रत्यक्षोपदेशस्येष्टत्वात्परोक्षप्रिया इवेतीव शब्दः ॥६॥२॥२॥ दक्षिणाक्षिगतभगवद्रूपमहिमानं उपास्यांतरोक्तिपूर्वमाह॥ अथेति। अन्यदपीत्यथ शब्दार्थः। एतत् वामे अक्षणि स्थितपुरुषरूपं चोपास्यमिति शेषः। एषा प्रसिद्धा विराट्नाम्नी श्रीरस्याक्षिस्थस्य हरेः पत्नी। तयोरिंद्रविराजोरेष संस्तावः सर्ववेदरूपस्तुतिः य एषोंतर्हृदय आकाशः

१५ **

आ समंतात्काशमानः कर्णयोः पिधाने सति सर्वजीवानां घोषात्मना प्रतीयमान इति यावत् । एष संस्ताव इति पूर्वेणान्वयः । अथ य एष प्रसिद्धो हृदये हृत्कमलरूपे लोहितपिंडः कर्णिकारूपः । स एनयोरिंद्रविराजोरन्नं । तत्र स्थित्वाऽन्नस्यादनाद्धेतोरन्नमित्युच्यते । अथ यदेतत्प्रसिद्धं हृदयेंतर्जालकमिव स्थितं वपारूपं तदेनयोः पूर्वोक्तेंद्रविराजोः प्रावरणमंतर्वस्त्रस्थानीयं । अथ या एषा हृदयाद्धृदयमारभ्योर्ध्वनाडी ऊर्ध्वब्रह्मरंध्रपर्यंतं वर्तते । एषा एनयोः संचरणी संचरणहेतुभूता सृतिमार्गः । हृदयलोहितपिंडेस्थितस्य हरेराहारं वक्तुमाह ॥ यथेति । यथा केशः सहस्रधा भिन्नः एवमेताः प्रसिद्धाः हिताः नाम । जीवस्य हितकृत्त्वाद्धरेः सन्निधियुतत्वाद्वा हिता इति प्रसिद्धा नाड्यः सहस्रधा भिन्नाः अस्य जीवस्य हृदयेंतः प्रतिष्ठिता भवंति । एताभिः हितानामकनाडीभिः । एतत् मस्तकस्थितममृतमास्रवत् स्रवत्स्वभावमास्रवति स्यंदते आगच्छति तदत्ति इंधनामा हरिरिति योज्यं । तस्मात्तददनादेष इंधः अस्माच्छारीरादात्मनो जीवात् प्रविविक्ताहारतरो विलक्षणाहार एव भवति । अवतारेषु स्थूलमपि भुंक्त इति इव शब्दः । व्याख्यातमेतत्सप्तमे गीताभाष्ये ॥ ६ ॥ २ ॥ ३ ॥ चतुर्दिक्षु इंधस्य सेवकानाह ॥ तस्येत्यादिना । प्रांचः प्राचीदिगवस्थिताः प्रणेतृत्वहेतुना प्राणनामकाः इंद्राग्नी तद्भार्ये चेति चत्वारः । तस्य हरेः प्राची दिक् प्राच्यां दिशि तिष्ठंतीत्यर्थः । अत्र प्राच्यादिपदेन सकोणाश्चतस्रो दिशो विवक्षिता इति ज्ञेयं । एवमग्रेपि योजना ध्येया । दक्षिणाः दक्षिणादिशि स्थिताः प्राणनामानः यमनिर्ऋती तद्भार्ये चेति चत्वारः । प्रत्यंचः प्रतीचीदिक्स्थिताः प्राणाः वरुणवायू तद्भार्ये इति चत्वारः । उदंचः

उत्तरदिक्स्थिताः सोमेशानौ तद्भार्ये चेति चत्वारः। ऊर्ध्वाः ऊर्ध्वदिगवस्थिताः। प्राणाः चतुर्मुखमुख्यवायू तद्भार्ये चेति चत्वारः। अवांचः अधोदिगवस्थिताः शेषकामौ तद्भार्ये चेति चत्वारः अवाक् दिशि प्रतितिष्ठंतीत्यर्थः। एवमुक्तदिशा सर्वे प्राणा इंद्राद्याः। सर्वदिक्षु स्थिताः। हरिपरिवारतया तिष्ठंतीत्यर्थः। इंधस्य महिमांतरमाह ॥ स एष इत्यादिना। व्याख्यात मिदं वाक्यं पूर्वाध्याये शाकल्यब्राह्मणांत्यभागे। हे जनक त्वं। अभयं संसारभयाभावं प्राप्तोसीति होवाच याज्ञवल्क्यः।

तस्यप्राचीदिक्प्रांचःप्राणादक्षिणादिक्दक्षिणाःप्राणाःप्रतीचीदिक्प्रत्यंचःप्राणा उदीचीदिगु दंचःप्राणा ऊर्ध्वादिगूर्ध्वाःप्राणा अवाचीदिगवांचः प्राणाः सर्वादिशःसर्वेप्राणाः सएषनेतिने त्यात्माऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेअसंगोनहिसज्यतेऽसितोनव्यथतेनरिष्यइत्यभयंवै जनकप्राप्तासीतिहोवाचयाज्ञवल्क्यःसहोवाचजनकोहवैदेहोऽभयंत्वागच्छताद्याज्ञवल्क्ययोनो भगवन्नभयंवेदयसेनमस्तेस्त्विमेविदेहाअयमहमस्मि ॥ ४ ॥ द्वितीयंकूर्चब्राह्मणं ॥ ६ ॥ २ ॥ ॥

एवमुक्तो राजोवाच। हे भगवन् याज्ञवल्क्य यस्त्वत्प्रसादान्नोऽस्माकं अभयं वेदयसे प्रापयसि। तत्त्वा त्वां। गच्छतात्। त्वत्प्रसादादागतमभयं त्वत्प्राप्तमस्तु। नान्यदभयं तव प्रतिकर्तुं शक्यम् इत्यर्थः। ते तुभ्यं नमोस्तु। इमे मदीयाः विदेहाः। विदेह देशास्तव। अयमहं तवास्मि। तव भृत्योस्मीत्युवाचेत्यन्वयः ॥६॥२॥४॥ इति द्वितीयं कूर्चब्राह्मणं ॥ ॥ विद्यांतरमाह ॥

जनकमित्यादिना । जनकं ह वैदेहं प्रति याज्ञवल्क्यः जगाम । किमर्थमित्यत आह ॥ समेनेति । एनेन अनेन राज्ञा । संवदिष्ये संवादं करिष्ये । इति तेन संवादार्थं स्वयमेव कुतो जनकं प्रत्यगमदित्यत आह ॥ अथ हेति । यद्यस्माज्जनकश्च याज्ञवल्क्यश्च पूर्वमग्निहोत्रगृहे समूदाते संवादं कृतवंतौ । तदा तस्मै प्रसन्नः सन्मुनिर्वरं ददौ । स राजा स्वयमेवागमनं कामप्रश्नमेव वरं च ययाचे ह किल । तं याचितं वरमस्मै ददौ । ततः कारणात्स्वयमेवानाहूतो जगामेत्यर्थः । एवं वरस्य दत्तत्वाद्यथेष्टं

जनकꣳहवैदेहंयाज्ञवल्क्योजगाम समेनेन वदिष्यइत्यथहयज्जनकश्चवैदेहोयाज्ञवल्क्यश्चाग्निहो
त्रेसमूदाते तस्मैहयाज्ञवल्क्योवरंददौसहकामप्रश्नमेववव्रेतꣳहास्मैददौतꣳहसम्राडेवपूर्वःप
प्रच्छ ॥ १ ॥

पृच्छेति याज्ञवल्क्योक्त्यनंतरं यद्यपि प्रष्टव्यं तथाप्यौत्सुक्यवशात्तं सम्राडेव । पूर्वः पूर्वं । पप्रच्छ प्रश्नमकरोत् ॥ ६ ॥ ३ ॥ १ ॥
तदाह ॥ याज्ञवल्क्येति । अयं पुरुषः संसारिजीवः । किं ज्योतिर्ज्ञानसाधनं यस्य स किंज्योतिरिति बहुव्रीहिः । किमस्य ज्ञानसाधनमित्यर्थः । इति पृष्ट उत्तरमाह मुनिः ॥ आदित्यज्योतिरिति । बहुव्रीहिरयमपि । एवमग्रेपि । ज्योतिः शब्दोत्र ज्ञानसाधनपरो ध्येयः । हेति शब्दः आदित्यस्य ज्योतिष्ट्वप्रसिद्ध्यर्थः । एवमग्रेपि । तदेवोपपादयति ॥ आदित्येनैवेति । बाह्यतेजोंतरव्यावृत्त्यर्थोत्रैव शब्दः सर्वत्र ज्ञेयः । आदित्येन ज्योतिषा अयं जीवः । आस्ते उपविशति । पल्ययते परितो

गच्छति । कर्म कुरुते । विपल्येति प्रत्यावर्तते इति शब्दो हेत्वर्थः । इति हेतोरादित्यज्योतिरयं जीव इत्यर्थः । मुनिनोक्तमर्थ मंगीकृतवान्राजेत्याह ॥ एवमेवेति ॥६॥३॥२॥ एवमेवोत्तरखंडचतुष्टयेपि प्रश्नप्रतिवचनोपपादनवाक्यानामर्थो ध्येयः॥३–४ ॥ वागेवेति । शब्दव्यवहार एवेत्यर्थः । तस्य ज्योतिष्ट्वमप्रसिद्धत्वादुपपादयति ॥ तस्मादिति । यत्र देशे । स्वः स्वकीयः ।

याज्ञवल्क्यकिंज्योतिरयंपुरुषइत्यादित्यज्योतिःसम्राडितिहोवाचादित्येनैवायंज्योतिषाऽऽस्ते पल्ययतेकर्मकुरुतेविपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥२॥ अस्तमितआदित्येयाज्ञवल्यकिंज्यो तिरेवायंपुरुषइतिचंद्रमाएवास्यज्योतिर्भवतीतिचंद्रमसैवायंज्योतिषास्तेपल्ययतेकर्मकुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥३॥ अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेकिंज्यो तिरेवायंपुरुषइत्यग्निरेवास्यज्योतिर्भवतीत्यग्निनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येती त्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

पाणिर्हस्तो । न विनिर्ज्ञायते न ज्ञायते । गाढांधरकारदेश इत्यर्थः । अथ तादृशदशायां यत्र देशे वागुच्चरति आह्वानादिशब्दं करोति । तत्र तं देशं प्रत्युपन्येत्येव । उपगच्छत्येवेति हेतोः वागेव ज्योतिरित्यर्थः ॥ ५ ॥ सुप्तौ ज्ञानहेतुं पृच्छति ॥ अस्तमित इत्यादिना । आत्मैव परमात्मैवेत्यर्थः । कथं सुप्तौ हरेः जीवज्योतिष्ट्वमित्यत आदित्यादिज्योतिर्दशायामपि हरिरेव जीवस्य

ज्ञानहेतुः सन् गमनागमनादिहेतुः किमु वाच्यं सुप्तौ ज्ञानहेतुरिति भावेनाह ॥ आत्मनैवायमित्यादि ॥ ६ ॥ ३ ॥ ६ ॥ जीवदेहेंद्रियादिभ्योतिविवेकेनात्मनोप्रसिद्धेः पृच्छति ॥ कतम इति । जीवदेहादितो विवेकेनात्मानमाह ॥ योयमिति । यो विज्ञानमयः पूर्णज्ञानरूपः । प्राणेष्विंद्रियेषु । हृद्यंतः जीवहृदयांतः । ज्योतिर्ज्ञानहेतुः सन्वर्तते पुरुषः । अयमात्मेत्यर्थः । तदाह

अस्तमितआदित्येयाज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौकिंज्योतिरेवायंपुरुषइतिवागेवास्यज्यो
तिर्भवतीतिवाचैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीतितस्माद्वैसम्राडपियत्रस्वःपाणि
र्नविनिर्ज्ञायतेऽथयत्रवागुच्चरत्युपैवतत्रन्येतीत्येवमेवैतद्याज्ञवल्क्य ॥५॥ अस्तमितआदित्येया
ज्ञवल्क्यचंद्रमस्यस्तमितेशांतेग्नौशांतायांवाचिकिंज्योतिरेवायंपुरुषइत्यात्मैवास्यज्योतिर्भव
तीत्यात्मनैवायंज्योतिषास्तेपल्ययतेकर्मकुरुतेविपल्येतीति ॥६॥ कतमआत्मेति योयंविज्ञान
मयःप्राणेषुहृद्यंतर्ज्योतिःपुरुषःससमानःसन्नुभौलोकावनुसंचरतिध्यायतीवलेलायतीवसहिस्व
प्नोभूत्वेमंलोकमतिक्रामातिमृत्योरूपाणि ॥ ७ ॥

सूत्रे । ज्योतिर्दर्शनादिति । तस्य महिमानमाह ॥ स समान इति ॥ स आत्मा । समानः निर्विकारः सन्नुभौ लोकौ भूलोकद्युलोकौ । तथा जाग्रत्सुप्तिस्थाने च जीवमादायेति शेषः । अनुसंचरति । आत्मनो महिमांतरमाह ॥ ध्यायतीवेति ।

जीवं ध्यायतीत्यंतर्णीतो णिजत्रोत्तरत्र च ज्ञेयः । जीवस्य ध्याने स्वातंत्र्यं नास्ति हरेरेवेति द्योतनार्थमिव शब्दः । लेलायतीव । ला आदाने । जीवं ग्राहयति आदापयतीत्यर्थः । स हरिः । स्वप्नो भूत्वा । जीवस्य स्वापको भूत्वा । भूलोकप्रापको भूत्वा च । मृत्यो रूपाणि बहुपापहेतुतया मृत्युरूपात्मकं जाग्रदाख्यं भूलोकाख्यं चातिक्रामति । अतिक्रामयति । जीवं दक्षिणाक्षिरूपजाग्रद्देशान्निष्क्राम्य सुप्तिदेशरूपहृदयस्थं करोति । भूलोकान्निष्क्राम्य द्युलोकस्थं करोतीत्येवमस्य प्रकरणस्य द्व्यर्थपरता ध्येया ॥६॥३॥७॥ स वा अयं पुरुषः । योयं विज्ञानमयः पुरुष इत्युक्तः । स समान इत्यादिना प्रकृतः पुरुषो हरिः । जायमानः । तस्य व्याख्या ॥

सवाऽयंपुरुषोजायमानःशरीरमभिसंपद्यमानःपाप्मभिःसंसृज्यतेसउत्क्रामन्म्रियमाणःपाप्मनोविजहाति ॥ ८ ॥

शरीरमभिसंपद्यमान इति ॥ जीवमादाय स्वयमेव पितृप्रवेशद्वारा मातृदेहं प्रविश्याभिनवदेहं प्रतिपद्यत इति स्वातंत्र्याभिप्रायेणेयमुक्तिः । यद्वा जायमानो जीवं जनयन् शरीरमभिसंपादयन्निति व्याख्येयं । संसृज्यते जीवस्य फलदानाय तत्कृतपापान्युपादत्त इति भावेन संसृज्यत इत्युक्तिः । उत्क्रामन्नित्यस्य विवरणं ॥ म्रियमाण इति । स्वयमेव जीवमादाय देहान्निष्क्रामतीति स्वातंत्र्याभिप्रायेणैवमुक्तिः । उत्क्रामयन्मारयन्निति वा व्याख्या । विजहाति । मुक्तिरूपफलदानाय जीवं पापफलादानाज्जहातीत्यर्थः । यदा तु किं ज्योतिरयं पुरुष इत्युपक्रांतः आत्मज्योतिष्ट्वेनोक्तो जीवः स वा अयं पुरुष इति परामृश्यते । तदा तु यथाश्रुत

एवार्थः । न ण्यर्थत्वेन व्याख्या ॥ ६ ॥ ३ ॥ ८ ॥ आत्मैवास्य ज्योतिरित्युक्तात्मनः स्थितिस्थानमाह । तस्य वा एतस्येति॥ तस्यैतस्य नियंतृत्वेन प्रसिद्धस्य पुरुषस्य हरेः । द्वे एव स्थाने भवतः । इदं च परलोकस्थानं चेतीति शब्दो ध्येयः । भूलोक स्वर्गलोकरूपं । जाग्रत्सुषुप्तिदेशरूपं चेति द्वे स्थाने भवत इत्यर्थः । संध्यं जाग्रत्सुषुप्तिसंधौ भवं संध्यं । तृतीयं स्वप्नस्थानं । जीवस्य स्वाप्नवासनामयपदार्थप्रदर्शनस्थानं । कंठदेश इति यावत् । तथा द्युभूसंधौ भवं संध्यं । स्वप्नस्थानशब्दितमंतरिक्षं । तृतीयं स्थान

तस्यवाएतस्यपुरुषस्यद्वेएवस्थानेभवतइदंचपरलोकस्थानंचसंध्यंतृतीयंस्वप्नस्थानंतस्मिन्संध्येस्था
नेतिष्ठन्नेतेउभेस्थानेपश्यतीदंचपरलोकस्थानंचाथयथाक्रमोयंपरलोकस्थानेभवतितमाक्रममा
क्रम्योभयान्पाप्मनआनंदांश्चपश्यतिसयत्रप्रस्वपित्यस्यलोकस्यसर्वावतोमात्रामुपादायस्वयं
विहत्यस्वयंनिर्मायस्वेनभासास्वेनज्योतिषाप्रस्वपित्यत्रायंपुरुषःस्वयंज्योतिर्भवति ॥ ९ ॥

मित्यप्यर्थः । तस्मिन्संध्ये स्थाने कंठदेशेंतरिक्षे च तिष्ठन्निदं च परलोकस्थानं चेत्युभे स्थाने जाग्रत्सुषुप्तिस्थानभूतदक्षिणाक्षिहृदय रूपस्थाने पृथिवीद्युलोकरूपस्थाने च पश्यति । अथ जाग्रत्सुषुप्तिस्थानदर्शनानंतरं । अयं पुरुषो हरिः परलोकस्थाने सुप्त्याख्ये द्युलोकाख्ये च जाग्रस्थानाद्भूलोकाच्च गंतव्ये यथाक्रमो यो मार्गो भवति । तत्क्रमं मार्गं स्वप्नाख्यं कंठदेशमंतरिक्षं चाक्रम्य प्राप्य । तत्र स्थित्वेति यावत् । उभयानित्यस्य विवरणं । पाप्मनः आनंदांश्च पश्यति । जाग्रद्दशायां भूलोके जीवेनानुभूयमानानि पापफल

भूतदुःखानि सुप्तौ द्युलोके चानुभूयमानानंदादींश्च पश्यतीत्यर्थः। स आत्मा यत्र यदा स्वपिति जीवं स्वापयति द्युलोकं वा प्रापयति। स्वापप्रकारं व्यनक्ति ॥ अस्येति । अस्य लोकस्य जनस्य । सर्वावतः आ समंतात् सर्ववतः सर्वं विषयीकुर्वज्ज्ञानानीति यावत् । मात्रामिंद्रियशक्तिं चोपादाय स्वयं विहत्यापहत्य । जीवं बाह्यव्यापारहीनं कृत्वा । स्वयं निर्माय वासनामयान्स्वप्नपदार्थानन्या दृशान्स्वर्गस्थात्रथादीनुत्पाद्य । स्वेन स्वकीयेन । स्वरूपभूतेनेति वा । भासा बाह्यप्रकाशेन । वर्चोरूपेण । स्वेन ज्योतिषांतर प्रकाशेन । प्रस्वपिति । जीवं स्वापयति स्वर्गं वा प्रापयति । अत्रास्मिन्स्वापादिकाले । अयं पुरुषो हरिः । स्वयमेव जीवस्य

नतत्ररथानरथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजतेनतत्रानंदामुदःप्रमुदोभवंत्यथानं दान्मुदःप्रमुदःसृजतेनतत्रवेशांताःपुष्कारिण्यःस्रवंत्योभवंत्यथवेशांतान्पुष्करिण्यःस्रवंत्यःसृजते सहिकर्ता ॥ १० ॥

ज्योतिर्भवतीत्यर्थः ॥ ६ ॥ ३ ॥ ९ ॥ तृतीयं स्वप्नस्थानमिति प्रकृतस्वप्नावस्थां विविच्य दर्शयति ॥ न तत्रेति । तत्र स्वप्नावस्थायामंतरिक्षे च द्युलोके च । रथाः न प्राक् स्थिताः । रथयोगा रथे युज्यमाना अश्वादयः । अथ तस्माद्रथादीन्सृजत इत्यर्थः । आनंदाः स्वरूपसुखानि । मुदः विषयजन्यसुखानि । प्रमुदः प्रकृष्टविषयजन्यसुखानि । वेशांताः वेश्यागृहाः । पुष्करिण्यः सरांसि । स्रवंत्यो नद्यः । न केवलमेतावत् । सर्वस्यापि कर्तेत्याह ॥ स हि कर्तेति । हि प्रसिद्ध इत्यर्थः । तदाह

सूत्रे। संध्ये सृष्टिराह हीति। सुषुप्तिमोक्षोभयविवक्षयैतद्वचनमित्यादि भाष्यानुसारात्। तस्य वा एतस्येत्यादिकं संसारमोक्षपरतयापि योज्यं। तथाहि। तस्यैतस्य पुरुषस्य द्वे एव स्थाने भवतः इदं च संसारावस्थारूपं परलोकस्थानं मोक्षाख्यं चेति। संध्यं तृतीयं स्वप्नस्थानं संसारमोक्षोभयसंधौ भवं तृतीयं जीवन्मुक्त्याख्यावस्थारूपं। तस्मिन् जीवन्मुक्त्याख्ये स्वप्नस्थानशब्दिते तिष्ठन्नेते उभे स्थाने। पश्यति। इदं च परलोकस्थानं च। अथ संसारमुक्त्युभयदर्शनानंतरं। अयं पुरुषो जीवः। परलोकस्थाने मोक्षे गंतव्ये। यथाक्रमो यन्मार्गो भवति। तमाक्रमं मार्गं जीवन्मुक्त्याख्यमाक्रम्योभयान्। तस्यैव विवरणं संसारेऽनुभूयमानपापफलानि दुःखानि। मोक्षेऽनुभूयमानानंदांश्च पश्यति। स भगवान्यत्र यदा प्रस्वपिति प्रस्वापयति मोक्षं प्रापयति। तं प्रकारमेव व्यनक्ति। अस्य लोकस्य मुच्यमानस्य। सर्वावतः वृत्तिरूपसर्वज्ञानानि। मात्रामिंद्रियाभिमानिदेवांश्चोपादाय। स्वयं विहृत्य सांसारिकसर्वव्यापारहीनं कृत्वा स्वयं निर्माय मुक्तौ भोगसाधनपदार्थानुत्पाद्य। स्वेन भासा स्वेन ज्योतिषा। प्रस्वपिति मोक्षं प्रापयति। अत्रास्मिन्मोक्षेऽयं पुरुषो हरिरस्य जीवस्य स्वयमेव विशेषतो ज्योतिर्भवति ज्ञानोद्बोधको भवतीत्यर्थः। न तत्रेत्यादि प्राग्वत्। तदाह सूत्रे। स्वाप्ययसंपत्योरन्यतरापेक्षमाविष्कृतं हीति ॥ ६ ॥ ३ ॥ १० ॥ स्वप्नाद्यवस्थाप्रेरको भगवानित्युक्तार्थे श्लोकाः संतीति प्रतिज्ञाय तानुदाहरति ॥ तदेत इति। तत् तत्र। स्वप्नेन सुप्त्या स्वर्गेण मोक्षेण वा। शारीरं जीवं अभिप्रहत्य संयोज्य। स्वयमसुप्तः सुप्तान्सुप्त्यवस्थागतान्स्वर्गगतान्मोक्षगतांश्च। शारीरान् जीवानभिचाकशीति पश्यति। एवं सुप्त्यवस्थादर्शनानंतरं। शुक्रं शोकेन रत्या च युक्तं जीवमादाय। पुनः स्थानं जाग्रदाख्यं भूलोकाख्यं सृष्टिस्थानं वा एतीत्यर्थः। कीदृशो

भगवानित्यत आह ॥ हिरण्मय इति । हिरौ रत्यानंदौ पूर्णौ यस्येति । स्वर्णवर्णत्वाद्वा हिरण्मयः । प्रधानहंसरूपत्वादेकहंसः पुरुष इति ॥ ६ ॥ ३ ॥ ११ ॥ न केवलं शारीर एव स्वप्नदर्शक इत्याह ॥ प्राणेनेति । अमृतः पुरुषः । प्राणेन मुख्यवायुना । अवरं दुःखहेतुतया नीचं कुलायं जीवदेहं । रक्षन् स्वप्ने जीवमादाय एकेनांशेनेति योज्यं । कुलायाच्छरीराद्बहिश्चरित्वा पुनरेति स्थानमित्यनुषज्यते । कुत्र नयतीत्यत उक्तं ॥ स ईयत इति । सोमृतो हिरण्मय एकहंसः पुरुषो हरिः यत्र कामः काम्यमानो

तदेतेश्लोकाभवंति स्वप्नेनशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीति ॥ शुक्रमादायपुनरेति
स्थानंहिरण्मयःपुरुषएकहंसः ॥११॥ प्राणेनरक्षन्नवरंकुलायंबहिष्कुलायादमृतश्चरित्वा ॥
सईयतेऽमृतोयत्रकामःहिरण्मयःपुरुषएकहंस ॥१२॥ स्वप्नांतउच्चावचमीयमानोरूपाणिदेवः
कुरुतेबहूनि ॥ उतेवस्त्रीभिःसहमोदमानोजक्षदुतेवापिभयानिपश्यन् ॥ १३ ॥

रूपादिविषयः । ईयते दृश्यते तत्र चरित्वेत्यर्थः ॥ ६ ॥ ३ ॥ १२ ॥ स्वप्नावस्थाप्रेरकः किं भूत इत्यत आह ॥ स्वप्नांत इति । देवः । स्वप्नांते स्वप्नस्थाने । उच्चावचमीयमानः वासनामयेषूच्चावचेषु गजमशकादिषु प्रविशन्स्वस्य बहूनि उच्चावचानि रूपाणि कुरुते । उत शब्दश्च शब्दार्थः । उत किंच । स्त्रीभिश्चित्प्रकृतिरूपाभिः सह मोदमान इव मोदरूपस्य स्त्रीभिः सह मोदो विडंबनं इतीव शब्दः । उत किंच । जीवस्य भयानि पश्यन्नपि । जक्षदिव हसन्निव मंदहासस्य नित्यत्वादिव शब्दः ॥ ६ ॥ ३ ॥ १३ ॥

एवमवस्थाप्रेरकं हरिं पश्यंति किं नेत्याह ॥ आराममिति । अस्य हरेरारामामाक्रीडास्थानं शरीरं स्वाप्नपदार्थजातं वा । पश्यंति तं न पश्यति कश्चनेत्याहुरितीति पदस्यान्वयः । भगवंतमजानंतं ज्ञानी बोधयेत्किं नेत्याह ॥ तमिति । अयतं यत्नहीनमयोग्यजनं प्रति । तं भगवंतं । न बोधयेदित्याहुर्विद्वांसः । कुतोयं न बोध्य इत्यत आह ॥ दुर्भिषज्यमिति । एष हरिर्यं पुरुषं । न प्रतिपद्यते न प्राप्नोति । यत्प्रतिपत्तिविषयो न भवति । सर्वथापि तु त एवोभयलिंगादिति सूत्रोक्तन्यायात् । अस्मै अस्य ।

आराममस्यपश्यंतिनतंपश्यतिकश्चनेति ॥ तंनायतंबोधयेदित्याहुर्दुर्भिषज्यंहास्मैभवतियमेष नप्रतिपद्यतेऽथोखल्वाहुर्जागरितदेशएवास्यैषइति यानिह्येवजाग्रत्पश्यतितानिसुप्तइत्यत्रायं पुरुषःस्वयंज्योतिर्भवति सोहंभगवतेसहस्रंददाम्यतऊर्ध्वंविमोक्षायब्रूहीति ॥ १४ ॥

दुर्भिषज्यं भवति अनिष्टमेव भवति । अभीष्टं न किमपि सिध्यतीत्यर्थः । असुप्तः सुप्तानभिचाकशीतीति स्वप्नाद्यवस्थायामास्थितस्य हरेर्यत्सर्वद्रष्टृत्वमुक्तं । तद्व्यनक्ति ॥ अथो खल्विति । तस्मादेव खलु स्वप्नाद्यवस्थास्वपि सर्वद्रष्टृत्वादेव खलु एष जीवस्य स्वप्न सुप्तिदेशः । अस्य हरेर्जागरितदेश एवेत्याहुरार्याः । तद्विवृणोति ॥ यानीति । यानि जाग्रत् जागरिते पश्यति । तानि सुप्ते स्वप्नसुषुप्तिकालेपि पश्यति । हि प्रसिद्धं । एवं स्वप्नसुप्त्यवस्थाप्रेरकत्वमुक्त्वोपसंहरति ॥ अत्रेति । अत्र स्वप्नसुप्त्याद्यवस्थायां । अयं पुरुषो हरिः । जीवस्य स्वयमेव ज्योतिर्भवति । एवं श्रुत्वा राजा गुरुदक्षिणां प्रतिजज्ञ इत्याह ॥ सोहमिति । त्वयोपादि

श्येहं । सहस्रं हस्त्यृषभसहस्रं । अत ऊर्ध्वं इतःपरं । विमोक्षाय विशिष्टमोक्षाय । ब्रूहीति राजोवाचेत्यर्थः ॥ ६ ॥ ३ ॥ १४ ॥
प्रागुक्तमेव हरेरवस्थाप्रेरकत्वं पूर्वं संकलय्योक्तं अधुना विविच्य सुप्तिस्वप्नजाग्रदवस्थाप्रेरकत्वं प्रत्येकं स्पष्टमाह याज्ञवल्क्यः ॥ स वा इत्यादिना । स एष हरिः । संप्रसादे सम्यक्प्रसीदति जीवोस्यामिति व्युत्पत्त्या सुप्तौ । रत्वा रमणं कृत्वा । चरित्वा । पुण्यं च पापं च दृष्ट्वैव न तु तत्कृतविकारवानित्येवकारार्थः । रत्वा चरित्वा च प्रतिन्यायमवस्थांतरं प्रवर्तनीयमिति न्यायमनुसृत्य

सवाएषएतस्मिन्संप्रसादेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्ना
यैवसयत्तत्रकिंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइत्येवमेवैतद्याज्ञवल्क्यसोहंभगवते
सहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीति ॥ १५ ॥

प्रतियोन्या पदव्या । स्वप्नायैव जीवस्य स्वप्नप्राप्तय एव । द्रवति स्वप्नदेशं गच्छति । सुप्त्यादौ दृष्टपदार्थाभिलाषेण सज्जते किं नेत्याह ॥ स यत्तत्रेति । स हरिः तत्र सुप्त्यादौ यत्किंचित्पश्यति तेन नानाविधस्वाप्नपदार्थदर्शनेनानन्वागतः अलिप्तो भवति । दर्शनकृतविकारवान्न भवतीत्यर्थः । तत्र हेतुः ॥ असंगो हीति । इत्युवाच याज्ञवल्क्य इत्यर्थः । तदुक्तमंगीकृत्य दक्षिणां प्रतिजज्ञ इत्याह वेदपुरुषः ॥ एवमेवेत्यादिना । पूर्वोक्तानामपि मोक्षार्थत्वमस्त्येव तथापि पुनः पुनर्ज्ञानांतराधिक्येनातिशयो मुक्तावस्तीति तदभिप्रायेणात ऊर्ध्वं विमोक्षाय ब्रूहीत्युक्तिरिति ज्ञेयं । एवमुत्तरखंडद्वयेऽपि योजना ध्येया ॥ ६ ॥ ३ ॥ १५ ॥

बुद्धांतायैव जाग्रत्स्थानायैवेत्यर्थः। एवं स्वप्नांतायैवेत्यस्यार्थो ध्येयः ॥ १६ ॥ अत्र स्वप्न शब्दः स्वप्नसुप्त्युभयाभिप्रायः। बाह्याज्ञानस्योभयत्र साम्येनात्रोभयोरेकीकरणेनोक्तिः ॥ १७ ॥ स्वप्नस्थानाज्जाग्रत्स्थानं जाग्रत्स्थानात्स्वप्नस्थानं भगवान्जीवमादाय यातीत्युक्तं। तद्दृष्टांतेन व्यनक्ति ॥ तद्यथेति। तन्निदर्शनं यथेत्यर्थः। यथा महामत्स्यः नद्याः पूर्वं चापरं चेत्युभे कूले अनु

सवाएषएतास्मिन्स्वप्नेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायै
वसयत्तत्रयत्किंचित्पश्यत्यनन्वागतस्तेनभवत्यसंगोह्ययंपुरुषइत्येवमेवैतद्याज्ञवल्क्यसोहंभगव
तेसहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीति ॥१६॥ सवाएषएतस्मिन्बुद्धांतेरत्वाचरित्वादृष्ट्वै
वपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिस्वप्नांतायैव ॥१७॥ तद्यथामहामत्स्यउभेकू
लेअनुसंचरतिपूर्वंचापरंचैवमेवायंपुरुषएतावुभावंतावनुसंचरतिस्वप्नांतंचबुद्धांतंच ॥ १८ ॥

संचरति। एवमेवायं पुरुषो हरिः। स्वप्नांतं च बुद्धांतं चेत्येतावंतौ स्थाने। स्वप्नशब्दोत्रोभयपर इत्युक्तं ध्येयं। अनुसंचरति ॥ ६ ॥ ३ ॥ १८ ॥ जीवस्य स्थितिप्रकारं दृष्टांतपूर्वमाह ॥ तद्यथेति। श्येनो वा सुपर्णो वाऽस्मिन्नाकाशे विपरिपत्य इतस्ततः पतित्वा। श्रांतः पक्षौ संहत्य संकुच्य। सल्लयायैव स्वनीडायैव। ध्रियते गच्छति। एवमेवायं पुरुषो जीवः जागरिते संसारे श्रांतः। एतस्मै अंताय सुप्तिमुक्तिरूपदेशाय। धावति गच्छति। यत्र सुप्तिमुक्तिदेशे। सुप्तः। आनंदरूपं सु शब्दार्थं हरिं।

प्राप्तो जीवः । न कंचन कामं कामयते । न कंचन स्वप्नं पश्यति । एतस्मा इत्यन्वयः ॥ ६ ॥ ३ ॥ १९ ॥ जीवस्य सुप्तिस्थानमाह ॥ ता वा इति । अस्य पुरुषस्य । जीवस्य शरीरे ताः प्रसिद्धाः । एताः वक्ष्यमाणाः । हिता नाम नाड्यः । यथा केशः सहस्रधा भिन्नः । तावता अणिम्ना सूक्ष्मरूपेण तिष्ठंति । तासां हितत्वं कुत इत्यतो भगवदधिष्ठानत्वादिति भावेनाह ॥

तद्यथास्मिन्नाकाशेश्येनोवासुपर्णोवाविपरिपत्यश्रांतःसंहत्यपक्षौसल्लयायैवध्रियतएवमेवायं पुरुषएतस्माअंतायधावतियत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यति ॥ १९ ॥ तावा अस्यैता।हितानामनाड्योयथाकेशःसहस्रधाभिन्नस्तावताणिम्नातिष्ठंति शुक्लस्यनीलस्यपिंगलस्यहरितस्यलोहितस्यपूर्णाअथयत्रैनंघ्नंतीवजिनंतीवहस्तीवविच्छाययतिगर्तमिवपततियदेवजाग्रद्भयंपश्यतितदत्राविद्ययामन्यतेऽथयत्रदेवइवराजेवाहमेवेदंसर्वोस्मीतिमन्यतेसोस्यपरमोलाकः ॥ २० ॥

शुक्लस्येति । शुक्लादिवर्णोपेतरूपपंचकेन पूर्णाः । अच्छिद्रतयानुप्रविष्टा इत्यर्थः । तासां मध्ये सुषुम्ना तत्र सुप्तिं यातीति शेषः । अथ यत्र । यासु कंठदेशे स्थितासु नाडीषु । स्थितो जीवः । एनं स्वप्नदृष्टमात्मानं । अन्ये घ्नंतीव पश्यति । बाह्यार्थवैलक्षण्यादिव शब्दः । कदाचित् जिनंतीव ताडयंतीव पश्यति । एवं स्वात्मानं हस्तीव गज इव । पश्यति । अन्यः कश्चनैनं विच्छाययति

भयेन विगतशोभं करोतीव पश्यति । गर्तं जीर्णं कूपादिकं प्रति । तन्मध्य इति यावत् । पततीव पश्यति । जाग्रदिव भयं च पश्यति । अत्र पश्यतीत्युक्त्या प्राप्तदर्शनस्वातंत्र्यं जीवस्य निराह ॥ यदेवेति । यदा यस्यां दशायां यद्भयादिकं जाग्रद्वस्तुवत्पश्यति तद्वस्त्वत्राविद्यया अः ब्रह्म तद्विद्यया भगवन्मत्येव मन्यते पश्यति । न स्वातंत्र्येणेत्यर्थः । सुप्तौ मुक्तौ च न कंचन कामं कामयत इत्युक्तं तर्हि कथं तिष्ठतीत्यत आह ॥ यत्रेति । यत्र सुप्तौ मुक्तौ वा देव इव राजेव । भोगापेक्षया पूर्तिर्भवतीति देवदृष्टांतः । प्रत्यक्षदर्शनार्थं राजदृष्टांत इति ज्ञेयं । अहमेवेदं सर्वोऽस्मि स्वयोग्यतया गुणपूर्णोऽस्मीति मन्यते । विषयभो(गानन्वितः)

तद्वाअस्यैतदतिच्छंदाअपहतपाप्माऽभयꣳरूपꣳतद्यथाप्रिययास्त्रियासंपरिष्वक्तोनबाह्यंकिंचन
वेदनांतरमेवमेवायंपुरुषःप्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदनांतरंतद्वाअस्यैतदाप्तकाम
मात्मकाममकामंरूपंशोकांतरं ॥ २१ ॥

गेन विना स्वरूपानंदेनैव पूर्ण इत्यहमेवेत्येव शब्दः । स हरिरस्य जीवस्य परमो लोकः आश्रयः ॥ ६ ॥ ३ ॥ २० ॥ पूर्णत्वमस्य कुतोऽभूदित्यत आह ॥ तद्वा इति । अस्य भगवतः । तत्प्रसिद्धमेवैतद्रूपं । अतिच्छंदाः अतिक्रांतानि छंदांसि येनासावतिच्छंदाः साकल्येन वेदाप्रतिपाद्यः । अपहतपाप्मा । अभयं भयहीनं रूपं । भगवद्रूपस्यैवंविधत्वे प्रकृते किमायातमित्यतो भगवत्प्राप्त्या पूर्णत्वमस्येति सदृष्टांतमाह ॥ तद्यथेति । प्रियया स्त्रिया संपरिष्वक्तः आलिंगितो बाह्यं किंचन घटादिकं न वेद

आंतरं दुःखादिकं च न वेद । स्त्रीपरिष्वंगसुखेनैव पूर्णो भवति । एवमेवायं पुरुषो जीवः प्राज्ञेन बाह्यपदार्थज्ञापकेन हरिणा संपरिष्वक्तः सुप्तः मुक्तो वा न बाह्यं किंचन वेद नांतरं भगवत्प्राप्त्या स्वयोग्यपूर्णानंदानुभवप्राप्त्या तृप्तो भवतीत्यर्थः । प्रकृत भगवद्रूपस्य गुणानाह ॥ तद्वा इति । अस्यात्मनः तत्प्रसिद्धमेतद्रूपं आप्तकामं आप्ता एव, नत्वाप्तव्याः कामा येन तदाप्तकामं । पूर्णसुखरूपत्वादात्मैव काम्यत इत्यात्मकामं विषयकामनारहितं । शोकानामंतेनाभावेनैव रमत इति । शोकं विनैव रमत इति

अत्रपिताऽपिताभवति माताऽमातालोकाअलोकादेवाअदेवावेदाअवेदाअत्रस्तेनोऽस्तेनोभ
वतिभ्रूणहाऽभ्रूणहाचांडालोऽचांडालःपौल्कसोऽपौल्कसःश्रमणोऽश्रमणस्तापसोऽतापसोन
न्वागतंपुण्येनानन्वागतंपापेनतीर्णोहितदासर्वाञ्छोकान्हृदयस्यभवति ॥ २२ ॥

शोकांतरं ॥ ६ ॥ ३ ॥ २१ ॥ यत्र सुप्तो न कंचन कामं कामयत इति । प्रकृतसुप्तिमोक्षस्वरूपं स्पष्टमाह ॥ अत्र पितेत्यादिना । उक्तगुणेन भगवता संपरिष्वक्तो जीवः पूर्वं पुत्राणां पितात्र सुप्तो मुक्तो वाऽपिता भवति । पुत्रादिकृतश्राद्धादिफलं न भुंक्त इत्यर्थः । पूर्वं स्वपुत्राणां माताऽत्र सुप्तो मुक्तो अमाता भवति । पुत्रदुःखेनादुःखित्वात् । एवमग्रेपि योजना । लोकाः लोकाभिमानिनः । अलोकाः लोकाभिमानहीनाः । देवाः देवाभिमानिनः । अदेवाः वर्षणादिस्वस्वजगद्व्यापारहीनाः प्रजाकृतयज्ञादिभुजो नेति

चार्थः । पूर्वं वेदाः वेदाभिमानिनः । अवेदाः वेदाभिमानहीनाः । अस्तेन इत्यादेः पापफलस्याननुभवाभिप्रायो ध्येयः । श्रमणो यतिः । अश्रमणः यतिधर्मादुद्गतरूपत्वादतापसः तपश्चरणादुत्थितत्वात् । पापेन प्राचीनानिष्टपुण्येनानन्वागतः अलिप्तः । पापफलाप्ययात्पापेनानन्वागतः । तदा सुप्तौ मुक्तौ च सर्वाञ्छोकान् तीर्णोऽतिक्रांतो। हृदयस्य हृद्यत इति हृदयस्थस्य हरेः । शेषभूतो भवति । हि यतोत इति ॥ ६ ॥ ३ ॥ २२ ॥ देशकालांतरे भगवानिवान्योप्यवस्थाप्रेरकोस्ति किमित्याशंकां सयुक्तिकं निराह ॥ यद्वैतमित्यादिना । पूर्वत्र प्रकृतं ब्रह्म यद्वस्तु द्वैतं द्वैतत्वेन समाभ्यधिकत्वेन न पश्यति । तत् द्वितीयं समाभ्यधिकं

यद्वैतन्नपश्यतिपश्यन्वैतन्नपश्यतिनहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्वितीयम
स्तिततोन्यद्विभक्तंयत्पश्येत् ॥ २३ ॥

वस्तु न तु नैवास्ति । भगवतोऽदर्शनमात्रेण कथं तदभाव इत्यत आह ॥ पश्यन्वैतन्न पश्यतीति । विद्यमानं सर्वं पश्यन्नपि तन्न पश्यत्यतो नास्त्येव तदिति भावः । ननु विद्यमानमपि द्वैतं भ्रांत्या न पश्यतीति किं न स्यादित्यत आह ॥ नहीति । विपरिलोपोऽयथार्थत्वं न ह्यस्तीत्यर्थः । कुत इत्यत उक्तं ॥ अविनाशित्वान्नित्यत्वान्निर्दोषत्वादिति वा । दुष्टेषु नष्ट पदप्रयोगदर्शनात् । व्यासतीर्थटीकायां तु पश्यन्वै तद्वैतं वस्तु नेत्येव पश्यत्यतो नेत्युक्त्वा । नास्तीति प्रत्ययो भ्रांतिः किं न स्यादित्यतो न हीति वाक्यं । इतोपि द्वैतं नेत्याह ॥ तत इति । ततो भगवतोन्यद्द्वितीयं द्रष्टृ । तन्नैवास्ति । यद्द्रष्टृ ततो हरेर्विभक्तं

विरुद्धं । पश्येदतोन्यस्य द्रष्टुरभावात्सर्वद्रष्ट्रा भगवता भ्रांतिहीनेनादृष्टत्वात्प्रत्युत नास्तीत्येव दृष्टत्वात् द्वैत शब्दितं हरेः समाभ्याधिकमवस्थाप्रेरकमन्यद्वस्तु नेत्यर्थ उक्तः । तत्त्वनिर्णयटीकायां तु शुक्लस्य नीलस्येत्यादिपूर्ववाक्ये परस्परं विलक्षणनानारूपवद्भिर्भगवद्रूपैर्नाडीनां व्याप्तत्वमुक्तं । तेन तद्रूपाणां भेदः प्राप्तः । तथा तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपमिति षष्ठ्या रूपरूपिणोर्भेदश्च तन्निराकर्तुं यद्वैतमिति वाक्यं । हृदयस्य भवतीति हृदय शब्देन प्रकृतं ब्रह्म भगवान् यद्यस्माच्छुक्लादिकं रूपं स्वतः अन्योन्यं द्वैतं भिन्नं न पश्यति । तत् द्वितीयं भिन्नं न तु नास्त्येव । तावता कथमभाव इत्यतः पश्यन्सर्वज्ञोपि तं न पश्यति । एवं तर्हि

यद्वैतन्नजिघ्रतिजिघ्रन्वैतन्नजिघ्रतिनहिघ्रातुर्घ्रातेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्वितीय

मास्तिततोन्यद्विभक्तंयज्जिघ्रेत् ॥ २४ ॥

जीवजडात्मकमपि विश्वं किं ततो न भिन्नं नेत्याह । यद्यस्माद्भगवान् । यत् जीवजडादिकं विभक्तं स्वतो भिन्नं पश्येत् तस्मात्ततोन्यदेव । भगवता भेदेन दृष्टत्वेपि कुतो भिन्नमित्यत उच्यते ॥ न हीति । अविनाशित्वान्निर्दोषत्वादित्युपलक्षणं । अबाधितत्वाच्चेत्यर्थ उक्तः । तदुक्तं भाष्ये । यदवतारादिकं द्वैतत्वेन न पश्यति न तु तत्ततो द्वितीयमित्यादि ॥ ६ ॥ ३ ॥ २३ ॥ न केवलं भगवान् चक्षुषा द्वितीयं न पश्यतीति किंतु । सर्वेंद्रियैर्द्वितीयं न पश्यतीत्याह ॥ यद्वैतं न जिघ्रतीत्यादिना

खंडसप्तकेन । योजना तु प्राग्वदेव ज्ञेया । घ्रातेः घ्राणसंबंधिज्ञानस्य ॥६॥३॥२४॥ रसयतेः रसज्ञानस्य ॥२५॥ वक्तेः

यद्वैतन्नरसयतेरसयन्वैतन्नरसयतेनहिरसयितूरसयतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयद्रसयेत् ॥२५॥ यद्वैतन्नवदतिवदन्वैतन्नवदतिनहिवक्तुर्वक्तेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयद्वदेत् ॥२६॥ यद्वैतन्नशृणोति शृण्वन्वैतन्नशृणोतिनहिश्रोतुःश्रुतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्तिततोन्यद्विभक्तंयच्छृणुयात् ॥२७॥ यद्वैतन्नमनुतेमन्वानोवैतन्नमनुतेनहिमंतुर्मतेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्ति ततोन्यद्विभक्तंयन्मन्वीत ॥२८॥ यद्वैतन्नस्पृशतिस्पृशन्वैतन्न स्पृशति नहिस्प्रष्टुःस्पृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वान्नतुतद्द्वितीयमस्ति ततोन्यद्विभक्तंयत्स्पृशेत् ॥ २९ ॥

वागिंद्रियव्यापारस्य । विपरिलोपोऽसत्यत्वं ॥२६॥ श्रुतेः श्रोत्रज्ञानस्य ॥२७॥ मतेः मानसज्ञानस्य ॥ २८ ॥ स्पृष्टेः स्पार्शनज्ञानस्य ॥२९॥ विज्ञातेर्विशेषज्ञानस्य ॥ ६ ॥ ३ ॥ ३० ॥ ततोन्यद्विभक्तं यत् पश्येत्ततोन्यद्विभक्तं यज्जिघ्रेदित्यादिनोक्तमुपसंहरति ॥ यत्र

वान्यादिवेति । यत्र यदा । अन्यद्भगवद्व्यतिरिक्तं । स्वतंत्रमिव भवेत् । इव शब्दोऽल्पस्वातंत्र्यवान्स्यादित्यर्थे । तत्र तदैवान्यो भगवदन्यः पुरुषोऽन्यद्भगवद्दृष्टादन्यत्पश्येज्जिघ्रेदित्यादि युज्यते । तदन्यत्स्वतंत्रं नास्तीत्यर्थः ॥३१॥ एवं द्रष्ट्रंतरनिषेधमुपसंहृत्य स एव सर्वद्रष्टेत्युक्तमुपसंहरतीति वा । अन्यस्य स्वतंत्रद्रष्ट्रंतरस्याभावे यद्वैतं न पश्यतीत्युक्तं सुस्थमित्याहेति वा सलिल एको

यद्वैतन्नविजानातिविजानन्वैतन्नविजानाति नहिविज्ञातुर्विज्ञातेर्विपरिलोपोविद्यतेऽविनाशि
त्वान्नतुतद्वितीयमस्ति ततोन्यद्विभक्तंयद्विजानीयात् ॥३०॥ यत्रवाअन्यदिवस्यात्तत्रान्यो
न्यत्पश्येदन्योन्याज्जिघ्रेदन्योन्यद्रसयेदन्योन्यद्वदेदन्योन्यच्छृणुयादन्योन्यन्मन्वीतान्योन्यत्स्पृ
शेदन्योन्यद्विजानीयात् ॥३१॥ सलिलएकोद्रष्टाद्वैतोभवत्येषब्रह्मलोकःसम्राडितिहैनमनुश
शासयाज्ञवल्क्यएषास्यपरमागतिरेषास्यपरमासंपदेषोस्यपरमोलोकएषोस्यपरमआनंदएतस्यै
वानंदस्यान्यानिभूतानिमात्रामुपजीवंति ॥ ३२ ॥

द्रष्टेत्यादेर्गमनिका ध्येया । सलिले प्रकृतिरूपे सलील इति प्रथमा वा । एकः समवर्जितः । अद्वितीयः विरोधिद्वितीयशून्यः । द्रष्टा भवति तिष्ठति । विष्णुरेव स्वतंत्रो द्रष्टा नान्य इति कुत इत्यत आह ॥ एष इति । हे सम्राट् एष आत्मा । ब्रह्म पूर्णं लोको ज्ञानं यस्यासौ ब्रह्मलोक इति हैनं जनकमनुशशास याज्ञवल्क्यः । हरेर्महिमांतरमाह ॥ एषास्येति । अस्य हरेरेषा गतिः परमा

सर्वगतत्वात् । अस्यैषा संपत् परमा पूर्णैश्वर्यात् । अस्यैष लोकः ज्ञानं । परमः सर्वविषयकत्वात् । अस्यैष आनंदः परमः पूर्णत्वात् । आनंदस्य परमतां व्यनक्ति ॥ एतस्यैवेति । अन्यानि भूतानि ब्रह्मादिमुक्तान्यप्येतस्य हरेरानंदस्य मात्रां प्रतिबिंब

सयोहवैमनुष्याणाꣳराद्धःसमृद्धोभवत्यन्येषामधिपतिस्सर्वैर्मानुष्यकैर्भोगैःसंपन्नतमःसमनुष्या णांपरमआनंदोऽथयेशतंमनुष्याणामानंदाःसएकःपितॄणांजितलोकानामानंदोऽथयेशतंपितॄणां जितलोकानामानंदाःसएकोगंधर्वलोकआनंदोऽथयेशतंगंधर्वलोकआनंदाःसएकःकर्मदेवानामानं दोयेकर्मणादेवत्वमभिसंपद्यंतेऽथयेशतंकर्मदेवानामानंदाःसएकआजानदेवानामानंदोयश्चश्रोत्रि योऽवृजिनोऽकामहतोऽथयेशतमाजानदेवानामानंदाःसएकःप्रजापतिलोकआनंदोयश्चश्रोत्रि योऽवृजिनोऽकामहतोऽथयेशतंप्रजापतिलोकआनंदाःसएकोब्रह्मलोकआनंदोयश्चश्रोत्रियोऽवृ जिनोऽकामहतोऽथैषएवपरमआनंद एषब्रह्मलोकःसम्राडितिहोवाचयाज्ञवल्क्यःसोहंभगवते सहस्रंददाम्यतऊर्ध्वंविमोक्षायैवब्रूहीत्यत्रहयाज्ञवल्क्योबिभयांचकारमेधावीराजासर्वेभ्योमां तेभ्यउदरौत्सीदिति ॥ ३३ ॥

रूपाविष्टुष्टरूमुपजीवंति अनुभवंति ॥६॥३॥३२॥ किमेकप्रकारेण मुक्तानि भूतानि आनंदमात्रामुपजीवंतीत्यतः तारतम्येनेत्याह ॥ स य इत्यादिना । स प्रसिद्धः । योयं मनुष्याणां चक्रवर्तिनां । राद्धः मुक्तः स योग्यसाधनपूर्तिमत्त्वेन समृद्धः अतो राद्ध

इत्यर्थः । अन्येषामधिपतिः । मानुष्यकैर्मनुष्यत्वदशायां ज्ञानोत्तरकृतदानादिफलभूतैर्भोगैः संपन्नतमो भवति । स मनुष्याणां परम आनंदः आविर्भूतस्वरूपानंदः उक्तगुणविशिष्टस्य य आनंदः स पूर्वावधिभूतो मानुषानंद उच्यत इत्यर्थः । अथेत्यर्थांतरे । ये मानुषानंदा उक्ताः ते शतगुणिताश्चेत्स एकः पितॄणामानंद इत्यर्थः । पितॄन्विशिनष्टि ॥ जितेति । जितलोकानां प्राप्तस्वयोग्य पूर्णब्रह्मज्ञानानां । मुक्तानामिति यावत् । अत्र प्रकरणे लोक शब्दो ज्ञानपरः । अथोक्तकक्ष्योत्तरत इत्यर्थः । एवमग्रेपि । जित लोकानां मुक्तानां पितॄणां ये शतमानंदाः स एको गंधर्वलोके । गंधर्वाणां मुक्तौ । गंधर्वाणां लोके ब्रह्मज्ञाने नित्योदितब्रह्म ज्ञानदशायामिति यावत् । मुक्तावेव नित्योदितज्ञानमिति गंधर्वलोकपदेन गंधर्वमुक्त्यर्थलाभो ध्येयः । एवमग्रेप्यर्थो ज्ञेयः । कर्मदेवाः क इत्यत आह ॥ य इति । ये कर्मणा देवत्वं प्राप्नुवंति ते कर्मदेवा इति पूर्वेणान्वयः । आजानदेवानां जातेभ्यो वराणामिंद्रादी नामित्यर्थः । तान्विशिनष्टि मुक्तत्वज्ञापनाय ॥ यश्चेति । वचनव्यत्ययः । ये श्रोत्रियाः प्राप्तश्रवणफलाः । अवृजिनो दुःखहीनाः। अकामहताः कामोपद्रवहीनाश्चेति च शब्दान्वयः । तेषां आजानजदेवानामित्यन्वयः । प्रजापतीनां रुद्राणां शेषाणामिति यावत् । लोके ब्रह्मज्ञाने प्रागुक्तदिशा । मुक्ताविति यावत् । ये प्रजापतयः श्रोत्रियत्वादिगुणकास्तेषामिति प्राग्वज्ज्ञेयं । ब्रह्मलोके ब्रह्मणां विरिंचानां विष्णुज्ञाने मुक्ताविति यावत् । यश्चेति प्राग्वत् । ज्ञानपादीयानुव्याख्याने तु तस्मादमुक्तसुखगं तारतम्यं पृथक् पृथक् । उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतः । आहेति मुक्तामुक्तपरतयास्यार्थ उक्तः । हे सम्राट् एवं तारतम्यस्थितानि

ब्रह्मादीनि मुक्तान्येतस्यैवानंदस्य मात्रामुपजीवंति यस्मादथ तस्मादेष एव परमानंदः निरतिशयपूर्णानंदः। एष ब्रह्मलोकः पूर्णज्ञानः। इति होवाच याज्ञवल्क्यः। सम्राडाह ॥ सोऽहमिति। अत्र एवं राज्ञा पृष्टे सति। याज्ञवल्क्यो बिभयांचकार भीतवान्। भयहेतुमाह। मेधावी प्रज्ञावान्राजा सर्वेभ्यः प्रश्नकर्तृभ्यः तेभ्यः आश्वलादिभ्यः मां उदरौत्सीदुत्कृष्टतयाऽवरोधं कृतवानिति। रहस्यं स्वायोग्यं। यदि मामेप पृच्छति। तदा तदपि वक्तव्यं भविष्यति त्वत्पृष्टं सर्वं वक्ष्यामीति राज्ञे वरस्य दत्तत्वादिति

सवाएषएतस्मिन्स्वप्नांतेरत्वाचरित्वादृष्ट्वैवपुण्यंचपापंचपुनःप्रतिन्यायंप्रतियोन्याद्रवतिबुद्धांतायैव ॥३४॥ तद्यथाऽनःसुसमाहितमुत्सर्जद्यायादेवमेवायंशारीरआत्माप्राज्ञेनात्मनाऽन्वारूढउत्सर्जद्यातियत्रैतदूर्ध्वोच्छ्वासीभवति ॥ ३५ ॥

भीतिरभूदिति भावः ॥६॥३॥३३॥ अतिप्रयत्नतो यावत्सुखादिकं मुक्तौ प्राप्तुं शक्यं तावतः संप्राप्त्यै ज्ञानपरंपरां क्रमात्प्रष्टुकामः एकमेकं विज्ञाय पुनस्ततस्ततो वरं ज्ञानं मां विमोक्षाय ब्रूहीति राज्ञा पृष्टो विद्यांतरमाह ॥ स वा इति। जीवास्वातंत्र्यज्ञापनाय जीवमादाय हरिरेव जाग्रदादिषु संयातीति नियम इति ज्ञापयितुमुक्तमेव तात्पर्यज्ञापनाय पुनरनूदितमिति ज्ञेयं ॥ ३४ ॥ एवं सुप्त्याद्यवस्था ईशाधीनेत्युक्तं अधुना प्रतिमरणं मुक्तिकालीनं मरणं चेशायत्तमिति भावेन मरणस्वरूपमाह ॥ तद्यथेति।

तन्निदर्शनं यथा । सुसमाहितं पुमधिष्ठितं । अनः शकटं । ग्रामादिकं उत्सर्जद्यायात् गच्छेत् । एवमेवायं शारीरः शरीरमानी आत्मा जीवः । यत्र यदा । ऊर्ध्वोच्छ्वासी भवति । एतदेतस्मिन्काले । प्राज्ञेनात्मना हरिणान्वारूढः देहं उत्सर्जन्परित्यजन्याति ॥३५॥ न केवलं साधारणमरण एव भगवतान्वारूढो जीवः किंतु मोक्षरूपमरणेपीत्याह ॥ स इति । सोयं जीवो । यत्र यदा । अणिमानं न्येति निगच्छति । भगवत्प्राप्तिरूपमोक्षं गंतुमिच्छतीति यावत् । तदा प्राज्ञेनात्मनान्वारूढ इति पूर्वेणान्वयः । कदा

सयत्रायमणिमानंन्येतिजरयावोपतपतावाणिमानंनिगच्छतितद्यथाम्रंवोदुंबरंवापिप्पलंवाबं
धनात्प्रमुच्यतएवमेवायंपुरुषएभ्योंगेभ्यःसंप्रमुच्यपुनःप्रतिन्यायंप्रतियोन्याद्रवतिप्राणायैव ॥३६॥

भगवंतमेतीत्यत आह ॥ जरयेति । जरया चरमवयोधर्मेण । उपतपता रोगादिना वाऽणिमानं निगच्छति । ननु सर्वेपि जरया चरमवयसाऽणिमानं यंत्यतः कथमुपतपता वेति पक्षांतरोक्तिरित्यतो नायं नियम इति दृष्टांतोक्तिपूर्वमाह ॥ तद्यथेति । तन्निदर्शनं यथा । आम्रं ओदुंबरं वा पिप्पलमश्वत्थं वा बंधनात्प्रमुच्यते । अत्राम्रादिशब्दा आम्रादिफलपराः । आम्रादिफलं आम्रादि वृक्षात् पतति । एवमेवायं पुरुषो जीवः । कलौ बाल्ये । त्रेतायां मध्यमे वयसि । कृते चरमे वयसि । एभ्योंगेभ्यः शरीरावयवेभ्यः। शरीरादित इति वा । संप्रमुच्य प्रतिन्यायं पूर्वावस्थातोवस्थांतरं प्राप्यमिति न्यायमनुसृत्य । प्राणायैव वायव एव द्रवति । वायु

द्वारा भगवंतं प्राप्य भगवदधिष्ठितो गच्छतीति ॥६॥३॥३६॥ स जीवो यदा भगवंतं गच्छति तदा विशेषमाह ॥ तद्यथेति । तन्निदर्शनं यथा आयांतं आगच्छंतं । राजानं दृष्ट्वोग्राः अंगरक्षकाः । प्रत्येनसो योधाः । सूताः सारथयः । ग्रामण्यश्च भूपालाः । सूतग्रामण्यो जनपदस्थाः राजसमीपस्थाश्चेति । तत्र जनपदस्थाः सूतग्रामण्यः । अन्नैः पानैरावसथैरावासस्थानैः पूजां प्रतिकल्पंते

तद्यथाराजानमायांतमुग्राःप्रत्येनसःसूतग्रामण्योऽन्नैःपानैरावसथैःप्रतिकल्पंतेऽयमायात्ययमाग च्छतीत्येवꣳहैवंविदꣳसर्वाणिभूतानिप्रतिकल्पंत इदंब्रह्मयातीदमागच्छतीति ॥ ३७ ॥

तद्यथाराजानंप्रयियासंतमुग्राःप्रत्येनसःसूतग्रामण्योभिसमायंत्येवमेवेममात्मानमंतकालेसर्वे प्राणाअभिसमायंतियत्रैतदूर्ध्वोच्छ्वासीभवति ॥ ३८ ॥ इतिज्योतिर्ब्राह्मणं ॥ ६ ॥ ३ ॥

कल्पयंति । कथं तेषां राजागमनज्ञानमित्यत आह ॥ अयमिति । अयं ध्वज आगच्छति तस्मादयं राजा आयातीति ज्ञात्वा प्रतिकल्पंत इत्यन्वयः । एवमेवं विदं पूर्वोक्तप्रकारेण भगवदपरोक्षज्ञानिनमायांतं दृष्ट्वा सर्वाणि भूतानि अर्चिरादिदैवतानि पूजां प्रतिकल्पंते । ननु ज्ञानिन्यागते देवाः कुतस्तत्पूजां कुर्युरुग्रादिवत्तेषां तद्भृत्यत्वाभावादित्यत आह ॥ इदमिति । इदं मुक्तजीव स्वरूपं आगच्छत्यनेन सहेदं परं ब्रह्मायातीति तत्पूजार्थं प्रतिकल्पंत इत्यर्थः ॥ ६ ॥ ३ ॥ ३७ ॥ मुक्तजीवमादाय भगवति ॥ १०१ ॥

प्रतिष्ठमाने शरीरस्थाः प्राणाः किं कुर्वंतीत्यतः तेपि भगवंतमनुगच्छंतीति सदृष्टांतमाह ॥ तद्यथेति । राजानं प्रयियासंतं गंतुमिच्छंतं । राज्ञा सह स्थिताः उग्राः प्रत्येनसः सूतग्रामण्यः । अभिसमायंति । एवमेवेममात्मानं मुक्तमादाय गच्छंतं । तं हरिं अंतकाले मुक्तिकाले । सर्वे प्राणाः शरीरस्थाः वागादींद्रियदेवाः अभितः समायंति । अग्न्यादिगतिश्रुतेरिति सूत्रं तु संसारि विषयं । अंतकालमेवाह ॥ यत्रेति ॥ ६ ॥ ३ ॥ ३८ ॥ इति ज्योतिर्ब्राह्मणं ॥ तद्यथाऽन इत्यादिनोक्तं प्रतिमरणप्रकारं अंत्यमरणप्रकारं च विविच्य दर्शयति ॥ स यत्रायमात्मेत्यादिना । स पूर्वोक्तः प्रसिद्धः । आत्मा जीवो । यत्र यदा ।

सयत्रायमात्माबल्यंन्येत्यसंमोहमिवन्येत्यथैनमेतेप्राणाअभिसमायंतिसएतास्तेजोमात्रासम
भ्याददानोहृदयमेवान्ववक्रामतिसयत्रैषचाक्षुषःपुरुषःपराङ्पर्यावर्ततेऽथारूपज्ञोभवति ॥ १ ॥

बल्यं सर्वेषां बलकारिणं हरिं । नितरामेत्य प्राप्य । मृतेः पूर्वं संमोहमिव विमुग्धत्वमिव । न्येति प्राप्नोति । मृतेः पूर्वं विमुग्धत्वं प्राप्य यदा विष्णुं यातीति यावत् । अथ तदा । एनं बल्यं विष्णुं । एते प्राणाः तत्तत्स्थानस्थिताः । तेजः स्वरूपिणो देवाः । अभिसमायंति । स जाग्रत्प्रवर्तकत्वेन चक्षुःस्थो हरिः । तेजोमात्राः तेजः स्वरूपभूताः देवताः । समभ्याददानः चक्षुःस्थानाद्धृदय मेवान्ववक्रामति गच्छति । स एष चाक्षुषो दक्षिणाक्षिस्थः । पुरुषो भगवान् । पराङ् बहिर्व्यापारं कुर्वन् स्थितो यत्र यदा प्रत्यङ् पर्यावर्तते । अंतरागच्छति । हृदयं प्रति गच्छति । अथ तदा । विष्ण्वाश्रितो जीवः । अरूपज्ञो भवति । तदा न किंचिद्बाह्यं

जानातीत्यर्थः ॥ ६ ॥ ४ ॥ १ ॥ कुतो न जानातीत्यतोऽज्ञत्वनिमित्तं वदन्प्राज्ञत्वमुपलक्षणमिति भावेनाह ॥ एकी भवतीति । जीवेश्वरौ सदा हृदि स्थौ संतौ । जाग्रद्दशायां रूपांतरैश्चक्षुरादिस्थानेषु निष्ठतः । यदा हरिः चक्षुरादिस्थरूपैः हृदयस्थरूपेण चैकी भवति तदा जीवोपि चक्षुरादिस्थरूपैः हृदयस्थस्वरूपेणैकी भवति । तदा जीवो बाह्यं न पश्यति न जिघ्रतीत्याहुः प्राज्ञा इत्यर्थः ।

एकीभवतिनपश्यतीत्याहुरेकीभवतिनजिघ्रतीत्याहुरेकीभवतिनरसयतइत्याहुरेकीभवतिनव
दतीत्याहुरेकीभवतिनशृणोतीत्याहुरेकीभवतिनमनुतइत्याहुरेकीभवतिनस्पृशतीत्याहुरेकी
भवतिनविजानातीत्याहुस्तस्यहैतस्यहृदयस्याग्रंप्रद्योततेतेनप्रद्योतेनैषआत्मानिष्क्रामतिचक्षु
ष्टोवामूर्ध्नोवान्येभ्योवाशरीरदेशेभ्यस्तमुत्क्रामंतंप्राणोनूत्क्रामतिप्राणमनूत्क्रामंतꣳसर्वेप्राणा
अनूत्क्रामंतिसविज्ञानोभवतिसविज्ञानमेवान्ववक्रामतितंविद्याकर्मणीसमन्वारभेतेपूर्वप्रज्ञाच ॥ २ ॥

एतच्च देवाद्युत्तमजीवविषयं ध्येयं । अन्येषां तु सदा हृदयदेश एवावस्थानेन जाग्रदादौ दक्षिणाक्ष्यादिस्थानेऽभिमानातिशय मात्रत्वात् । उक्तं च तत्त्वभाष्ये द्वितीयाध्याये । न हि जीवस्याक्षाणि पृथक् शिरोबाह्वादिकं विद्यते । हृदिस्थमेव हि तस्य रूप मित्यादि । एकीभावानंतरं किं भवतीत्यत आह ॥ तस्य हैतस्येति । भगवंतं प्राप्तस्य स्वकीयरूपैरेकीभावं प्राप्तस्य बाह्यपदार्थाज्ञस्य जीवस्य ज्ञानिनः हृदयस्याग्रं भगवत्तेजसा प्रद्योतते प्रकाशते । तथाच सूत्रं । तदोकोग्रज्वलनं तत्प्रकाशितद्वार इत्यादि । तेन

प्रद्योतितेन प्रकाशितनाडीद्वारेण। एष आत्मा हरिः। जीवमादाय शरीरान्निष्क्रामति। केन द्वारेणेत्यत आह ॥ चक्षुषो वेत्यादि। यदि मुच्यमानो जीवः सूर्यलोके चिरं स्थित्वा मुक्तिमेति। तदा तं जीवमादाय आदित्याभिमतचक्षुर्द्वारा एष आत्मा हरिः निष्क्रामति। यदा तु सत्यलोके वासमेति। तदा मूर्ध्न एव निष्क्रामति। यदा तु श्रोत्रादिमानिलोके स्थित्वा पश्चान्मुक्तिं गंतुं योग्यः तदा तमादायान्येभ्यः शरीरदेशेभ्यः तत्तद्देवताभिमन्यमानदेहावयवेभ्यो निर्यातीत्यर्थः। एवं उत्क्रामंतं विष्णुमनुसृत्य प्राणो मुख्यवायुरुत्क्रामति। एनमुत्क्रामंतं प्राणमनुसृत्य सर्वे प्राणाः शरीरस्थाः देवाः उत्क्रामंति। तदा हरिः कथं भवतीत्यत आह ॥

तद्यथातृणजलायुकातृणस्यांतंगत्वाअन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳशरीरंनिहत्याविद्यांगमयित्वान्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥

स विज्ञान इति। स विष्णुः विज्ञानेन जीवेन सहितो भवति। स भगवान्विज्ञानं जीवमेवान्ववक्रामत्यारूढो गच्छति। एनमारूह्य गच्छंतं तं भगवंतमनुसृत्य विद्याकर्मणी विद्याकर्माभिमानिनौ विरिंचगरुडौ। समन्वारभेते गच्छतः। पूर्वप्रज्ञा योग्यताभिमानिनी रमा चान्वारभत इति ॥६॥४॥२॥ तेनैष निष्क्रामतीत्युक्तं निष्क्रमणं विशदयति ॥ तद्यथेति। तन्निदर्शनं यथेति। तृणज (लायुका)लूका जंतुविशेषः तृणस्यांतं गत्वा अन्यमाक्रममवष्टंभभूतं तृणांतरं। आक्रम्य प्राप्य। आत्मानं पूर्वतृणादुपसंहरति आदत्ते। पूर्वतृणं परित्यजतीति यावत्। एवमेवायमात्मा हरिर्जीवस्य शरीरं निहत्य निवर्त्य विद्यादानेनाविद्यां गमयित्वाऽन्यमाक्रमं

जीवस्य शुद्धं स्वरूपमाक्रम्यात्मानं जीवस्याशुद्धरूपादुपसंहरति आदत्ते ॥६॥४॥३॥ जीवं नवतरं करोतीति प्रागभिप्रेतमर्थं सदृष्टांत माह ॥ तद्यथेति। पेशस्कारी सुवर्णकारः। पेशसः सुवर्णस्य। मात्रामंशं। उपादाय तद्गतमलं निहत्य शुद्धमंशमुपादायेत्यर्थः।

तद्यथापेशस्कारीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरंरूपंतनुतएवमेवायमात्मेदंशरीरंनिहत्याविद्यांगमयित्वान्यन्नवतरंकल्याणतरंरूपंकुरुतेपित्र्यंवागांधर्वंवादैवंवाप्राजापत्यंवाब्राह्मंवान्येषांवाभूतानां ॥४॥ सवाअयमात्माब्रह्माविज्ञानमयोमनोमयःप्राणमयश्चक्षुर्मयःश्रोत्रमयःपृथिवीमयअपोमयोवायुमयआकाशमयस्तेजोमयोतेजोमयःकाममयोकाममयःक्रोधमयोक्रोधमयोधर्ममयोधर्ममयस्सर्वमयस्तद्यदेतादिदंमयोदोमयइतियथाकारीयथाचारीतथाभवतिसाधुकारीसाधुर्भवतिपापकारीपापोभवतिपुण्यःपुण्येनकर्मणाभवतिपापःपापेनाथोखल्वाहुःकाममयएवायंपुरुषइतिसयथाकामोभवतितत्क्रतुर्भवतियत्क्रतुर्भवतितत्कर्मकुरुतेयत्कर्मकुरुतेतदभिसंपद्यते ॥ ५ ॥

अन्यदिव नवतरं प्रागननुभूतं कल्याणतरं मलापकर्षणाद्रूपं कटकादिकं। तनुते कुरुते। एवमेवायमात्मा हरिः जीवस्य स्वर्णमलस्थानीयमिदं शरीरं निहत्याविद्यां गमयित्वेत्यादि व्यक्तं। प्राजापत्यं प्रजापतिशब्दितरुद्रसंबंधि। ब्राह्मं ब्रह्मसंबंधि। अन्येषां भूतानां मनुष्योत्तमानां रूपमित्यन्वेति ॥ ६ ॥ ४ ॥ ४ ॥ नानाप्रकारेण पित्रादिजीवरूपं करोतीत्युक्तं तद्घटनाय तस्य महिमानमाह ॥

स वा इति । शुद्धमुक्तस्वरूपकर्तृत्वेन प्रकृतो हरिः दूरस्थत्वात्स इत्युक्तो वै । समीपस्थत्वादयामित्युच्यते । आत्मा व्याप्तः । ब्रह्म गुणपूर्णः । विज्ञानमयः पूर्णज्ञानस्वरूपः । अत्र सर्वत्र मयट् प्राचुर्यार्थः स्वरूपार्थश्च ध्येयः । सर्वमंतृस्वरूपत्वान्मनोमयः । बलपूर्णस्वरूपत्वात्प्राणमयः । सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मयः । सर्वश्रोतृस्वरूपत्वाच्छ्रोत्रमयः । सर्वाधारस्वरूपत्वात्सुगंधस्वरूपत्वाच्च पृथिवीमयः । सर्वतृप्तिकरत्वादापोमयः । अम्मय इति वक्तव्ये छांदसो निर्देशः । सर्वकर्तृस्वरूपत्वाद्वायुमयः । अवकाशप्रदत्वादाकाशमयः । पूर्णतेजःस्वरूपत्वात्तेजोमयः । अप्राकृततेजःस्वरूपत्वादतेजोमयः । सृष्ट्यादीच्छास्वरूपत्वात्काममयः । अकाममयः प्राकृतेच्छाशून्यः । सर्वदुष्टप्रतीपत्वात्क्रोधमयः । अक्रोधमयः जीवक्रोधसदृशक्रोधशून्यः । सुखादिधर्मस्वरूपत्वाद्धर्ममयः । अधर्ममयः प्राकृतधर्मशून्यः । सर्वमयः प्रकृत्यादिसर्वप्रधानः । सर्वगुणप्रधानश्च । अत्रातेजोमयोऽक्रोधमय इत्याद्युक्तिरुपलक्षणं । पूर्वत्र विज्ञानमय इत्यादावपि सर्वत्राविज्ञानमयोऽमनोमयोऽप्राणमयोऽचक्षुर्मय इत्यादि तन्निषेधवाक्यानि ग्राह्याणि । तेषामर्थस्तु प्राकृतज्ञानमनआदिलक्षणज्ञानादिरहितत्वादविज्ञानमय इत्यादिरूपेणाप्राकृतस्वरूपत्वादतन्मय इतीरित इति भाष्ये व्यक्तः । तत् अतीतवर्तमानकालयोरेकप्रकारं । यत् ब्रह्मांडाच्छरीराद्वाबहिरंतश्चैकप्रकारं । एतत् वर्तमानभविष्यत्कालयोरेकप्रकारं । वर्तमान जगत्प्रधानत्वादिदं मयः । वर्तमानस्वरूपत्वाच्चेदं मयः । अतीतानागतप्रधानत्वादतीतानागतस्वरूपत्वाच्चादो मयः । यदर्थं हरेः स वा इत्यादिना महिमोक्तः तदाह ॥ इतीति । हेत्वर्थोऽत्रेति शब्दः । इति यतः स वा इत्यादिनोक्तगुणयुक्तोऽतः स हरिः यथाकारी जीवं यथा करोति । यथाचारी यथाचारयति । तथा तथा भवति जीवः । तदेव व्यनक्ति ॥ साधुकारीति ।

स हरिर्जीवं साधुं करोति चेत्साधुर्भवति जीवः । पापं करोति चेज्जीवं पापो भवति जीव इत्यर्थः । ईश्वर एव जीवं साधुं पापं करोति चेत् किं पुण्यपापकर्मणोः कृत्यमित्यतः तत्कारितेन कर्मणा तथा भवतीत्याह ॥ पुण्य इति । ईश्वराधीनत्वं जीवस्य वृद्धसंमत्या दृढयति ॥ अथो खल्विति । अथो तस्मादीशाधीनत्वाज्जीवस्यायं पुरुषो जीवः । काममयः ईश्वरेच्छाधीन इति प्राज्ञा आहुः । कुतः स भगवान्यथाकामो भवति । तत्क्रतुः तथाकामो भवति । इत्थं करिष्याम्येवेति निश्चयरूपः कामः

तदेषश्लोकोभवति ॥ तदेवसक्तःसहकर्मणैतिलिंगंमनोयत्रनिषक्तमस्य ॥ प्राप्यांतंकर्मणस्तस्य यत्किंचेहकरोत्ययं ॥ तस्माल्लोकात्पुनरेत्यस्मैलोकायकर्मणइतिनुकामयमानोथाकामयमानोयो कामोनिष्कामआप्तकामआत्मकामोनतस्यप्राणाउत्क्रामंतिब्रह्मैवसन्ब्रह्माप्येति ॥ ६ ॥

क्रतुशब्दार्थः । यत्क्रतुर्भवति तन्निष्ठावान्भवति । तत्कर्म कुरुते । यत्कर्म कुरुते तदनुगुणं फलं संपद्यते । प्राप्नोति । तस्मादीशेच्छाधीनो जीव इति ॥ ६ ॥ ४ ॥ ५ ॥ भगवत्प्रेरितो जीवः कर्म कुर्वंस्तत्फलमभिसंपद्यत इत्युक्तार्थे मंत्रोस्तीत्याह ॥ तदेष इति । तत् तत्रोक्तार्थे । अस्य संसारिणः । लिंगं शरीरं मनश्च । यत्र यस्मिन्फले निषक्तं नितरां सक्तं । तत्र फले सक्तः पुरुषः। तदेव फलं । तत्साधनीभूतस्वकृतकर्मणा सह एति गच्छति । अयं पुरुषः यत्किंचेह लोके । कर्म करोति । तस्य कर्मणोंतमवसानं प्राप्य तस्माल्लोकात्कर्मफलभूतात्स्वर्गादेः । पुनरस्मै लोकाय भूलोकाय । एत्यागच्छति । किमर्थं कर्मणे कर्म कर्तुं । मुक्तामुक्त

योर्द्वयोरपि प्रकृतत्वात्किं परोयं मंत्र इत्यतः उपनिषत्स्वयमेवाह ॥ इति नु कामयमान इति । संसारीत्यर्थः । उक्त इति शेषः । संसारिणं निरूप्य मुक्तस्वरूपमाह ॥ अथाकामयमान इति । अथेत्यर्थांतरे । योऽकामः अकारवाच्यविष्णुकामः । निष्कामः अयोग्यकामनारहितः । अकामयमानः । योग्यकामस्यापि कदाचिद्देवोद्भूतत्वेनासर्वकालीनत्वात् । अकामयमानः । कामिता शेषप्राप्तेराप्तकामः । चिदानंदस्वरूप आत्मैव कामः काम्यो यस्येत्यात्मकामः । तस्य एवंभूतस्य मुक्तस्य । प्राणाः नोत्क्रामंति ।

तदेषश्लोकोभवति ॥ यदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः ॥ अथमर्त्योमृतोभवत्यत्रब्रह्मस मश्नुतइति ॥ तद्यथाहिनिलयनीवल्मीकेमृताप्रत्यस्ताशयीतैवमेवेदꣳशरीरꣳशेतेथाऽयमशरीरोमृतःप्राणोब्रह्मैवतेजएवसोहंभगवतेसहस्रंददामीतिहोवाचजनकोवैदेहः ॥ ७ ॥

पुनर्न म्रियंत इत्यर्थः । प्रलये कथमित्यत आह । स मुक्तो ब्रह्मैव सञ्जीव एव सन् । जीवभावापरित्यागेनैव । परं ब्रह्माप्येति । प्रलये भगवदुदरं प्रविशतीत्यर्थः ॥ ६ ॥ ४ ॥ ६ ॥ न तस्य प्राणा उत्क्रामंतीत्युक्तार्थे मंत्रमुदाहरति ॥ तदेष इति । अस्य संसारिणः । ये हृदि (श्रि)स्थिताः अंतःकरणगताः कामास्ते सर्वे यदा प्रमुच्यंते । तदा मुक्तो भवति । अथ मुक्त्यनंतरं मर्त्यः पूर्वं मरणशीलः । मुक्त्यनंतरममृतो भवति मृतिहीनो भवति । अत्र मुक्तौ प्रतिप्रलये च । ब्रह्म समश्नुते प्राप्नोति । ज्ञानिनो देहत्यागप्रकारं दर्शयति देहस्य हेयत्वज्ञापनाय ॥ तद्यथेत्यादिना । तन्निदर्शनं यथा । अहिः सर्पः निलीयतेऽस्यामिति अहि

निलयनी सर्पत्वक् । वल्मीके प्रत्यस्ता परित्यक्ता । मृता जीवहीना । शयीत । एवमेवेदं शरीरं जीवेन परित्यक्तं शेते । मुक्त्यनंतरं जीवो न म्रियत इत्युक्तं । तर्हि मुक्तेशयोः को विशेषइत्यत आह ॥ अथेति । अथ मुक्त्यनंतरमेवायं जीवो शरीरो भवति । न म्रियत इति यावत् । प्राणोऽमृतः कदापि न म्रियते । कः प्राण इत्यत आह ॥ ब्रह्मैवेति । न केवलं प्राणाख्यं परं ब्रह्मैव नित्यमुक्तं । किंतु श्रीरपीत्याह ॥ तेज इति । श्रीतत्त्वमेव चामृतं कदापि न मृतमित्यर्थः । एवं श्रुत्वा राजा गुरुदक्षिणां प्रतिजज्ञे

तदेतेश्लोकाभवंति ॥ अणुःपंथाविततःपुराणोमाꣳस्पृष्टोनुवित्तोमयैव ॥ तेनधीराअपियंतिब्रह्म
विदःस्वर्गलोकमितऊर्ध्वोविमुक्ताः ॥८॥ तस्मिंच्छुक्लमुतनीलमाहुःपिंगलंहरितंलोहितंच ॥
एषपंथाब्रह्मणाहानुवित्तस्तेनैतिब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥

इत्याह ॥ सोहमिति ॥७॥ भगवान्मोक्षदातेत्युक्तार्थे मंत्राः संतीत्याह ॥ तदेत इति । तत्तत्र पूर्वोक्तार्थे । अणुर्विततो व्याप्तः सुखहेतुस्वप्राप्तिसाधनत्वात्पंथाः । पुराणोऽनादिः । मां श्रियं । श्रियेति यावत् । स्पृष्टः आश्रितः । श्रीपतित्वादिति भावः । मयैव श्रियैव । अनुवित्तो ज्ञातः । ऊर्ध्वः सर्वतो विशिष्टः । यो भगवान् तेन तत्प्रसादेन । धीराः ब्रह्मविदः । इतः संसाराद्विमुक्ताः । स्वर्गं स्वरूपभूतरमणज्ञानात्मकं लोकं वैकुंठादिकमपियंति प्राप्नुवंति ॥ ६ ॥ ४ ॥ ८ ॥ तृतीयज्योतिर्ब्राह्मणे तावताणिम्ना तिष्ठंति शुक्लस्य नीलस्येत्यादिनोक्तार्थे मंत्रं पठति ॥ तस्मिन्निति । तस्मिन् हरौ तस्य हरेरित्यर्थः । शुक्लं वासुदेवाख्यं नीलमनिरुद्धाख्यं

पिंगलं संकर्षणाख्यं हरितं प्रद्युम्नाख्यं लोहितं नारायणाख्यं इति पंचरूपाणि संतीत्याहुरिति योज्यं । उत शब्दश्च शब्दार्थे । एष पंचरूपो हरिः पंथाः सुखहेतुस्वप्राप्तिसाधनत्वाद्ब्रह्मणा चतुर्मुखेन । अनुवित्तो ज्ञातः । ह प्रसिद्धं । ब्रह्मवित् परब्रह्मज्ञानी । तैजसः महातेजोरूपश्चीतत्त्वज्ञानी । पुण्यकृत् भगवत्कर्मकर्तापि । तेनैव भगवत्प्रसादेनैव प्रागुक्तस्वर्गलोकशब्दितविष्णुलोकमेति प्राप्नोति । एतेन ब्रह्मादिप्रसादेनैव मुक्तिसंभवे किमीश्वरप्रसादेनेति निरस्तं ॥ ९ ॥ न केवलं भगवज्ज्ञानमेव मुक्तिहेतुः किंतु

अंधंतमःप्रविशंतियेऽविद्यामुपासते ॥ ततोभूयइवतेतमोयउविद्यायाꣳरताः ॥ १० ॥
अनंदानामतेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेऽविद्वाꣳसोबुधोजनाः ॥ ११ ॥

मिथ्याज्ञाननिंदासमुचितमेवेति भावेनाह ॥ अंधमिति । ये अविद्यां विद्याविरुद्धमिथ्याज्ञानं । तद्विषयमन्यथाकारमिति यावत् । उपासते ते अंधं तमः प्रविशंति । ये विद्यायां उ एव तत्त्वज्ञान एव । रता न मिथ्याज्ञाननिंदका इति यावत् । ते ततः अन्यथोपासकाद्भूय इव । किंचिद्विशेषेण तमः प्रविशंतीत्यनुषंगः ॥ १० ॥ सत्यप्युपदेष्टरि भगवद्द्वेषात्तत्त्वमविदुषां मिथ्याज्ञानिनामनर्थमंत्रेणाह ॥ अनंदा इति । बोधयतीति बुत् । तस्माद्बुधः । ज्ञानिनः सकाशाद्भगवत्स्वरूपमविद्वांसो ये जनाः ते प्रेत्य अंधेन आंध्यहेतुना तमसा । आवृताः । अनंदाः सुखविरुद्धदुःखरूपाः । ते प्रसिद्धाः ये लोकाः तानभिगच्छंति ॥ ६ ॥ ४ ॥ ११ ॥

प्राज्ञेनात्मनान्वारूढ इत्यादिना जीवेशयोर्भेद उक्तः तद्वाक्यार्थाभेदविदो दोषमाह मंत्रेण ॥ आत्मानमिति । चेच्छब्दो यद्यर्थे । यदि पूरुषो जीवः । अयं परमात्मा अहमस्मीति भगवंतं विजानीयात् । ज्ञातुं योग्यः स्यात्तर्हि किमिच्छन् तस्य विवरणं । कस्य कामाय कस्मै कामाय । किमर्थमिति यावत् । शरीरमनुसंज्वरेत् संतापयेद्दुःखी भवेदित्यर्थः । जीवः स्वस्य भगवत्तादात्म्यानुसंधानयोग्यश्चेत्कुतो देहच्छेदादिना दुःखी स्याद्धरेरदुःखित्वादिति भावः ॥ १२ ॥ भगवज्ज्ञानं मुक्तिहेतुरित्यत्र मंत्रांतरमाह ॥

आत्मानंचेद्विजानीयादयमस्मीतिपूरुषः ॥ किमिच्छन्कस्यकामायशरीरमनुसंज्वरेत् ॥ १२ ॥
यस्यानुवित्तःप्रतिबुद्धआत्मास्मिन्संदो(दे्ह)घेगहनेप्रविष्टः ॥ सविश्वकृत्सहिसर्वस्यकर्तातस्यलोकः
सउलोकएव ॥ १३ ॥ इहैवसंतोथविद्मस्तद्वयंनचेदवेदीर्महतीविनष्टिः ॥ यएतद्विदुरमृतास्ते
भवंत्यथेतरेदुःखमेवापियंति ॥ १४ ॥

यस्येति । हि यस्मात्स आत्मा सर्वस्य कर्ता । तस्मात्स विश्वकृत् । मुख्यवायोः कर्ता । अस्मिन्संदोहे देहे । गहने हृदयगुहायां प्रविष्टः । प्रतिबुद्धः सर्वज्ञः । स आत्मा यस्य येनोपासकेनानुवित्तो ज्ञातः । तस्योपासकस्य । लोकः स उ लोक एव प्रसिद्धो भगवल्लोक एव भवतीत्यर्थः । तदाह सूत्रे तन्निष्ठस्य मोक्षोपदेशादिति ॥ १३ ॥ गुरूपदेशेनैव ज्ञानं संपाद्यमन्यथानर्थ इत्यत्र मंत्रमाह ॥ इहैवेति । अथ ज्ञानिसद्भावकाले । इह अस्मिन् जन्मन्येव । संतः सज्जनाः वयं । तत्परं ब्रह्म । विद्मः जानीम

इति मंत्रद्रष्टृवचनं । कालांतरे संपाद्यतामिति वदंतं प्रत्याह ॥ नेति । न चेदवेदीः परं ब्रह्म न जानीयाश्चेदिति साधुजनं प्रत्युच्यते । तर्हि महती विनष्टिः । गुरूपदेशजन्यज्ञानस्य फलमाह ॥ य एतादिति । एतद्ब्रह्म गुरूपदेशेन ये विदुस्ते अमृताः मुक्ता भवंति । अवेदिन उक्तां विनष्टिं व्यनक्ति । अथेत्यर्थांतरं । इतरे गुरूपदेशोल्लंघनवंतः दुःखमेव प्राप्नुवंतीति ॥ ६ ॥ ४ ॥ १४ ॥ भगवतो मुक्तिहेतुत्वे मंत्रांतरमाह ॥ यदैनामिति । ये भूतभव्यस्येशानं । देवं क्रीडादिगुणविशिष्टं । एतमात्मानं । यदांजसाऽनुपश्यंति ।

यदैनमनुपश्यंत्यात्मानंदेवमंजसा ॥ ईशानंभूतभव्यस्यनततोविजुगुप्सते ॥ १५ ॥
यस्मादर्वाक्संवत्सरोहोभिःपरिवर्तते ॥ तद्देवाज्योतिषांज्योतिरायुर्होपासतेमृतं ॥ १६ ॥
यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितः ॥ तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोमृतं ॥ १७ ॥

ततः आत्मज्ञानानंतरं न विजुगुप्सते । आत्मानं गोप्तुं नेच्छति । भयाभावादिति भावः ॥ १५ ॥ तद्यदेतादिदं मयाऽदोमय इत्यत्र हरेरविकारत्वमुक्तं तत्र मंत्रमाह ॥ यस्मादिति । अहोभिः सह संवत्सरो यस्मादर्वाक् परिवर्तते । तस्मिन्विकारं कर्तुम समर्थ इति यावत् । तज्ज्योतिषां ज्योतिः ज्योतिष्प्रदं आयुः । अचलं अमृतं नित्यमुक्तं । देवा उपासते । ह प्रसिद्धं ॥ १६ ॥ हरेरेव मुक्तिहेतुत्वे मंत्रांतरं पठति ॥ यस्मिन्निति । यस्मिन्देहस्थे हरौ । पंचपंचजनाः प्रतिपुरुषं पंचपंचजनाः । प्रतिष्ठिताः आकाशोमूलप्रकृतिश्च प्रतिष्ठितः स्थितः । तमेवात्मानं । मन्ये जानामि । किं तज्ज्ञानेनेत्यत उक्तं ॥ विद्वानिति । अमृतं ब्रह्म

विद्वानमृतो मुक्तो भवति ॥ ६ ॥ ४ ॥ १७ ॥ के ते पंचजना इत्यतः ज्योतिषां ज्योतिरिति प्रागुक्तं ज्योतिरेकं अन्येचत्वारः प्राणादय इति भावेन तद्वेदिनः फलं चाह ॥ प्राणस्य प्राणमित्यादिना । प्राणादेः प्राणनादिप्रदं । ये विदुः ते । पुराणं पुरातनं । अग्र्यं श्रेष्ठं । ब्रह्म । निचिक्युः प्रापुरिति । तदाह सूत्रे । प्राणादयो वाक्यशेषात् ज्योतिषैकेषामसत्यन्न इति ॥ १८ ॥ शुक्लस्य नीलस्येत्यादिनोक्तभगवद्रूपाणां विज्ञानमय इत्यादिनोक्तगुणानां च भेददर्शिनोऽनर्थं ब्रह्मापरोक्षज्ञानकरणं वदन्नेवाह ॥

प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रंमनसोयेमनोविदुस्तेनिचिक्युर्ब्रह्मपुराणमग्र्यं ॥१८॥
मनसैवानुद्रष्टव्यं नेहनानास्तिकिंचन ॥ मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति ॥ १९ ॥
एकधैवानुद्रष्टव्यमेतदप्रमयंध्रुवं ॥ विरजःपरआकाशादजआत्मामहान्ध्रुवः ॥ ॥ तमेवधीरो
विज्ञायप्रज्ञांकुर्वीतब्राह्मणः ॥ नानुध्यायेद्बहूञ्छब्दान्वाचोविग्लापनंहितदिति ॥ २० ॥

मनसैवेति । इह ब्रह्मणि । किंचन रूपगुणादिकं नाना भिन्नं नास्तीत्यर्थः । इह ब्रह्मणि । किंचन रूपादिकं । नाना भिन्नं । इव शब्दाद्भिन्नाभिन्नं वा पश्यति स मृत्योः मृत्युं अंधंतमः प्राप्नोतीत्यर्थः ॥ १९ ॥ तर्हि कथं ज्ञेयमित्यत आह ॥ एकधैवेति । तस्मादिति ग्राह्यं । भेदज्ञानेऽनर्थसत्वात् । अप्रमयं परिमितिहीनं । ध्रुवं नित्यं । विरजः निर्दोषं रजोपलक्षितसर्वदोषरहितं । आकाशान्मूलप्रकृतेः परं एतद्ब्रह्म । एकधैव एकप्रकारेणैव । गुणक्रियादिभिः सविशेषाभेदेनैव । द्रष्टव्यमित्यर्थः । मनसेत्यनुषज्यते ।

मनसः श्रवणादिकं सहकारीति भावेनाह ॥ अज इत्यादिना । धीरो धैर्यशाली । ब्राह्मणो ब्रह्माणनयोग्यो नरः योऽजः जननहीनः । महानपरिच्छिन्नः । ध्रुवः नित्यः आत्मा तमेव परोक्षतो विज्ञाय । प्रज्ञां साक्षात्कारं । कुर्वीत संपादयेत् । तमेवे

सवाएषमहानजआत्मायोयंविज्ञानमयःप्राणेषुयएषोंतर्हृदयआकाशस्तस्मिंच्छेते सर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिःसनसाधुनाकर्मणाभूयान्नो एवासाधुनाकनीयानेषसर्वेश्वरएषभूताधिपतिरेषभूतपालएषसेतुर्विधरणएषांलोकानामसंभेदायतमेतंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेनैतमेवाविदित्वामुनिर्भवत्येतमेवप्रव्राजिनोलोकमिच्छंतःप्रव्रजंत्येतद्धस्मवैतत्पूर्वेविद्वांसःप्रजांनकामयंते किंप्रजायाकरिष्यामोयेषांनोयमात्मायंलोकइति तेहस्मपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यंचरंति याह्येवपुत्रैषणासावित्तैषणायावित्तैषणासालोकैषणोभेह्येतेईषणेएवभवतःसएषनेतिनेत्यात्मागृह्योनहिगृह्यतेशीर्योनहिशीर्यतेऽसंगोनहिसज्यतेऽसितोनव्यथतेनारिष्यइत्येतमुहैवैतेनतरतइत्यतःपापमकरवमित्यतःकल्याणमकरवमित्युभेउहैवैषएतेतरतिनैनंकृताकृतेतपतः ॥ २१ ॥

त्युक्तैवकारव्यावर्त्यमाह ॥ नानुध्यायेदिति । कुतो न ध्यायेन्नाभ्यसेदित्यत उक्तं ॥ वाच इति । तत् अन्यविषयकबहुशब्दव्यवहरणं । वाचो वागिंद्रियस्य । विग्लपनं श्रमकरमत इत्यर्थः । इति शब्दः श्लोकसमाप्तौ ॥ ६ ॥ ४ ॥ २० ॥ अज आत्मा

महान् ध्रुव इति श्रवणात्पूर्वमंत्रस्य चतुर्मुखपरत्वप्रतीतिं तदनुवादपूर्वं निराह ॥ स वा एष इति। एष मंत्रोक्तो महानज आत्मा। स वै स एव। स कः यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोंतर्हृदय आकाशस्तस्मिञ्छेत इति वाक्ये योयं विज्ञानमयः प्राणेषु तिष्ठतीत्युक्तः यश्च य एष प्रसिद्धोंतर्हृदये हृदयांतर्वर्तमान आकाशस्तस्मिन् शेत इत्युक्तः स वा इत्यर्थः। तस्य महिमानमाह ॥ सर्वस्येति। सर्वमस्य वशे वर्तत इति सर्वस्य वशी। सर्वस्येशस्य ब्रह्मरुद्रादे रनश्चेष्टक इति सर्वस्येशानः। सर्वस्य ब्रह्मरुद्रादेः सकाशाद्गुणैरधिकः पालकश्चेति सर्वस्याधिपतिः। यश्च स प्रसिद्धो हरिः जीववत्साधुना कर्मणा भूयान् न। नो एव नैवासाधुना कर्मणा कनीयान्पुण्यपापकृतविकारो नास्त्येवेत्यर्थः। एष सर्वेश्वरः। एष भूताधिपतिः भूत एव पूर्वकालमारभ्यैवाधिपतिर्नास्याधिपत्यमादिमदित्यर्थः। एष भूतपालः। अनादिकालमारभ्यैव पालक इत्यप्यवधेयं। यश्चैष एषां लोकानां असंभेदाय असांकर्याय। विधरणः विधारणसमर्थः सेतुराश्रय इति। तदाह सूत्रे। धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेरिति। तमेतमुक्तगुणवंतं। ब्राह्मणाः ब्रह्माणनयोग्याः। वेदानुवचनेन वेदाध्ययनेन। यज्ञेन दानेन। तपसा कृच्छ्रचांद्रायणादिकायक्लेशरूपतपसा। अनाशकेनोपवासेन। विविदिषंति वेदितुमिच्छन्ति। तदाह सूत्रे। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति। वेदनफलमाह ॥ एतमेवेति। एतं पूर्वोक्तमहिमयुक्तमेव विदित्वा। मुनिः ज्ञानरूपो। मुक्तो भवति। किंच एतं भगवंतमेव लोकं आश्रयं। इच्छंतः प्रार्थयमानाः। प्रव्राजिनः प्रव्रजनयोग्याः। प्रव्रजंति निषिद्धकाम्यकर्मत्यागरूपसन्न्यासवंतो भवंति। उपनिषत्स्वोक्तार्थे पूर्वाचारं प्रमाणयति ॥ एतदिति। एतद्भगवानेवाश्रय इत्येतत्प्रमेयं। विद्वांसः पूर्वे प्रजां प्रजादिकं

न कामयंते ह स्म वै । प्रजाद्यकामने हेतुमाह ॥ किमिति । येषां नोऽस्माकं । अयं पूर्वोक्तमहिमयुक्तो हरिः आत्मा स्वामी अयं लोकः आश्रयश्च । ते वयं किं प्रजया करिष्याम इति भावेन प्रजां न कामयंत इत्यन्वयः । ते ह स्मेत्यादि वाक्यं पूर्वाध्याये पंचमे कहोळब्राह्मणे व्याख्यातं । विदित्वेत्युक्तवेदनकर्मणो हरेः महिमांतरमाह ॥ स एष नेनीति । एतदपि वाक्यं व्याख्यातं

तदेतदृचाभ्युक्तं एषनित्योमहिमाब्राह्मणस्य नवर्धतेकर्मणानोकनीयान्तस्यैवस्यात्पदवित्तंविदि त्वानलिप्यतेकर्मणापापकेनेति ॥ तस्मादेवंविच्छांतोदांतउपरतस्तितिक्षुःसमाहितोभूत्वात्म न्येवात्मानंपश्यतिसर्वमात्मानंपश्यतिनैनंपाप्मातरतिसर्वंपाप्मानंतरतिनैनंपाप्मातपतिसर्वं पाप्मानंतपतिविपापोविरजोविचिकित्सोब्राह्मणोभवत्येषब्रह्मलोकःसम्राडितिहोवाचयाज्ञ वल्क्यःसोहंभगवतेविदेहान्ददामिमांचापिसहदास्यायेति ॥ २२ ॥

पूर्वाध्यायांत्यभागे । मुक्तिस्वरूपमाह ॥ एनमिति । अतो हरेः सकाशात्तमेरणयेति यावत् । अहं पापमकरवं । कल्याणमकरव मिति । एते भावने एतं मुक्तमेव । न तरतो नैव व्याप्नुतः । मुक्तं भावने कुतो न तरत इत्यतः तत्स्वामिनस्तत्तरणादित्याह ॥ उभे इति । एष हरिः । एते उभे भावने तरति नित्यं तीर्णो वर्तते । भगवतस्तत्तरणं नाम किमित्यत आह ॥ नैनमिति । एनं कृताकृते पुण्यपापे न तपत इति । पुण्याकरणपापकरणनिमित्तविकारो नैव तस्यास्तीत्यर्थः ॥२१॥ भगवंतं पुण्यपापे न तपतः।

तज्ज्ञानिनं मुक्तं च न तपत इत्युक्तार्थे मंत्रमाह ॥ नदेतदिति । ब्रह्मणा वेदेन अण्यते गम्यत इति ब्राह्मणो विष्णुः । ब्रह्माण इति वक्तव्ये स्वरव्यत्यय आधिक्यार्थः । तस्य विष्णोः । एष पूर्वोक्तो महिमा नित्यः । कुतः शुभकर्मणा न वर्धते पापकर्मणा नो कनीयान् । तस्य नित्यमहिम्नो हरेः । पदवित्स्वरूपज्ञानी । स्यात् । तं विदित्वा । पापकेन कर्मणा । न लिप्यते । इति शब्दो ऋक्समाप्त्यर्थः । तस्माद्भगवज्ज्ञानस्य मुक्तिहेतुत्वात् । एवंवित् भगवज्ज्ञानं मुक्तिहेतुरिति जानन् । शांतो भगवन्निष्ठः । दांतो निगृहीतेंद्रियः । उपरतः उप समीपे हृदिस्थे विष्णाविति यावत् । रमत इत्युपरतः विष्णुविषयसंतोषवानित्यर्थः । तितिक्षुः द्वंद्वसहिष्णुः । समाहितः । यथावस्तुज्ञानी भूत्वा । आत्मन्येव स्वस्मिन्नेव स्थितमात्मानं हरिं । पश्यति पश्येत् । कथं ज्ञातव्य

सवाएषमहानजआत्मान्नादोवसुदानोविंदतेवसुयएवंवेद ॥ २३ ॥

इत्यत आह ॥ सर्वमिति । पूर्णमात्मानं पश्येदित्यर्थः । तथा ज्ञानिनः फलमाह ॥ नैनमिति । एनं ज्ञानिनं । पाप्मा न तरति न प्राप्नोति । प्रत्युतायमेव सर्वं पाप्मानं । तरति तीर्णो वर्तते । एतदेव विवृणोति ॥ नैनमिति । एवं नैनं रजस्तरति । नैनं विचिकित्सा संदेहः तरतीत्यपि ध्येय । कुत एतदित्यतस्तदुपास्यस्य हरेः पापाद्यस्पृष्टत्वादित्याह ॥ विपाप इति । नित्यं विपापो विरजो विरागो अविचिकित्सो अपगतसंदेहो भवति ब्राह्मणो वेदगम्यो हरिः यतः अतस्तज्ज्ञान्यपि तादृश इति हे सम्राडेष हरिः ब्रह्मलोकः परिपूर्णज्ञानस्वरूप इति होवाच याज्ञवल्क्यः । एवं श्रुतभगवत्स्वरूपो राजा गुरुदक्षिणां प्रतिजज्ञ इत्याह ॥ सोहमिति । ॥२२॥ विद्यांतरमाह ॥ स वा इति । अन्नमत्तीत्यन्नादः ॥ वसु ददातीति वसुदानः । एतज्ज्ञानिनः फलमाह ॥ विंदते वसु य

एवं वेदेति। वसु। धनं ॥ २३ ॥ विद्यांतरमाह ॥ स वा इति। अजरो जराहीनः। नमरिष्यतीत्यमरः। अमृतो मृतिहीनः। अभयः भयहीनः। ब्रह्मणोऽभयत्वं श्रुतिप्रसिद्धमित्याह॥ अभयं वै ब्रह्मेति। तथा ज्ञानिनः फलमाह॥ अभयं हीति। य एवं

सवाएषमहानजआत्माजरोमरोमृतोभयोब्रह्माभयंवैब्रह्माभयंहिवैब्रह्मभवातियएवंवेद ॥ २४ ॥
इतिशारीरब्राह्मणं ॥ ६ । ४ ॥ अथहयाज्ञवल्क्यस्यद्वेभार्येबभूवतुःमैत्रेयीचकात्यायनीचतयोर्ह
मैत्रेयीब्रह्मवादिनीबभूवस्त्रीप्रज्ञैवतर्हिकात्यायन्यथहयाज्ञवल्क्योन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥
मैत्रेयीतिहोवाचयाज्ञवल्क्यःप्रव्राजिष्यन्वाअरेऽहमस्मात्स्थानादस्मिहंततेनयाकात्यायन्यांतं
करवाणीति ॥२॥ साहोवाचमैत्रेयीयन्नुमइयंभगोःसर्वापृथिवीवित्तेनपूर्णास्यात्स्यांन्वहंतेना
मृताहोनेतिनेतिहोवाचयाज्ञवल्क्योयथैवोपकरणवतांजीवितंतथैवतेजीवितंस्यादमृतत्वस्यतु
नाशास्तिवित्तेनेति ॥ ३ ॥

वेद तस्य ब्रह्म अभयं भवति। भयराहित्यं करोतीत्यर्थः ॥ ६ ॥ ४ ॥ २४ ॥ चतुर्थं शारीरब्राह्मणं ॥ छ ॥ छ ॥ भगवतों तर्यामित्वेनोक्तं सर्वप्रेरकत्वं सर्वथाज्ञेयमिति भावेन पुनः प्रागुक्तमेव ब्राह्मणमावर्तयति ॥ अथ ह याज्ञवल्क्यस्येति। तर्हि तदानीं अन्यद्वृत्तं संन्यासाश्रमं। प्राग्वदर्थः सर्वत्र ज्ञेयः ॥ १ ॥ २ ॥ हे भगोः इयं सर्वा पृथिवी वित्तेन पूर्णा मे यत्स्यात्तेनाह

साहोवाचमैत्रेयीयेनाहंनामृतास्यांकिमहंतेनकुर्यांयदेव भगवान्वेत्थतदेवमेब्रूहीति ॥४॥ सहोवाच
याज्ञवल्क्यः प्रियावैखलुनो भवतिसतीप्रियामवृधंतर्हि भवत्येतद्व्याख्यास्यामिव्याचक्षाणस्यतुमेनि
दिध्यासस्वेति ॥५॥ सहोवाचनवाअरेपत्युःकामायपतिःप्रियो भवत्यात्मनस्तुकामायपतिःप्रियो भ
वतिनवाअरेजायायैकामायजायाप्रिया भवत्यात्मनस्तुकामायजायाप्रिया भवतिनवाअरेपुत्राणां
कामायपुत्राःप्रिया भवंत्यात्मनस्तुकामायपुत्राःप्रिया भवंतिनवाअरेवित्तस्यकामायवित्तंप्रियं भव
त्यात्मनस्तुकामायवित्तंप्रियं भवतिनवाअरेपशूनांकामायपशवःप्रिया भवंत्यात्मनस्तुकामायपशवः
प्रिया भवंतिनवाअरेब्रह्मणःकामायब्रह्मप्रियं भवत्यात्मनस्तुकामायब्रह्मप्रियं भवतिनवाअरेक्षत्रस्य
कामायक्षत्रंप्रियं भवत्यात्मनस्तुकामायक्षत्रंप्रियं भवतिनवाअरेलोकानांकामायलोकाःप्रिया भ
वंत्यात्मनस्तुकामायलोकाःप्रिया भवंतिनवाअरेदेवानांकामायदेवाःप्रिया भवंत्यात्मनस्तुकामा
यदेवाःप्रिया भवंतिनवाअरेवेदानांकामायवेदाःप्रिया भवंत्यात्मनस्तुकामायवेदाःप्रिया भवंति
नवाअरे भूतानांकामाय भूतानिप्रियाणि भवंत्यात्मनस्तुकामाय भूतानिप्रियाणि भवंतिनवाअरे
सर्वस्यकामायसर्वंप्रियं भवत्यात्मनस्तुकामायसर्वंप्रियं भवत्यात्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्यो
निदिध्यासितव्योमैत्रेय्यात्मनिखल्वरेदृष्टेश्रुतेमतेविज्ञातइदंसर्वंविदितं ॥ ६ ॥

ममृता स्यां किं नु उताहो नेति । सा मैत्रेय्युवाचेति योजना ॥ ४ ॥ हे भवति नोऽस्माकं प्रिया वै खलु प्रीतिविषयः । सती

ब्रह्मतंपरादाद्योन्यत्रात्मनोब्रह्मवेदक्षत्रंतंपरादाद्योन्यत्रात्मनःक्षत्रंवेदलोकास्तंपरादुर्योन्यत्रात्म नोलोकान्वेदेदेवास्तंपरादुर्योन्यत्रात्मनोदेवान्वेदवेदास्तंपरादुर्योन्यत्रात्मनोवेदान्वेदभूतानि तंपरादुर्योन्यत्रात्मनोभूतानिवेदसर्वंतंपरादाद्योन्यत्रात्मनःसर्वंवेदेदंब्रह्मेदंक्षत्रमिमेलोकाइमे देवाइमेवेदाइमानिभूतानीदꣳसर्वंयदयमात्मा ॥७॥ सयथादुंदुभेर्हन्यमानस्यनबाह्याञ्छब्दान् शक्नुयाद्ग्रहणायदुंदुभेस्तुग्रहणेनदुंदुभ्याघातस्यवाशब्दोगृहीतः ॥८॥ सयथाशंखस्यध्मायमान स्यनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायशंखस्यतुग्रहणेनशंखध्मस्यवाशब्दोगृहीतः ॥९॥ सयथावीणायै वाद्यमानायैनबाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणायवीणायैतुग्रहणेनवीणावादस्यवाशब्दोगृहीतः॥१०॥ सयथार्द्रैधाग्नेरभ्याहितस्यपृथग्धूमाविनिश्चरंत्येवंवाअरेऽस्यमहतोभूतस्यनिःश्वसितमेवैतदृग्वेदोयजुर्वेदःसामवेदोथर्वांगिरसइतिहासःपुराणंविद्याउपनिषदःश्लोकाःसूत्राण्यनुव्याख्याना निव्याख्यानानीष्टꣳहुतमाशितंपायितमयंचलोकःपरश्चलोकःसर्वाणिचभूतान्यस्यैवैतानिस र्वाणिनिःश्वसितानि ॥ ११ ॥

साध्वी । प्रियां वाचमवृधत् अवर्धयत् भवतीति कर्त्रन्वयः ॥५॥६॥७॥८॥९॥१०॥११॥ जीवस्य ज्ञानरूपत्वं दृष्टांतोक्तिपूर्वमाह ॥

स यथा सैंधवघन इति । लवणखंडः यथानंतरोऽबाह्यः । बाह्याभ्यंतरविशेषाभावेन कृत्स्नः लवणरसघन एव एवं अरे मैत्रेयि अयमात्मा अनंतरो अबाह्यः । बाह्याभ्यंतरविशेषहीनतया कृत्स्नः प्रज्ञानघन एव सन् एतेभ्यो देहारंभकभूतेभ्यः । समु

सयथासर्वासामपाꣳसमुद्रएकायनमेवंसर्वेषांस्पर्शानांत्वगेकायनमेवंसर्वेषांरसानांजिह्वैकायन मेवंसर्वेषांगंधानांनासिकैकायनमेवंसर्वेषांरूपाणांचक्षुरेकायनमेवंसर्वेषांशब्दानांश्रोत्रमेकाय नमेवंसर्वेषांसंकल्पानांमनएकायनमेवंसर्वासांविद्यानांहृदयमेकायनमेवंसर्वेषांकर्मणांहस्तावे कायनमेवंसर्वेषामानंदानामुपस्थएकायनमेवंसर्वेषांविसर्गाणांपायुरेकायनमेवंसर्वेषामध्वनां पादावेकायनमेवंसर्वेषांवेदानांवागेकायनंसयथासैंधवघनोनंतरोबाह्यःकृत्स्नोरसघनएवैवंवा अरेऽयमात्मानंतरोऽबाह्यःकृत्स्नःप्रज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थायतान्येवानुविनश्यतिनप्रे त्यसंज्ञास्तीत्यरेब्रवीमीतिहोवाचयाज्ञवल्क्यः ॥ १२ ॥

त्थायोत्पन्नः सन् तान्येव भूतान्येवानु विनश्यति भूतापगमेन मुक्तो भवति । प्रेत्य मुक्त्यनंतरं । संज्ञा ज्ञानं । नास्तीति ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥ वृत्तिज्ञानं मुक्तस्य नास्ति । मुक्तविषयज्ञानममुक्तस्य नास्तीति वा याज्ञवल्क्याभिप्रायमजानंती

सर्वथा ज्ञानशून्यत्वमुक्तवानिति विपरीतं जानंती पृच्छति ॥ सा होवाचेति । अहं अहेयमिमं परमात्मानं जीवो नवै नैव जानातीत्यत्रैवावश्यावगंतव्यममेय एव भगवान्मा मां मोहांतं मोहाख्यनाशं आपिपत् । प्रापयामासेति होवाचेति योजना । स्वाभि

साहोवाचमैत्रेय्यत्रैवमाभगवान्मोहांतमापिपन्नवाअहमिमंविजानातीति सहोवाचनवाअरे हंमोहंब्रवीम्यविनाशीवाऽरेयमात्मानुच्छित्तिधर्मा ॥१३॥ यत्राहिद्वैतमिवभवतितदितरइत रंपश्यतितादितरइतरंजिघ्रतितादितरइतर ँरसयतेतादितरइतरमभिवदतितादितरइतर ँशृणो तितादितरइतरंमनुतेतादितरइतरंस्पृशतितादितरइतरंविजानातियत्रत्वस्यसर्वमात्मैवाभूत्तत्के नकंपश्येत्तत्केनकंजिघ्रेत्तत्केनकंरसयेत्तत्केनकमभिवदेत्तत्केनकंशृणुयात्तत्केनकंमन्वीततत्केनकं स्पृशेत्तत्केनकंविजानीयाद्येनेदंसर्वंविजानातितंकेनविजानीयात्सएषनेतिनेत्यात्माऽगृह्योनहि गृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्यतेऽसितोनव्यथतेनरिष्यतिविज्ञातारमरेकेनविजानी यादित्युक्तानुशासनासिमैत्रेय्येतावदरेखल्वमृतत्वमितिहोक्त्वायाज्ञवल्क्योविजहार ॥ १४ ॥
मैत्रेयीब्राह्मणं ॥ ६ ॥ ५ ॥

प्रायमाह । याज्ञवल्क्यः ॥ स होवाचेत्यादिना । प्रागिवार्थो ध्येयः ॥ ६ ॥ ५ ॥ १३ ॥ अविनाशीत्यादिना बौद्धाभिमतमोक्षं

अनुच्छित्तिधर्मेत्यनेन तार्किकाभिमतं यत्र हीत्यादिनाऽद्वैत्यभिमतं मोक्षं च निरस्यांतं इत्युक्तानुशासनाऽसि मैत्रेयीत्युक्त्वोपसंहरति ॥ एतावदरे खल्वमृतत्वमिति । अविनष्टस्वस्वरूपः अनुच्छिन्नज्ञानसुखादिधर्मः सन्जीवः स्वरूपभूतसर्वेंद्रियैर्भगवद्विषयक ज्ञानविषयभोगादिमानित्येव खल्वमृतत्वं मोक्ष इत्यर्थः । ततः किमकरोदित्यत आह वेदपुरुषः । इत्युक्त्वा मैत्रेयी प्रत्युपदिश्य

अथवंशः पौतिमाष्योगौपवनात्गौपवनः पौतिमाष्यात्पौतिमाष्योगौपवनात्गौपवनः कौशि
कात्कौशिकः कौंडिन्यात्कौंडिन्यः शांडिल्याच्छांडिल्यः कौशिकाच्चगौतमाच्चगौतमः ॥ १ ॥
आग्निवेश्यादाग्निवेश्योगार्ग्यात्गार्ग्योगार्ग्याद्गार्ग्योगौतमात्गौतमः सैतवात्सैतवः पाराश
र्यायणात्पाराशर्यायणोगार्ग्यायणाद्गार्ग्यायणउद्दालकायनादुद्दालकायनोजाबालायनाज्जाबाला
यनोमाध्यंदिनायनान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषाणात्काषायणः सायका
यनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥

विजहार यथेष्ट विहारमकरोदित्यर्थः ॥ १४ ॥ पंचमं मैत्रेयीब्राह्मणं ॥ ५ ॥ अध्यायद्वयोक्तविद्यासु बुभुत्सुश्रद्धाजननाय तासां विद्यानां प्रवर्तकानृषीनाह ॥ अथ वंश इत्यादिना । अत्र पंचम्यंतैरुपदेष्टारः प्रथमांतैरुपदेश्याः निर्दिश्यंत इति ज्ञेयं ।

घृतकौशिकाद्धृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जा
तूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवर्णेस्त्रैवर्णिरौपजंधनेरौपजंधनिरासुरेरासुरिर्भारद्वा
जाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कै
शोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्या
द्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादां
गिरसादयास्य आंगिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ
दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः
प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातना
त्सनातनः सनकात्सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥६॥६॥ इति बृहदा
रण्यके षष्ठोऽध्यायः ॥ ६ ॥

अत्राश्विप्रभृतिभ्योऽथर्वप्रभृतेराधिक्याभावेऽपि ततः उपदेशं लीलया गृह्णंतीति तारतम्याविरोधः ॥ १ ॥ इति वंशब्राह्मणं ॥ ६ ॥

॥ इति श्रीकाण्वोपनिषदर्थसंग्रहे राघवेंद्रयतिकृते षष्ठोऽध्यायः ॥ ६ ॥ चतुर्ष्वध्यायेषूक्तानां भिन्नाः शेषभूता विद्याः सप्तमाष्टमाभ्यां निरूप्यंते ॥ तत्र भगवतोऽवताराणां आविर्भावतिरोभावलक्षणां विद्यामाह ॥ पूर्णमद इति । अदो मूलरूपं पूर्णं इदं अवताररूपं पूर्णं । पूर्णात् मूलरूपात्पूर्णमवताररूपमुदच्यते उद्गच्छति । आविर्भवति । पूर्णस्य मूलरूपस्य यदवताररूपं पूर्णं । तदात्मन्यादाय एकीभूय पूर्णं मूलरूपमेवावशिष्यते । अवतिष्ठत इत्यर्थः । अवतारिणो मूलरूपस्य हरेः स्वरूपमाह ॥

पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते ॥ १ ॥ ॐ३खंब्रह्मखंपु
राणंवायुरंखमितिहस्माहकौरव्यायणीपुत्रोवेदोयंब्राह्मणाविदुर्वेदोऽनेनैनयद्वेदितव्यं ॥ २ ॥
प्रथमंब्राह्मणं ॥ ७ । १ ॥

॥ ओमिति । मूलरूपं सर्वगुणपूर्णत्वादोमित्युच्यते । प्रकाशरूपत्वात् खं । व्याप्तत्वात् ब्रह्म । सुखरूपत्वात्खं । अनादित्वात्पुराणं । वायो रतिदत्वाद्वायुरं । ख्यातत्वात्खं । इति कौरव्यायणीपुत्रो बलभद्र आह स्म ह । अयं हरिः ज्ञानरूपत्वात् । वेद इति यं ब्राह्मणाः विदुः न केवलं ज्ञानरूपत्वाद्वेद इति ब्राह्मणा विदुः । किंतु ज्ञानहेतुत्वाच्च वेद इत्युच्यत इत्याह ॥ वेदोनेनैनेति । वेद उ अनेन एन इति पदविभागः । यं ब्राह्मणाः विदुः । अनेन एन उ निर्दोषत्वहेतुना अकारवाच्येनैव वेदितव्यं ज्ञातव्यं यत्

तद्वेद जीवोतो वेदेत्यर्थः ॥२॥ प्रथमब्राह्मणं ॥ छ ॥ सर्वप्राणिसाधारणानुष्ठेयमाह ॥ त्रया इति। प्राजापत्याः प्रजापतेर्ब्रह्मणः पुत्राः । त्रयाः त्रिविधाः । ब्रह्मार्थं चरणं ब्रह्मचर्यं । नोऽस्मभ्यं उपदेष्टव्यं भवान् ब्रवीत्विति देवाः ब्रह्माणं प्रत्यूचुरिति योजना। एवमग्रेऽपि । एवमुक्त उपदिदेशेत्याह ॥ तेभ्यो देवेभ्य इति । द इत्यरक्षरं देवेभ्य उपदिश्य तदर्थो ज्ञातः किं भवद्भिरित्यप्यु वाचेत्याह ॥ व्यज्ञासिष्टा ३ इति । ज्ञातवंतः किमित्यर्थः । उवाचेत्यनुकर्षः । व्यज्ञासिष्टेति वक्तव्ये व्यज्ञासिष्टा ३ इति प्लुतः प्रश्न

त्रयाःप्राजापत्याःप्रजापतौपितरिब्रह्मचर्यमूषुर्देवामनुष्याअसुराउषित्वाब्रह्मचर्यंदेवाऊचुर्ब्रवी
तुनोभवानितितेभ्योहैतदक्षरमुवाचदइतिव्यज्ञासिष्टा३इतिव्यज्ञासिष्मेतिहोचुर्दाम्यतेतिनआ
त्थेत्योमितिहोवाचव्यज्ञासिष्टेति ॥ १ ॥

द्योतकः। एवमग्रेपि। एवं पृष्टा देवाः ज्ञातवंतः स्म इत्यूचुरित्याह ॥ व्यज्ञासिष्मेति ।दाम्यत सद्गुणोच्छ्रितत्वहेतुना अहंकारवंतो मा भवतेति नोस्मान्प्रत्यात्थ कथितवानसीति व्यज्ञासिष्मेत्यूचुरित्यर्थः । तत्र ब्रह्मा संवादमकरोदित्याह ॥ ओमिति । यूयं द इत्युक्त स्यार्थं व्यज्ञासिष्ट भवंतो ज्ञातवंत इति ओं अंगीकृतवानस्मीति होवाचेति। प्रजापतिरित्यनुकर्षः । एवमग्रेपि प्रश्नप्रत्युत्तरयोजना

ज्ञेया ॥ ७ ॥ २ ॥ १ ॥ एनं प्रजापतिं । दत्तेति निष्कामनया मुक्तिहेतुज्ञानसाधनदेवाद्युद्देशेन हविरादिदानं कुरुतेति न आत्थेत्यूचुरित्यर्थः ॥ दयध्वं प्राणिषु दयां कुरुतेत्यर्थः । तदेतदेव ब्राह्मणोपदिष्टमेव । एषा दैवी वाक् । स्तनयित्नुर्दाम्यत दत्त

अथहैनंमनुष्याऊचुर्ब्रवीतुनोभवानितितेभ्योहैतदेवाक्षरमुवाचदइतिव्यज्ञासिष्टा३इतिव्यज्ञासिष्मेतिहोचुर्दत्तेतिनआत्थेत्योमितिहोवाचव्यज्ञासिष्टेति ॥२॥ अथहैनमसुराऊचुर्ब्रवीतुनोभवानितितेभ्योहैतदेवाक्षरमुवाच दइतिव्यज्ञासिष्टा३इतिव्यज्ञासिष्मेतिहोचुर्दयध्वमितिनआत्थेत्योमितिहोवाचव्यज्ञासिष्टेतितदेतदेवैषादैवीवागनुवदतिस्तनयित्नुर्ददद‌इति दाम्यत दत्त दयध्वमितितदेतत्त्रयꣳशिक्षेद्दमंदानंदयामिति ॥ ३ ॥ द्वितीयब्राह्मणं ॥ ७ । २ ॥

एषप्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वंतदेतत्त्र्यक्षरꣳहृदयमितिहृइत्येकमक्षर(माहरं)मभिहरंत्यस्मैस्वाश्चान्येचयएवंवेददइत्येकमक्षरंददत्यस्मैस्वाश्चान्येचयएवंवेदयमित्येकमक्षरमेतिस्वर्गंलोकंयएवंवेद ॥ १ ॥ तृतीयं ब्राह्मणं ॥ ७ । ३ ॥

दयध्वमिति भावेन ददद इति त्रिरनुवदति । तस्माद्ब्रह्मणैवमुपदिष्टत्वात् दमं दानं दयामित्येतत्त्रयं सर्वोऽपि शिक्षेत् अनुतिष्ठेदित्यर्थः ॥ ७ ॥ २ ॥ ३ ॥ इति द्वितीयब्राह्मणं ॥ छ ॥ चतुर्मुखभगवद्विषयां विद्यामाह ॥ एष प्रजापतिरिति । यद्धृदयमिति

नाम तद्वाच्यः एषः प्रकृतः । प्रजापतिः प्रजापतिपदोक्तो ब्रह्मा हरिश्चेत्यर्थः । यज्ञभागहरणाज्ज्ञानदानादव्यवधानेन हरिप्राप्ते र्निमित्तेन हृदयनामब्रह्मणः । हरेस्तु स्वभागहरणाद्दानान्नृणांफलयापनादिति ज्ञेयं। एतद्धृदयनामकं प्रजापतिशब्दितं द्वयं ब्रह्म एतद्धृदयनामकं द्वयं सत्यं । सद्गुणरूपत्वात्सत्यनामकं च। हृदयशब्दवर्णार्थतया चोपासनमावश्यकमिति भावेनाह ॥ तदेतत्त्र्य क्षरमिति । तत्प्रजापतिनामभूतं । हृदयमित्येतन्नाम त्र्यक्षरमिति । तानि क्रमेण निर्दिश्य तद्वेदिनः फलमाह ॥ हृ इत्येक मक्षरमिति । यज्ञभागहरणात् हृ इत्युच्यते ब्रह्मा। स्वभागहरणाद्धरिर्हृ इत्युच्यते। हरतेः विच्। योधिकारी एवमुक्तनिमित्तेन

**तद्वैतदेतदेवतदाससत्यमेव सयोहैतंमहद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिजयतीमाँल्लोकान्जितइन्व सावसद्यएवमेतंमहद्यक्षंप्रथमजंवेदसत्यंब्रह्मेतिसत्यꣳह्येवब्रह्म ॥ १ ॥ चतुर्थब्राह्मणं ॥ ७ । ४ ॥**

हृ शब्दार्थत्वेन ब्रह्माणं हरिं च वेद। अस्मै ज्ञानिने स्वाश्च स्वकीयाश्चान्ये च आहरंति । इष्टमिति योज्यं । योधिकारी एवं ज्ञान दानाद इत्येकमक्षरं। एतदक्षरार्थत्वेन वेद । अस्मै स्वाश्चान्ये च ददति। प्रयच्छंति। अन्येभ्यो हृत्वाऽस्मै प्रयच्छंतीत्यभिप्रायादाह रंति ददतीत्यनयोर्न पौनरुक्त्यं। योधिकारी एवमनन्यद्वारेण परब्रह्म यानात् गमनात्। ब्रह्माणं यमित्येकाक्षरार्थत्वेन वेद । तथा नृणां फलयापनात् य इत्यक्षरार्थं हरिं च वेद स स्वर्गाख्यं विष्णुलोकमेति प्राप्नोतीति ॥१॥ **तृतीयब्राह्मणं** ॥ छ ॥ प्रकृत भगवन्निष्ठं विद्यांतरमाह ॥ **तद्वैतदिति** । ततत्वान्निर्विकारत्वात्तत्। वै प्रसिद्धं एतदेव तत् तादृशततत्त्वादिगुणयुक्तं । नान्यत्ता

दशामित्यर्थः । सत्यमेवेत्येवकारस्तदित्यत्रान्वेति । तदेव नारायणाख्यं ब्रह्मैव सत्यं । मुमुक्षुभिः साध्यतया प्राप्यतया वासुदेवाख्य मास आसीत् । तज्ज्ञानिनः फलमाह ॥ स य इति । योऽधिकारी । एवं ततत्वादिगुणयुक्तं । महद्यक्षं महायाज्यं । प्रथमजं प्रथममाविर्भूतं । सत्यं मुमुक्षुभिरासाद्यं वासुदेवाख्यं रूपं ब्रह्मेति वेद । स इमांल्लोकान् जयति । भूम्यादिलोकजयो नाम धर्मज्ञानादिसाधनपूर्तिर्ध्येया । ऐहिकप्राप्तिरानुषंगिकीति भावेनाह ॥ जित इन्वसाविति । य एवमेतं महद्यक्षं प्रथमजं सत्यं

आपएवेदमग्रआसुस्ताआपःसत्यमसृजंत सत्यंब्रह्म ब्रह्मप्रजापतिं प्रजापतिर्देवांस्तेदेवाः सत्य मेवोपासतेतदेतत्त्र्यक्षरꣳसत्यमितिसदित्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमेअ क्षरेसत्यं मध्यतोनृतं तदेतदनृतमुभयतःसत्येनपरिगृहीतंसत्यभूयमेवभवति नैवंविद्वाꣳसमनृ तंहिनस्ति ॥ १ ॥

ब्रह्मेति वेद । तेनासौ परलोको जित एव असत् आसीदिति । सत्यं ब्रह्मेत्युपासनं नाविद्यमानोपासनमित्याह ॥ सत्यं ह्येव ब्रह्मेति ॥ १ ॥ इति चतुर्थब्राह्मणं ॥ छ ॥ भगवद्विषयविद्यांतरमाह ॥ आप इति । इदमग्रे अस्य प्रपंचस्याग्रे आप एव । आ समंतात्सर्वगुणान्पिबत्यनुभवतीति वा पातीति वा । आप इत्युक्तो नारायण आसीदित्यर्थः । शब्दस्वाभाव्याद्बहुवचनं । ताः आपो नारायणः सत्यं मुमुक्षुभिरासाद्यं वासुदेवाख्यमसृजंत असृजत् । सत्यं किमित्यत आह ॥ सत्यं ब्रह्मेति । ब्रह्म वासु

देवाख्यं ब्रह्म प्रजापतिं ब्रह्माणमसृजदित्यनुकर्षः । प्रजापतिर्देवानसृजतेत्यनुषंगः । तस्मादितिशेषः । पितृत्वाद्धेतोः । ते देवाः ब्रह्मादयः । सत्यमेव सत्याख्यं वासुदेवमेवोपासते । सत्याख्योपास्तिः सत्य शब्दार्थयुक्तत्वेनेति भावेनाह ॥ तदेतदिति । तद्वासुदेववाचि सत्यमित्येतत्पदं त्र्यक्षरं । तानि निर्दिशति ॥ सदित्येकमक्षरमित्यादिना । प्रथमोत्तमे आद्यंते अक्षरे सत्यं सत्ये साधुत्वार्थे मध्यतो मध्ये विद्यमानमक्षरमनृतं ततत्वान्मिथ्याज्ञानार्थकं तदेतदनृतं मिथ्याज्ञानार्थकं ती(ति)त्यक्षरं उभयतः

तद्यत्तत्सत्यमसौसआदित्योयएषएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तावेतावन्योन्य
स्मिन्प्रतिष्ठितौरश्मिभिरेषोस्मिन्प्रतिष्ठितःप्राणैरयममुष्मिन्सयदोत्क्रमिष्यन्भवतिशुद्धमेवै
तन्मंडलंपश्यतिनैनमेतेरश्मयःप्रत्यायंति ॥ २ ॥

पार्श्वद्वये । सत्येन सदित्यनेन यमित्यनेन चाक्षरेण परिगृहीतं । सत्यं भूयमेव भवति । साध्वर्थमेव भवति । मिथ्याज्ञानसाधन हेतुना सदिति पूर्वाक्षरेणोक्तेन हरिणा मिथ्याज्ञाननाशनहेतुना च । यमित्युत्तराक्षरेणोक्तेन च हरिणा संदष्टंती(ति)त्यनेनोक्त मिथ्याज्ञानं साधुषु व्याप्तिं कथं लभेतेति भावः । एतद्विद्यावेदिनः फलमाह ॥ नैनमिति । विद्वांसं एतद्विद्याज्ञानिनमेनमनृतं मिथ्याज्ञानं न हिनस्ति । न बाधत इति ॥ ७ ॥ ५ ॥ १ ॥ प्रकृतवासुदेवस्य रूपद्वयविषयं विद्यांतरमाह ॥ तद्यदिति । तत्प्रसिद्धं यत्प्रकृतं वासुदेवाख्यं सत्यं तदसौ स आदित्यः हविषामादानादादित्यनामा । क आदित्य इत्यत आह ॥ य एष

इति। एतस्मिन्मंडले पुरुषो यो वर्तते एष हरिरादित्य इत्यर्थः। यश्चायं दक्षिणेऽक्षन् अक्षणि पुरुषोस्ति सोपि सत्यमिति योज्यं। तावेतौ रूपविशेषावन्योन्यस्मिन्प्रतिष्ठितौ। सूर्यमंडले स्थितोऽक्षणिं तिष्ठति। अक्षिगतो मंडले प्रतिष्ठितोस्तीत्यर्थः। स्थितिप्रकारं दर्शयति॥ रश्मिभिरिति। एष मंडलस्थो रश्मिभिरस्मिन्नक्षणि प्रतिष्ठितः। अयमाक्षिगतः। प्राणैश्चक्षुरादिभिरमुष्मिन्मंडले स्थित इत्यर्थः। मंडलस्थोक्षिस्थ इति कुत इत्यत आह॥ स इति। स दक्षिणाक्षिस्थो हरिः। यदास्माच्छरीरादुत्क्रमिष्यन्भवति।

यएषएतस्मिन्मंडलेपुरुषस्तस्यभूरितिशिरएकꣳशिरएकमेतदक्षरं भुवइतिबाहूद्वौबाहूद्वेएते अक्षरे सुवरितिप्रतिष्ठा द्वेप्रतिष्ठेद्वेएतेअक्षरे तस्योपनिषदहरितिहंतिपाप्मानंजहातिचयएवंवेद ॥३॥

तदैव म्रियमाणो जीवः। शुद्धमेव रश्मिहीनमेव। मंडलं पश्यति। रश्मीनामभावान्न पश्यति किमित्यत आह॥ नैनमिति। एते विद्यमाना अपि रश्मयः एनं न प्रत्याययंति। आत्मविषयकप्रतीतिं न जनयंतीत्यर्थः। केषांचिन्मृतिसमये केषांचित्सप्त भिर्दिनैरिति ज्ञेयं॥ ७॥ ५॥ २॥ सूर्याक्षिस्थितवासुदेवरूपयोर्ध्यानार्थमवयवनामान्याह॥ य एष इत्यादिना खंडद्वयेन। य एष एतस्मिन्मंडले पुरुषो दक्षिणाक्षणि च पुरुषो हरिः। तस्य शिरः दृष्ट्या वाचा च भावयति रक्षतीति भूरित्युच्यते। शिरसो भूर्नामत्वं युक्तमित्याह॥ एकं शिर इति। एतदक्षरं। भूरित्येतदक्षरं तस्याक्षिमंडलयोः स्थितस्य। दक्षिणोत्तर

बाहूक्रमादुत्पादनविनाशहेतुत्वनिमित्ताभ्यां भु इति व इति चाक्षरद्वयप्रतिपाद्यतया भुव इत्युच्येते। बाहोर्भुव इत्यक्षरद्वयार्थत्वमुपपादयति ॥ द्वौ बाहू इति। तस्य प्रतिष्ठाप्रतिष्ठे। दक्षिणोत्तरपादौ क्रमात्सुखज्ञानदातृत्वरूपनिमित्ताभ्यां सुवरित्यक्षरद्वयेनोच्येते। तदुपपादयति ॥ द्वे प्रतिष्ठे इति। मंडलाक्षिस्थितयोर्नामाह ॥ तस्येति। उपनिषद्रहस्यं। सर्वलोकप्रकाशनहेतुनाऽहरिति अहेयत्वहेतुनाऽहमिति नामेत्यर्थः। अहर्दिनं प्रकाशश्चेति प्रागुक्तस्मृतेः। एतज्ज्ञानिनः फलमाह ॥ हंति पाप्मानइति। कानि

योयंदक्षिणेक्षन्पुरुषस्तस्यभूरितिशिरएकंशिरएकमेतदक्षरं भुवइतिबाहूद्वौबाहूद्वेएतेअक्षरे
सुवरितिप्रतिष्ठाद्वेप्रतिष्ठेद्वेएतेअक्षरे तस्योपनिषदहमितिहंतिपाप्मानंजहातिचयएवंवेद ॥४॥
पंचमंब्राह्मणं ॥ ७। ५॥ मनोमयोयंपुरुषो भाः सत्यस्तस्मिन्नंतर्हृदये यथाव्रीहिर्वायवोवा
सएषसर्वस्येशानःसर्वस्याधिपतिःसर्वमिदंप्रशास्तियदिदंकिंच ॥ षष्ठब्राह्मणं ॥ ७। ६॥

चित्पापानि हंति। कानिचित्पापाभिमानिकल्यादीनि जहाति त्यजतीत्यर्थः ॥ ७॥ ५॥ ४॥ इति पंचमं ब्राह्मणं ॥ भगवद्विषयविद्यांतरमाह ॥ मनोमय इति। अयं पुरुषो हरिः। मनोमयो ज्ञानप्रधानः। महाज्ञान इति यावत्। भाः प्रकाशरूपः। सत्यः सद्गुणात्मकः। तस्मिन्जीवसंबंधिनि अंतर्हृदये हृदयमध्ये। तिष्ठतीति शेषः। तस्य परिमाणं दृष्टांतेनाह ॥ यथेति। व्रीहिर्वा यवो वा यत्परिमाणस्तत्परिमाणस्तिष्ठतीत्यर्थः। तस्य महिमांतरमाह ॥ सर्वस्येति। ईशानां रुद्रादीनामनश्रेष्ठकः।

सर्वस्य जगतोऽधिपतिः स्वामी । यदिदं किंच जगत् इदं सर्वं प्रशास्ति नियमयतीति ॥ ७ ॥ ६ ॥ १ ॥ षष्ठं ब्राह्मणं ॥ भगव द्विषयविद्यांतरमाह ॥ विद्युदिति । विशेषेण द्यति खंडयति अज्ञानादिकमिति वा । सर्ववेदनाद्वा । विद्युद्ब्रह्मेत्याहुः । वेदवेदिन इति योज्यं । कुतो ब्रह्म विद्युदित्युच्यत इत्यतस्तस्यार्थं स्वयमेवाह ॥ विदानादिति । विशेषेण खंडनाद्वेदनाद्वा विद्युदित्यर्थः । दो अवखंडने विद ज्ञान इति धातोः । फलमाह ॥ विद्यतीति । योधिकारी एनं भगवंतमेवमज्ञानादिखंडकत्वेन वा सर्ववेदन

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युत्विद्यत्येनंपाप्मनोयएवंवेदविद्युद्ब्रह्मेतिविद्युद्ध्येवब्रह्म ॥ सप्तमब्राह्मणं ॥७॥७॥ वाचंधेनुमुपासीततस्याश्चत्वारःस्तनाःस्वाहाकारोवषट्कारोहंतकारःस्वधाकारस्तस्यैद्वौस्तनौदेवाउपजीवंतिस्वाहाकारंचवषट्कारंचहंतकारंमनुष्याःस्वधाकारंपितरस्तस्याः प्राणऋषभोमनोवत्सः ॥ अष्टमब्राह्मणं ॥ ७ । ८ ॥

हेतुत्वेन वा विद्युद्ब्रह्मेति वेद । हरिः तस्य पाप्मनो विद्यति । विशेषेण द्यति खंडयति । तथा स्वात्मानं विद्यति वेदयतीत्यर्थः । विद्युत्त्वेन हरेर्ज्ञानं न मिथ्याज्ञानमिति भावेनाह ॥ विद्युद्ध्येव ब्रह्मेति ॥ ७ ॥ ७ ॥ १ ॥ इति सप्तमं ब्राह्मणं ॥ सर्व विद्यासिद्ध्यंगभूतां सरस्वतीविषयविद्यामाह ॥ वाचमिति । वाचं वाग्देवीं सरस्वतीं धेनुरूपतया स्थितामुपासीत । तस्याश्चत्वारः स्तनाः । चतुर्भिः स्तनैरभिमन्यमाना इत्यर्थः । तान्निर्दिशति ॥ स्वाहाकार इत्यादिना । स्वधाकार इतीति शब्दो योज्यः ।

तस्यै तस्याः गोरूपायाः । द्वौ स्तनौ स्तनद्वयाभिमन्यमानौ स्वाहाकारं वषट्कारं चेत्येतौ । देवाः उपजीवंतीत्यर्थः । मनुष्याः पितर इत्यत्रोपजीवंतीत्यनुषंगः । तस्याः गोरूपायाः वाचः प्राणो मुख्यवायुः । ऋषभः पतिः । मनो मनोमानी रुद्रः वत्सः ॥७॥ ॥ ८ ॥ १ ॥ इत्यष्टमं ब्राह्मणं ॥ भगवद्विषयविद्यांतरमाह ॥ अयमग्निरिति । योयमंतः पुरुषे जीवांतरास्ते । अयं हरिरग्निः अंगशब्दितप्राणिशरीरनेतृतया अग्निनामा । जाठराग्नौ स्थितः वैश्वानरो वैश्वानरनामा च । विश्वगुणपूर्णत्वाद्विश्वः नरीयते न

अयमग्निर्वैश्वानरोयोयमंतःपुरुषे येनेदमन्नंपच्यतेयदिदमद्यतेतस्यैषघोषोभवतियमेतत्कर्णाव पिधायश्शृणोतिसयदोत्क्रमिष्यन्भवतिनैनंघोषंश्शृणोति ॥ नवमब्राह्मणं ॥ ७ । ९ ॥

नश्यतीति नरः वैश्वश्चासौनरश्चेति वैश्वनरः स एव वैश्वानर इत्युच्यते । तस्य व्यापारमाह ॥ येनेति । येन जाठराग्निस्थेन यदिदं प्राणिभिरद्यते इदमन्नं पच्यते । जीर्णं करोति । तस्य कर्मणि षष्ठी । हरेरेष घोषो भवति । जाठराग्निस्थहरिविषयको वायुना क्रियमाणः स्तुतिरूपो घोषो भवतीत्यर्थः । सर्वप्रत्यक्षः स घोष इत्याह ॥ यमिति । एतत् एतौ । स घोषो हरेः स्तुतिरिति कथं ज्ञायत इत्यत आह ॥ स यदेति । स हरिः यदाऽस्माच्छरीरादुत्क्रमिष्यन् भवति । तदा जीवः एनं घोषं न शृणोति । तदेव

मरणसूचकमित्यर्थः ॥७॥९॥१॥ इति नवमं ब्राह्मणं ॥ मुमुक्षोरत्यपेक्षितमार्गविषयां विद्यामाह ॥ यदेति । यदा पुरुषो जीवः अस्माल्लोकाद्देहात्प्रैति निर्गच्छति । वायुं मुख्यवायुपुत्रं प्रवहं । तदाह सूत्रे । वायुशब्दादविशेषविशेषाभ्यामिति । स वायुस्तत्र वायु लोके । तस्मै ज्ञानिने । तत ऊर्ध्वगमनाय । विजिहीते विवरं करोति । कथं यथा रथचक्रस्य खं विवरं तथेति । तेन छिद्रेण स ज्ञानी

यदावैपुरुषोस्माल्लोकात्प्रैति सवायुमागच्छति तस्मैसतत्रविजिहीतेयथारथचक्रस्यखंतेनसऊ
र्ध्वआक्रमतेसआदित्यमागच्छाततिस्मैसतत्रविजिहीतेयथालंबरस्यखंतेनसऊर्ध्वआक्रमतेसचं
द्रमससमागच्छाततिस्मैसतत्रविजिहीतेयथादुंदुभेःखंतेनसऊर्ध्वआक्रमतेसलोकमागच्छत्यशोक
महिमंतास्मिन्वसातिशाश्वतीःसमाः ॥ दशमब्राह्मणं ॥७। १०॥

ऊर्ध्वः ऊर्ध्वगतिः सन्नाक्रमते गच्छति । स ऊर्ध्वं आक्रांतः आदित्यं सूर्यमागच्छति तस्मा इत्यादि प्राग्वत् । लंबरस्य वाद्यविशेषस्य । दुंदुभेर्वाद्यविशेषस्य स लोकमित्यतः प्राक् स विद्युतमागच्छति । तत ऊर्ध्वमाक्रमते स वैद्युतमिति वाक्यशेषो ध्येयः । वैद्युतेनैवेति सूत्रात् । स ज्ञानी मुख्यवायुं प्राप्तः । अशोकमहिमं शोकोपलक्षितसर्वोपप्लवरहितमहिमोपेतं लोकं विष्णुलोकमागच्छति तस्मिंल्लोके

शाश्वतीः समाः अनंतवत्सरान्वसति । अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्रात् ॥७॥१०॥१॥ विद्यांतरमाह ॥ एतदिति । यद्व्याधितस्तप्यते पुमानेतद्विष्णवे परमं तप इत्येव चिंतयेत् । योधिकारी । व्याधिभिस्तपनं हरये तप इत्येवं वेद स परमं लोकं

एतद्वैपरमंतपोयद्व्याधितस्तप्यतेपरमꣳहैवसलोकंजयतियएवंवेदैतद्वैपरमंतपोयंप्रेतमरण्यꣳहरं
तिपरमꣳहैवसलोकंजयतियएवंवेदैतद्वैपरमंतपोयंप्रेतमग्नावभ्यादधतिपरमꣳहैवसलोकंजयति
यएवंवेद ॥ एकादशब्राह्मणं ॥७।११॥ अन्नंब्रह्मेत्येकआहुस्तन्नतथा पूयतिवाअन्नमृतेप्राणा
त्प्राणोब्रह्मेत्येकआहुस्तन्नतथा शुष्यतिवैप्राणऋतेअन्नादेतेत्वेवदेवतेएकधाभूयंभूत्वापरमतांग
च्छतस्तद्धस्माहप्रातृदःपितरंकिंस्विदेवैवंविदुषेसाधुकुर्यांकिमेवास्माअसाधुकुर्यामितिसहस्मा
हपाणिनामाप्रातृदःकस्त्वेनयोरेकधाभूयंभूत्वापरमतांगच्छतीतितस्माउहैतदुवाचवीत्यन्नंवैवि
अन्नेहीमानिसर्वाणिभूतानिविष्टानि रमिति प्राणोवैरं प्राणेहीमानिसर्वाणिभूतानिरमंते
सर्वाणिहवाअस्मिन्भूतानिविशंतिसर्वाणिभूतानिरमंतेयएवंवेद ॥ द्वादशब्राह्मणं ॥ ७।१२ ॥

जयत्येव प्राप्नोत्येव ह । यं प्रेतं दाहायारण्यं श्मशानं हरंति तदपि विष्णवे परमं तप इति चिंतनीयमित्यर्थः । एतज्ज्ञानिनः फलमाह ॥ परमं हैवेति । प्राग्वदर्थो ज्ञेयः । यं प्रेतं शवमग्नौ अभ्यादधति दहंति । तदपि विष्णवे परमं तप इति विद्यात् । वेदिनः फलमाह॥ परमं हैवेति । मृतस्य कथमेतच्चिंतनमिति शंका तु अक्लेशितोपि क्लेशादीनतीतैष्यानिति स्मृत्या निरस्या ॥७॥११॥१॥ ब्रह्मवायु

विपर्यां विद्यामाह ॥ अन्नं ब्रह्मेति । अन्नमानी चतुर्मुखः ब्रह्मा स्वकार्ये भगवदन्यानपेक्ष इत्येके आहुः । तत्तथा न भवति । प्राणात् मुख्यवायुत ऋते । अन्नं अन्नोपजीविशरीरं पूयति दुर्गंधोपेतं भवति । प्राणः मुख्यवायुः । भगवदन्यानपेक्षः स्वकार्यकर इत्येके आहुः । तत्तथा न भवति । अन्नादृते प्राणः शुष्यति । अन्नप्राणयोरन्योन्यानुपजीवित्वे पूयत्वशोषत्वयोः प्राप्तेः कारणादेते त्वेव देवते अन्नप्राणाख्ये । एकधाभूयं एकत्वं । भूत्वानुप्राप्यान्योन्यानुग्राह्यतां प्राप्येति यावत् । परमतां भद्रत्वं गच्छतः । अन्न प्राणावन्योन्यानुग्रहवंताविति कुत इत्यतस्तयोस्तथाभावं ज्ञानिप्रशंसापूर्वकमाख्यायिकया दर्शयति ॥ तद्धस्मा हेति । प्रतृदो वसिष्ठस्तत्पुत्रः प्रातृदः । एवं विदुषे ब्रह्मवायू अन्योन्यापेक्षावेव कार्यक्षमाविति विदुषे । ज्ञानिने । साधु भद्रं । किं स्वित्किनु । कुर्यां । असाधु अभद्रं वा । किंनु कुर्यां । साधुनातिशयः असाधुना बाधो नास्य शक्यः । कृतकृत्यत्वादिति पितरमाह स्मेति योजना । एवं ब्रह्मवायुज्ञानिनं प्रशस्य स पाणिनामा प्रातृदः अन्योन्यापेक्षिणोरनयोरन्नप्राणयोर्मध्ये कस्तु को वा । एकधाभूय मेकत्वं । भूत्वा प्राप्यान्यानुप्राविष्टः सन्निति यावत् । परमतां प्रयोजनविशेषवत्तां गच्छतीति पुनः पितरं वसिष्ठमाह स्म । तस्मै एवं पृष्टवते । प्रातृदाय । प्रतृदःपिता । वीत्येतदु एतदेवोत्तरमुवाचह । किमित्यत आह ॥ अन्नं वै वीति । अन्ने ब्रह्मणि । वि शब्दं निर्वक्ति ॥ अन्ने हीति । अन्नमानिब्रह्मणि सर्वाणि भूतानि । निविष्टानि प्रविष्टानि । विशतेरंतर्णीतण्यर्थात्क्विप्यंतलोपे च वीति रूपमिति भावः ॥ रमितीति । उत्तरमुवाच तस्मा इति योज्यं । रमिति किमित्यत आह ॥ प्राणो वै रमिति । रमिति शब्दं प्राणे निर्वक्ति ॥ प्राणे हीति । रमतेरंतर्णीतण्यर्थात्क्विपि रूपमिति भावः । ब्रह्मा प्रवेशप्रदः । प्राणो रतिप्रदः ।

इत्यनयोरन्योन्यानुप्रवेशेन तुल्यमेव प्रयोजनमित्युत्तरोक्तेस्तात्पर्यं ज्ञेयं । एतज्ज्ञानिनः फलमाह ॥ सर्वाणीति । योधिकारी अन्नमानिनि चतुर्मुखे सर्वप्राणिनां प्रवेशः प्राणेन च रमणमित्येवं प्रकारेण वेद । अस्मिन्ज्ञानिनि सर्वाणि भूतानि निविशंति सर्वाणि भूतानि रमंत इति ॥ ७ ॥ १२ ॥ १ ॥ द्वादशब्राह्मणं ॥ चतुर्भिर्ब्राह्मणैर्मुख्यवायुविषयां विद्यामाह ॥ उक्थमिति। सर्वोत्थापकं निरूप्यत इति । प्रतिज्ञातं किमित्यत आह ॥ प्राणो वा उक्थमिति । तस्योक्थत्वं निरुच्य दर्शयति ॥ प्राणो

उक्थं प्राणोवाउक्थं प्राणोहीदंसर्वमुत्थापयत्युद्धास्माउक्थाविद्वीरस्तिष्ठत्युक्थस्यसायुज्यंसलोकतांजयतियएवंवेद ॥१॥ यजुः प्राणोवैयजुः प्राणेहीमानिसर्वाणिभूतानियुज्यंते युज्यंते ह्यस्मै सर्वाणिभूतानिश्रैष्ठ्यायययजुषःसायुज्यंसलोकतांजयतियएवंवेद ॥ २ ॥

हीति । उत्थापयति सृजत इति वा स्वस्वव्यापारेषु वर्तयतीति वार्थः । ज्ञानिनः फलमाह ॥ उदिति । योधिकारी एवमुत्थापन हेतुत्वेन प्राणं वेद । अस्मै ज्ञानिने । उक्थविद्वीरः पुत्रः उत्तिष्ठ ह । उत्पद्यते ह । उक्थस्य प्राणस्य सायुज्यं समानलोकतां जयति । प्राप्नोति ॥ ७ ॥ १३ ॥ १॥ यजुः मुक्तप्राप्य उच्यत इत्यर्थः । किं यजुरित्यत आह ॥ प्राणो वै यजुरिति । केन हेतुनेत्यत आह ॥ प्राणे हीति । इमानि साधुरूपाणि युज्यंते मुक्ता हि यतोतः यजुरिति । ज्ञानिनः फलमाह ॥ युज्यंते हेति । श्रैष्ठ्यायास्मै युज्यंते । एतस्य श्रैष्ठ्यायानुकूलानि भवंतीत्यर्थः । यजुषः यजुर्नाम्नो वायोः ॥ ७ ॥ १३ ॥ २ ॥ साम सामनामकः

निरूप्यत इत्यर्थः । प्राग्वद्योजना ॥ प्राणे हीति । प्रविष्टानीति योज्यं । सम्यञ्चि हि यतोतः सम्यक्करणात्सामेत्युच्यत इत्यर्थः । अस्मै अस्य श्रैष्ठ्याय सर्वाणि भूतानि सम्यञ्चि कल्पंते । अनुकूलानि भवंतीत्यर्थः ॥ ७ ॥ १३ ॥ ३ ॥ क्षत्रमुच्यत इत्यर्थः । प्राणस्य क्षत्रत्वं प्रसिद्धमित्याह ॥ प्राणो हि वै क्षत्रमिति । केन हेतुनेत्यत आह ॥ त्रायते हैनमिति । क्षणितोः क्षतादेनं

सामप्राणोवैसाम प्राणेहीमानिसर्वाणिभूतानिसम्यंचि सम्यंचिह्नास्मैसर्वाणिभूतानिश्रैष्ठ्या
यकल्पंतेसाम्नःसायुज्यंसलोकतांजयतियएवंवेद ॥३॥ क्षत्रं प्राणोवैक्षत्रं प्राणोहिवैक्षत्रंत्रायने
हैनंप्राणःक्षणितोःप्रक्षत्रमक्षत्रंप्राप्नोति क्षत्रस्यसायुज्यंसलोकतांजयतियएवंवेद ॥ ४ ॥
त्रयोदशब्राह्मणं ॥७।१३॥ भूमिरंतरिक्षंद्यौरित्यष्टावक्षराण्यष्टाक्षरंहवाएकंगायत्र्यैपदमेतदु
हैवास्याएतत्सयावदेषुत्रिषुलोकेषुतावद्धजयतियोस्याएतदेवंपदंवेद ॥ १ ॥

जीवं त्रायते ह इति यतोतः क्षत्रमिति । अक्षत्रं रक्षकरहितं जीवं । शिष्टं प्राग्वत् ॥ ७ ॥ १३ ॥ ४ ॥ इति त्रयोदशब्राह्मणं ॥ सर्वापेक्षितगायत्रीनिष्ठां विद्यामाह ॥ भूमिरित्यादिना । तत्र तावल्लोकवेदवायुस्थान्यनिरुद्धप्रद्युम्नसंकर्षणाख्यानि त्रीणि रूपाणि पादत्रयप्रतिपाद्यानीत्याह ॥ भूमिरिति । द्यौरित्यत्राक्षरद्वयं ध्येयं । इत्यष्टावक्षराणि । गायत्र्यै गायत्र्याः । एकं पदं एकः पादः । अष्टाक्षरमित्यष्टाक्षरसाम्योक्त्या भूम्यंतरिक्षद्युलोकेषु स्थितं भूम्याद्यष्टाक्षरात्मकपदत्रयवाच्यं अनिरुद्धरूपं गायत्र्या

अष्टाक्षरात्मकप्रथमपादप्रतिपाद्यमित्यर्थोऽभिमत इति भावेनाह ॥ एतदिति । एतद्भूम्यादिगतं तच्छब्दवाच्यमनिरुद्धाख्यं रूपं एतदु हैव । एतदेव हि । अस्याः गायत्र्याः एतत्पादप्रतिपाद्यमित्यर्थः । एतज्ज्ञानिनः फलमाह ॥ स यावदिति । यो मुख्योऽधिकारी ब्रह्मा अस्याः गायत्र्याः एतदेवं भूम्यादिलोकस्थं पदं गायत्रीप्रथमपादप्रतिपाद्यमनिरुद्धं । वेद । स ज्ञानी । एषु त्रिषु लोकेषु यावदस्ति यावद्दूरं व्यक्त्याभिव्याप्य तिष्ठति । पदप्रतिपाद्यमनिरुद्धाख्यं रूपं तावज्जयति मुक्तः सन्तावद्व्याप्नोति

**ऋचोयजूंषिसामानीत्यष्टावक्षराण्यष्टाक्षरंहवाएकंगायत्र्यैपदमेतदुहैवास्याएतत्सयावतीयंत्र यीविद्यातावद्धजयतियोस्याएतदेवंपदंवेद ॥ २ ॥**

भूम्यादिलोकानामधिपतिर्भूत्वा यशस्वी श्रीमांश्च भवतीत्यर्थः ॥ ७ ॥ १४ ॥ १ ॥ ऋगित्यष्टाक्षरात्मकऋगादिपदवाच्यं ऋगादिषु स्थितं प्रद्युम्नाख्यं रूपं । गायत्र्यै गायत्र्याः अष्टाक्षरात्मकद्वितीयपादप्रतिपाद्यमित्यभिप्रायेणाह ॥ एतदु हैवस्या एतदिति । यो गायत्र्या एतत् ऋगादिस्थं । पदं द्वितीयपादप्रतिपाद्यं वेद ॥ स यावती यं त्रयीविद्येति । ऋगादिवेद त्रयगतं प्रद्युम्नाख्यं रूपं यावदभिव्याप्य वर्तते व्यक्त्यात्मना तावद्ध जयति व्याप्नोति । ऋगाद्याधिपत्यादिमांश्च भवतीत्यपि ध्येयं । मुख्याधिकारी मुक्तब्रह्मेत्यर्थः ॥ ७ ॥ १४ ॥ २ ॥ व्यान इत्यत्र त्र्यक्षरं ज्ञेयं । प्राणादिवायुस्थमष्टाक्षरात्मकप्राणादिपदवाच्यं

संकर्षणाख्यं रूपं गायत्र्यै गायत्र्या अष्टाक्षरात्मकतृतीयपादप्रतिपाद्यमिति भावेन प्राण इत्यादि स्ववाक्यार्थं व्यनक्ति ॥ एतदु हैवास्या एतदिति ॥ यावदिदं प्राणीति । प्राणादिवायुस्थसंकर्षणाख्यं रूपं तावज्जयति सर्वप्राणाधिपत्यादिमांश्च भवतीत्यर्थः । शिष्टं प्राग्वत् ॥ ७ ॥ १४ ॥ ३ ॥ गायत्रीचतुर्थपादप्रतिपाद्यमाह ॥ अथेति । अथ त्रिपाद्युक्त्यनंतरं चतुर्थं पादमुच्यत इत्यर्थः । अस्याः गायत्र्याः तुरीयं पदमेतदेवेति योजना । तुरीयं पदं विशिनष्टि ॥ दर्शतं पदं परोरजा इति । दर्शतं प्रत्यक्ष

प्राणोपानोव्यानइत्यष्टावक्षराण्यष्टाक्षरंहवाएकंगायत्र्यैपदमेतदुहैवास्याएतत्सयावदिदंप्राणि तावद्धजयतियोस्याएतदेवंपदंवेद ॥३॥ अथास्याएतदेवतुरीयंदर्शतंपदंपरोरजायएषतपतिय द्वैचतुर्थंतत्तुरीयंदर्शतंपदमि.तिदहशइवह्येषपरोरजाइतिसर्वमुह्येवैषरजउपर्युपरितपतिएवंहैव श्रियायशसातपतियोस्याएतदेवपदंवेद ॥ ४ ॥

मिव स्थितं । रजसः रजोगुणात्मकप्रधानात्पर इति व्युत्पत्त्या परोरजा इत्युक्तो वासुदेवः । प्रणवाख्यतुरीयपादप्रतिपाद्य इत्यर्थः । एतदित्युक्तं किमित्यत आह ॥ य एष तपतीति । सूर्यमंडले स्थित्वा तपति । या सत्वात्मिका रमा तत्रस्थो वासुदेवः एत त्तुरीयं पदमित्यर्थः । तुरीयमिति किमित्यत आह ॥ यद्वा इति । यद्वै तुरीयं तच्चतुर्थमित्यर्थः । दर्शतमिति किमित्यतस्तं व्यनक्ति॥ दर्शतमिति ॥ ददृश इव ह्येष इति । एषः गायत्रीचतुर्थपादप्रणवप्रतिपाद्यः सूर्यमंडलस्थरमादेवीस्थो वासुदेवः ददृश इव दृष्ट

इव । तदधीनतेजःपुंजस्य सूर्यमंडलस्य दृश्यमानत्वात्सोऽपि ददृश इवातो दर्शतमित्युच्यते तुरीयं पदमित्यर्थः । परोरजा इत्येतद्वि वृणोति ॥ परोरजा इतीति । एष तुरीयपादप्रणवार्थो वासुदेवः सर्वमु रजः सर्वामेव रंजनाद्रजःशब्दितां प्रकृतिं । उपर्युपरि तस्या अपि उत्तमः संस्तपति प्रकाशते । हि यतोतः परोरजा इत्युच्यत इत्यर्थः । ज्ञानिनः फलमाह ॥ एवमिति । योधिकारी

सैषागायत्र्येतस्मिंस्तुरीयेदर्शतेपदेपरोरजसिप्रतिष्ठितातद्वैतत्सत्येप्रतिष्ठितं चक्षुर्वैसत्यंचक्षुर्हिवै सत्यं तस्माद्यादिदानींद्वौविवदमानावेयातामहमदर्शमहमश्रौषमितियएवब्रूयादहमदर्शमिति तस्माएवश्रद्दध्यामतद्वैतत्सत्यंबलेप्रतिष्ठितंप्राणोवैबलंतत्प्राणेप्रतिष्ठितंतस्मादाहुर्बलꣳसत्यादोजी यइत्येवमेषागायत्र्यध्यात्मंप्रतिष्ठितासाहैषागयाꣳस्तत्रेप्राणावैगयास्तत्प्राणाꣳस्तत्रेतद्यद्गयाꣳस्त त्रेतस्माद्गायत्रीनामसयामेवामूꣳसावित्रीमन्वाहैषैवसासयस्माअन्वाहतस्यप्राणाꣳस्त्रायते ॥८॥

अस्याः गायत्र्याः एतदेव पदं तुरीयपादरूपप्रणवप्रतिपाद्यं वासुदेवं वेद स एवमेव श्रिया यशसा तपति प्रकाशत इत्यर्थः॥७॥१४॥४॥ गायत्रीप्रतिपाद्यमुक्त्वा तदभिमानिदेवतामाह ॥ सैषेति । सैषा गायत्री गायत्र्यभिमानिनी देवता क्रमात् श्रीब्रह्मब्रह्माण्यात्मिका एतस्मिंस्तुरीये दर्शते पदे । परोरजसि वासुदेवे । प्रतिष्ठिता तदाश्रिता । पदानामर्थः प्रागुक्तः । भगवदाश्रितत्वमेव परंपरोक्त्या व्यनक्ति ॥ तद्वा इत्यादिना । तद्वा एतद्भूमिरंतरिक्षमित्यादिनोक्तं जगत्सत्ये सन्हरिरस्मिन्यातीति व्युत्पत्त्या सत्यनामके शेषे ।

प्रतिष्ठितं आश्रितं । किं सत्यमित्यत उक्तं ॥ चक्षुर्वै सत्यमिति । सत्यं चक्षुर्वै । उपलक्षणमेतत् । चक्षुः सूर्यमंडलाभिमानी वा । इति प्रसिद्धमेवैतदित्याह ॥ चक्षुर्हि वै सत्यमिति । चक्षुषः सत्यत्वं प्रसिद्धमेवेत्युक्तं दर्शयति ॥ तस्मादिति । तस्मा चक्षुषः सत्यत्वादेव यत् यदि । कस्मिंश्चिदर्थे । इदानीं विवदमानौ द्वावेयातामागच्छतां । किमिति अहमदर्शमश्रौषमिति विवदमाना वित्यर्थः । य एवाहमदर्शमिति ब्रूयात्तस्मै । एतत्तदीयमेव वचनं श्रद्दध्याम विश्वसेमेति । एवं चक्षुषः सत्यत्वमुपपाद्य तदाश्रयमाह ॥ तद्वा एतदिति । तज्जगदाधारभूतं चक्षुःसूर्यमानिसत्यनामकं शेषरूपं बले प्रतिष्ठितं । आश्रितं । किं बलमित्यत आह ॥ प्राण इति । प्राणो मुख्यवायुर्बलं वै बलदेवता वै । तत्सत्यं प्राणे प्रतिष्ठितं । तत्कुत इत्यतो व्यनक्ति ॥ तस्मादिति । ओजीयः श्रेष्ठं । तद्वा एतद्बलं गायत्र्यां प्रतिष्ठितमित्यपि ज्ञेयं । यदर्थं परंपरोक्ता तदिदानीमाह ॥ एवमेवैषेति । एषा बलशब्दितप्राणाधारभूता गायत्रीमानिनी श्रीः । अध्यात्मं । आत्मनामधिपतौ हरौ । प्रतिष्ठिताश्रिता । केन निमित्तेन सा गायत्रीत्युक्तेत्यत आह ॥ गयांस्तत्र इति । तद्व्यनक्ति ॥ प्राणा इति । प्राणा वै गयास्तत्प्राणान् भक्षमाणान् । तत्रे रक्षति । तद्गयांस्तत्रे । तस्मा त्प्राणानां रक्षणाद्गायत्रीनाम तदभिमानिदेव्याः श्रिय इत्यर्थः श्रुत्यादौ सावित्रीति काचिदुच्यते । सा किं गायत्री । तद्भिन्नेत्यतो नेत्याह ॥ स इति । परोरजा इति प्रकृतो हरिः यामेवामुं सावित्रीं । अन्वाह वदति । सैषेव गायत्र्यैव स विष्णुर्यस्मै ब्रह्मणे तामन्वाह ब्रूते । तस्य ब्रह्मणः प्राणान्सर्वदापुत्रवत्त्रायते सेत्यर्थः ॥७॥१४॥५॥ स्वयं गायत्रीं सावित्रीमुक्त्वा केषांचित्पक्षमनूद्य

निराह ॥ तामिति । एके तामेतामनुष्टुभं । तत्सवितुर्वृणीमहे वयं देवस्य भोजनं । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि । इति द्वात्रिंशदक्षरात्मिकामनुष्टुबाख्यां ऋचं सावित्रीमाहुः । तद्वचनप्रकारमाह ॥ वागनुष्टुबिति । तद्वाचं तां वाचमनुष्टुबाख्यां सावित्री मनुब्रूम इति । निषेधति ॥ न तथा कुर्यादिति । स्वमतमाह ॥ गायत्रीमेव सावित्रीमनुब्रूयादिति । गायत्र्युपासकस्य

तांहैतामेकेसावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुप्तद्वाचमनुब्रूमइति नतथाकुर्याद्गायत्रीमेवसावि
त्रीमनुब्रूयाद्यदिहवाअप्येवंविद्बह्विवप्रतिगृह्णाति नहैवतद्गायत्र्याएकंचनपदंप्रति ॥ ६ ॥

सयइमा ंस्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोस्याएतत्प्रथमंपदमाप्नुयादथयावतीयंत्रयीविद्याय
स्तावत्प्रतिगृह्णीयात्सोस्याएतद्द्वितीयंपदमाप्नुयादथयावदिदंप्राणियस्तावत्प्रतिगृह्णीयात्सोस्या
एतत्तृतीयंपदमाप्नुयादथास्याएतदेवतुरीयंदर्शतंपदंपरोरजायएषतपतिनैवकेनचनाप्यंकुतउए
तावत्प्रतिगृह्णीयात् ॥ ७ ॥

फलोक्तिव्याजेन गायत्रीमहिमानमाह ॥ यदि ह वा इति । एवं विद्यदि बह्वपि प्रतिगृह्णातीव । प्रतिग्रहदोषाभावसूचनार्थ इव शब्दः । तत्प्रतिगृहीतं बह्वपि गायत्र्याः एकं चन एकमपि पदं प्रति न हैव भवति । हेति निश्चयः । एकपादविज्ञानफलायापि नालमित्यर्थः ॥७॥१४॥६॥ गायत्र्युपासकस्य फलांतरमाह ॥ स य इमानित्यादिना । स प्रसिद्धो । योधिकारी विरिंचः ।

इमान्पूर्णान् त्रीन्लोकान्विष्णोः प्रतिगृह्णीयात् । सः अस्याः गायत्र्याः प्रथमं पदमाप्नुयात् प्रथमपादोपासनाफलमाप्नुयात् । यो ब्रह्मा । यावती त्रयीविद्या । तावत् तावती । विष्णुतः प्रतिगृह्णीयात्स अस्याः गायत्र्या एतद्द्वितीयं पदं द्वितियपादोपासनाफल माप्नुयात् । अथ यः यावदिदं प्राणि चेतनजातं । तावद्विष्णुतः प्रतिगृह्णीयात्स्वामी भवेदिति यावत् । अस्या एतत्तृतीयपादो पासनाफलमाप्नुयात् । अथास्याः गायत्र्याः । एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति दर्शतं दृष्टमिव स्थितं । रजसः

तस्याउपस्थानंगायत्र्यस्येकपदीद्विपदीत्रिपदीचतुष्पद्यप(द्य)दसिनहिसंपद्यसे नमस्तेतुरीयायद र्शतायपदायपरोरजसेसावदोमाप्रापदितियद्विष्यादसावस्मैकामोमासमृद्धीतिवानहैवास्मैस कामऋध्यतेयस्माएवमुपतिष्ठतेऽहमदःप्रापमितिवा ॥ ८ ॥

प्रधानाल्लक्ष्म्याः परं यत्सूर्यमंडलगं । एतत्तुरीयं पदं प्रणवाख्यचतुर्थपादप्रतिपाद्यं वासुदेवाख्यं । रूपं केन चन केनापि नैवाप्यं । गायत्र्याः प्रथमादिपादत्रयप्रतिपाद्यस्यानिरुद्धादिरूपत्रयस्य त्रिलोकादिमात्रव्यापितया तद्व्यापनसंभवेपि चतुर्थपादप्रतिपाद्यो वासुदेवः सर्वव्यापीति चतुर्थपादप्रतिपाद्योपासकस्य तद्व्यापनरूपफलं नैव लभ्यत इत्यर्थः । चतुर्थपादोपासनाफलं केनापि नाप्यत इति कुत इत्यत आह ॥ कुत उ एतावत्प्रतिगृह्णीयादिति । वासुदेवोनंतत्वाद्यावत्प्राप्नोति तावत्कुतः प्रतिगृह्णीयात् न कुतोपि ॥ ७ ॥
॥ १४ ॥ ७ ॥ गावत्र्युपासनाप्रकारमाह ॥ तस्या इति । उपस्थानं मंत्रकरणकस्तुतिप्रकारो निरूप्यत इत्यर्थः । हे गायत्रि

त्वमेकपदी असि। एकैकपादस्य अष्टाक्षरत्वात्प्रणवस्याप्यकारोकारमकारनादबिंदुघोषशांतातिशांतभेदेनाष्टाक्षरत्वात्प्रणवेन सह पादचतुष्टयस्यापि प्रत्येकं गायत्रीत्वविवक्षयोच्यते एकपद्यसीति। पादः प्रणवयुक्तश्चेत् द्विपदीति। द्विपद्यसि। प्रणवेन विना त्रिपदी असि। स प्रणवा चतुष्पद्यसि। अपद्यसीत्युक्तं तत्कुत इत्यत आह॥ न हि.संपद्यस इति। ब्रह्मणोन्येन मुख्यतो न गम्यस इति अपदी असि। नमस्ते तुरीयाय दर्शताय पदाय परोरजसे। एवमुपासको यद्विंष्यात् यं द्विष्यात्। असौ द्वेष्यः। अदः

एतद्धवैतज्जनकोवैदेहोबुडिलमाश्वतराश्वीमुवाचय(न्नभो)न्नुहोतद्गायत्रीविदब्रूथाअथकथꣳहस्ती भूतोवहसीतिमुखꣳह्यस्याःसम्राण्नविदांचकारेतिहोवाचतस्याअग्निरेवमुखंयदिहवाअपिबह्विवा ग्नावभ्यादधातिसर्वमेवतत्संदहत्येवꣳहैवैवंविद्यद्यपिबह्विवपापंकुरुतेसर्वमेवतत्संप्सायशुद्धःपूतो जरोमृतःसंभवति॥ ९॥ चतुर्दशब्राह्मणं॥ ७। १४॥ ॥ ॥

कामितं मा प्रापत्। नैव प्राप्नुयात्। अस्मै द्वेष्याय असौ कामः मा समृद्धि समृद्धो माभूदिति चोपासिता चेद्गायत्री। तदा अस्मै द्वेष्यायासौ कामो नैव ऋध्यते ह समृद्धो नैव भवति। यदा त्वहमदः कामितं प्रापं प्राप्नुयामिति बुद्ध्या यस्मै कामाय गायत्रीमुप तिष्ठते उपास्ते सा गायत्री तस्मै कामपूर्तिं करिष्यत्येवेति योज्यं॥७॥१४॥८॥ उपासिता गायत्री सर्वप्रतिग्रहदोषं हंतीत्येतदाख्या यिकयाह॥ एतदिति। जनको ह वैदेहः आश्वतराश्विं अश्वतराश्वगोत्रजं। बुडिलनामकं तदेतद्वक्ष्यमाणमुवाचह। भो अहं गायत्री

विदिति यदब्रूथाः। तन्न। यदि वेत्थ अथ तर्हि कथं हस्तीभूतः मूर्खः सत्प्रतिग्रहदोषं वहसीत्युवाचेत्यन्वयः। एवमुक्तः स हे सम्राट् अस्याः गायत्र्याः मुखं प्रथमाक्षरदेवतां न विदांचकार। न ज्ञातवानतोहं दोषवाहकोस्मीत्युवाच। वेदपुरुषः स्वयं गायत्री मुखमाह॥ तस्या इति॥ तस्याः गायत्र्याः अग्निः अग्निमंडलगोऽग्रणीत्वहेतुनाग्निनामाग्निवर्णः परशुरामः। मुखं प्रथमाक्षरदेवता। मुखज्ञानपूर्वकं गायत्र्युपासकस्य फलं दृष्टांतपूर्वमाह। यदि हेति॥ यद्यपि बह्विव बह्वपि तृणतूलादिकं अग्नावभ्यादधति प्रक्षिपंति।

हिरण्मयेनपात्रेणसत्यस्यापिहितंमुखं॥ तत्त्वंपूषन्नपावृणुसत्यधर्मायदृष्टये॥ पूषन्नेकर्षेयमसूर्यप्रा जापत्यव्यूहरश्मीन्समूहतेजोयत्तेरूपंकल्याणतमंतत्तेपश्यामि॥ योसावसौपुरुषःसोहमस्मिवा युरनिलममृतमथेदंभस्मांतꣳशरीरं। ॐ३क्रतोस्मरकृतꣳस्मरक्रतोस्मरकृतꣳस्मर॥ अग्नेनयसुप थारायेअस्मान्विश्वानिदेववयुनानिविद्वान्। युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम॥ पंचदशब्राह्मणं॥ ७। १५॥ इति बृहदारण्यकेसप्तमोध्यायः॥ ७॥

तत्सर्वं संदहत्येवाग्निः। यथेत्युपमार्थ इव शब्दः। एवं हैव एवमेव। एवं वित्। यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय भक्षयित्वा भस्मीकृत्य स्वयं शुद्धः पूतोऽन्यानपि पवित्रं कुर्वन्नजरामृतः संभवति॥७॥१४॥९॥ चतुर्दशब्राह्मणं॥ गायत्र्यर्थत्वेन प्रकृतस्य हरेः सूर्यनिष्ठस्योपासनांतरमाह॥ हिरण्मयेनेति। हिरण्मयमिव हिरण्मयं ज्योतिर्मयं। पिबत्युदकं तमसः त्रायते जगदिति

पात्रं । हिरण्मयेन पात्रेण । सूर्यमंडलेन । सत्यस्य सद्गुणपूर्णस्य । सूर्यमंडलस्थस्य तव मुखमुपलक्षणं वपुः । सर्वदाऽपिहितमस्ति । हे पूषन्पूर्ण । तद्वपुः । त्वं सत्यधर्माय सत्यं भगवंतं हृदये धारयतीति व्युत्पत्त्या त्वद्ध्यानादिमते भक्ताय मह्यं । दृष्टये मम त्वद्दर्शनाय। अपावृणु अपगतावरणं कुरु । हे पूषन्पूर्ण । एकर्षे सर्वविषयकज्ञानादिमन् । यम सर्वनियामक । उदकादेरूर्ध्वीकरणात् । सूर्य प्रजापतिज्ञेयतया प्राजापत्य । रश्मीन् मदीयस्वरूपज्ञानाख्यरश्मीन् । व्यूह विस्तारय । तेजः बाह्यवृत्तिज्ञानं । समूह विस्तारय । तथैवेशावास्यटीकोक्तेः । तथाच यत्तेरूपं कल्याणतमं तद्रूपं । ते प्रसादादहं पश्यामि । मुख्यवायुगतभगवदुपास्तिमाह ॥ योसाविति । योसौ प्रसिद्धः असौ सप्तम्यंतमिदं । असुनामके प्राणे स्थित इति शेषः । सोऽहेयत्वादहमित्युक्तः । असुत्वमेयत्वहेतुभ्यामस्मीत्युक्तः । तं च पश्यामीत्यन्वयः । यमसूर्यादौ स्थितस्य तन्नाशेन नाशोस्ति किमित्यत आह ॥ वायुरिति । यद्यपीदं शरीरं भस्मांतं तथाप्यमृतो भगवान्कुतः अः हरिः निलो निलयनमाश्रयो यस्य सः अनिलं अनिलः भगवदाश्रितो वायुरप्यमृतं । अमृतः किमु परमात्मा । वायोरमृतत्वं नित्यज्ञानत्वेन ज्ञेयं । प्रणवप्रतीकं प्रार्थयते ॥ ओमिति ॐ३ अमृतत्वादिगुणयुक्तः । क्रतो ज्ञानरूप । हरे । मामिति शेषः । स्मर अनुग्रहेण कृतं मदीयध्यानादिकं । स्मर तज्ज्ञात्वा मय्यनुग्रहोन्मुखो भव । अग्निप्रतीकस्थभगवत्प्रार्थनां करोति ॥ अग्न इति । अंगाख्यदेहनेतृतयाऽग्निनामक अग्निस्थहरे । अस्मान्सुपथा । अर्चिरादिमार्गेण । राये मोक्षाख्यवित्ताय । नय प्रापय । कुतः हे देव । अस्मदीयानि । वयुनानि ज्ञानानि । विद्वान् जानन् । जुहुराणं । अस्मानित्यनुपज्यते अस्मानल्पीकुर्वत् पापं । अस्मात् पंचमीयं । अस्मत्तः युयोधि वियोजय । वयं ते तुभ्यं भूयिष्ठां भक्त्याद्युपेतां ।

नमः नम इत्युक्तिं विधेम कुर्मः । न तु तत्प्रतिकर्तुं शक्नुम इति ॥ इति बृहदारण्यकोपनिषदर्थसंग्रहे सप्तमोऽध्यायः ॥ ७ ॥ एतदध्यायार्थः सप्तमादावेवोक्तः । आदौ प्राणादिविषयाविद्या आह ॥ यो ह वा इत्यादिना । योऽधिकारी । ज्येष्ठं वयसोत्तमं । श्रेष्ठं गुणत उत्तमं । वेद । स स्वानां सजातीयानां मध्ये । ज्येष्ठः श्रेष्ठश्च भवति । ह वै को वा ज्येष्ठः श्रेष्ठश्चेत्यत आह ॥ प्राणो वा इति । प्राणस्य ज्येष्ठत्वश्रेष्ठत्वज्ञानिनो ज्येष्ठत्वादिकं भवतीत्येतदपि जानतः फलोक्त्या प्राणस्य ज्येष्ठत्वश्रेष्ठत्वे

योहवैज्येष्ठंचश्रेष्ठंचवेद ज्येष्ठश्चश्रेष्ठश्चस्वानांभवति प्राणोवैज्येष्ठश्चश्रेष्ठश्चज्येष्ठश्चश्रेष्ठश्चस्वानां भवत्यपिचयेषांबुभूषतियएवंवेद ॥१॥ योहवैवसिष्ठांवेदवसिष्ठःस्वानांभवतिवाग्वैवसिष्ठाव सिष्ठःस्वानांभवत्यपिचयेषांबुभूषतियएवंवेद ॥२॥ योहवैप्रतिष्ठांवेदप्रतितिष्ठतिसमेप्रतितिष्ठतिदुर्गेचक्षुर्वैप्रतिष्ठाचक्षुषाहिसमेचदुर्गेचप्रतितिष्ठतिप्रतितिष्ठतिसमेप्रतितिष्ठतिदुर्गेयएवंवेद ॥३॥

साधयति ॥ ज्येष्ठश्च श्रेष्ठश्च स्वानामिति । योऽधिकारी । एवं वायोर्ज्यैष्ठ्यादिज्ञानिनो ज्यैष्ठ्यादिकं भवतीति वेद सोऽपि स्वानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति । न केवलमेतावदित्याह ॥ अपि चेति । येषां मध्ये श्रेष्ठो भवितुमिच्छति तेषु मध्येऽपि श्रेष्ठो भवतीत्यर्थो ध्येयः । एवमग्रेतनखंडपंचकेऽपि व्याख्या ध्येया ॥ ८ ॥ १ ॥ १ ॥ वसिष्ठः वसतामुत्तमः । वाग्वै वागिंद्रियदेवता वह्निर्वै ॥ २ ॥ प्रतितिष्ठति । समे समदेशे प्रतितिष्ठति । दुर्गे उन्नतप्रदेशे स्वर्गादौ । चक्षुर्देवस्य प्रतिष्ठात्वं कुत इत्यतः प्रतिष्ठ.

हेतुत्वादित्याह । चक्षुषा हीति ॥ ३ ॥ संपदं सर्ववेदाभिसंपत्तिहेतुं । यं कामं कामयते स कामोस्मै वेदिने संपद्यते । श्रोत्रदेवस्य संपत्त्वमुपपादयति ॥ श्रोत्रे हीति ॥ ४ ॥ आयतनमाश्रय इत्यर्थः । जनानां स्वजातिभिन्नजनानां । मनोभिमानिनः शेषाद्याः ॥ ८ ॥ १ ॥ ५ ॥ प्रजापतिं । प्रजाजननहेतुं । रेतो वै रेतोभिमानी वरुणो वै । य एवं वेदेति चरमवाक्यज्ञानिनः फलं

योहवैसंपदंवेदसꣳहास्मैपद्यतेयंकामंकामयते श्रोत्रंवैसंपच्छ्रोत्रेहीमेसर्वेवेदाअभिसंपन्नाःसꣳहा
स्मैपद्यतेयंकामंकामयतेयएवंवेद ॥४॥ योहवाआयतनंवेदायतनंस्वानांभवत्यायतनंजनानां
मनोवाआयतनमायतनꣳस्वानांभवत्यायतनंजनानांयएवंवेद ॥५॥ योहवैप्रजापतिंवेदप्रजा
यतेहप्रजयापशुभीरेतोवैप्रजापतिःप्रजायतेहप्रजयापशुभिर्यएवंवेद ॥६॥ तेहेमेप्राणाअहꣳश्रे
यसेविवदमानाब्रह्मजग्मुस्तद्धोचुःकोनोवसिष्ठइतितद्धोवाचयस्मिन्वउत्क्रांतइदꣳशरीरंपापी
योमन्यतेसवोवसिष्ठइति ॥ ७ ॥

भवतीत्यपि यो वेद तस्यापि तत्फलं भवतीत्यर्थः सर्वत्र ध्येयः ॥ ६ ॥ प्राणस्य श्रेष्ठत्वं मीमांसया समर्थितमिति भावेनाख्यायिकामाह ॥ ते हेम इति । त इति प्राणवाक् प्रभृतयः प्रागुक्तप्राणादिदेवाः । अहं श्रेयसे अहं श्रेयानहं श्रेयानित्येतदर्थे विवदमानाः विवादं कुर्वंतः । ब्रह्म परं ब्रह्म । जग्मुः प्राप्ताः । तद्ब्रह्म हरिं । नोमास्कं मध्ये को वसिष्ठः वसतामुत्तम इति श्रेष्ठ इति वा ऊचुरित्यर्थः।

तद्ब्रह्म यस्मिन्नुत्क्रांते इदं ब्रह्मणः शरीरं । पापीयः शवकल्पं मन्यते लोक इति शेषः । सः वो युष्माकं मध्ये । वसिष्ठः श्रेष्ठ इत्युवाचेत्यर्थः ॥८॥१॥७॥ एवं हरिणोक्ता देवाः पुनरागत्य ब्रह्मदेहस्थाः श्रैष्ठ्यविज्ञप्त्यै पृथक् पृथक् देहादुत्क्रांता इत्याह ॥ वाग्घोच्चक्रामेत्यादिना खंडपंचकेन । वाक् वागभिमानी देव उच्चक्राम ब्रह्मदेहान्निर्जगाम । सा वाक् संवत्सरं प्रोष्य प्रवासं

वाग्घोच्चक्राम सासंवत्सरंप्रोष्यागत्योवाचकथमशकतमदृतेजीवितुमिति तेहोचुर्यथाऽकला अवदंतोवाचाप्राणंतःप्राणेनपश्यंतःचक्षुषाशृण्वंतःश्रोत्रेणाविद्वांसोमनसाप्रजायमानारेतसैवमजीविष्मेतिप्रविवेशहवाक् ॥८॥ चक्षुर्होच्चक्राम तत्संवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति तेहोचुर्यथाअंधाअपश्यंतश्चक्षुषाप्राणंतःप्राणेनवदंतोवाचाशृण्वंतःश्रोत्रेणाविद्वांसोमनसाप्रजायमानारेतसैवमजीविष्मेतिप्रविवेशहचक्षुः ॥ ९ ॥

कृत्वा । आगत्य हे देवाः मदृते मां विना । जीवितुं कथमशकत शक्ता अभवतेत्युवाच । इत्युक्तास्ते देवाः यथाऽकलाः मूकाः अवदंतः एवमजीविष्मेत्यूचुरित्यन्वयः प्राणंत इत्यादि व्यक्तं । प्रजायमानाः प्रजां जनयंत इत्यर्थः । एतद्वचनं श्रुत्वा पश्चाद्देहं प्रविवेश वाक् ह किल ॥ ८ ॥ चक्षुरित्यादिखंडचतुष्कयोजनाप्येवं ज्ञेया । तच्चक्षुः । अंधाः चक्षुषाऽपश्यंतो यथा एवमित्यन्वयः ॥ ९ ॥

॥ १० ॥ मुग्धाः षण्मासबाला यथेत्यर्थः ॥ ११ ॥ क्लीबाः नपुंसकाः। अप्रजायमानाः अप्रजनयंतः ॥ १२ ॥ तेषामशक्ति

श्रोत्रंहोच्चक्राम तत्संवत्सरंप्रोष्यागत्योवाच कथमशकतमदृतेजीवितुमिति तेहोचुर्यथाबधि
राअशृण्वंतःश्रोत्रेणप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाविद्वांसोमनसाप्रजायमानारेतसैव
मजीविष्मेतिप्रविवेशहश्रोत्रं ॥१०॥ मनोहोच्चक्रामतत्संवत्सरंप्रोष्यागत्योवाचकथमशकत
मदृतेजीवितुमितितेहोचुर्यथामुग्धाअविद्वांसोमनसाप्राणंतःप्राणेनवदंतोवाचापश्यंतश्चक्षुषा
शृण्वंतःश्रोत्रेण प्रजायमानारेतसैवमजीविष्मेतिप्रविवेशहमनः ॥११ रेतोहोच्चक्रामतत्संव
त्सरंप्रोष्यागत्योवाचकथमशकतमदृतेजीवितुमितितेहोचुर्यथाक्लीबाअप्रजायमानारेतसाप्राणं
तःप्राणेनवदंतोवाचापश्यंतश्चक्षुषाशृण्वंतःश्रोत्रेणाविद्वांसोमनसैवमजीविष्मेतिप्रविवेशहरेतः
॥१२॥ अथहप्राणउत्क्रमिष्यन्यथामहासुहयःसैंधवःपड्वीशशंकून्संवृहेदेवंहैवेमान्प्राणान्संव
बर्ह तेहोचुर्माभगवउत्क्रमीर्नवैशक्ष्यामस्त्वदृतेजीवितुमितितस्योमेबलिंकुरुतेतितथेति ॥ १३ ॥

प्रकटनानंतरं। प्राणः मुख्यवायुः। उत्क्रमिष्यन्ब्रह्मदेहादूर्ध्वं निर्गमिष्यन्स यथा सैंधवः सिंधुदेशीयः। महासुहयः। ऊर्ध्वं

गमिष्यन्पड्वीशशंकून्पादचतुष्टये गले च बध्यमानरज्ज्वा धारार्णान् संवृहेत् उन्मूलयेत् । एवं हैव एवमेव हेमान्प्राणान्वागादीन्दे वान्संवबर्ह उदमूलयत् । स्थातुमशक्तानकरोदिति यावत् । ते स्थातुमशक्ताः वागादिदेवाः हे भगवन् मोत्क्रमीः उत्क्रांतो माभूः । त्वद्दते । वयं जीवितुं नैव शक्ष्याम इत्यूचुः । एवमुक्तः प्राणो वक्ति ॥ तस्यो म इति । उ हे देवाः । तस्य मे अतिबलिष्ठस्य

साह्वागुवाचयद्वाअहंवसिष्ठास्मित्वंतद्वसिष्ठोसीतियद्वाअहंप्रतिष्ठास्मित्वंतद्वसिष्ठोसीति च
क्षुर्यद्वाअह॑ꣳसंपदस्मित्वंतत्संपदसीतिश्रोत्रं यद्वाअहमायतनमस्मित्वंतदायतनमसीतिमनोय
द्वाअहंप्रजातिरस्मित्वंतत्प्रजातिरसीतिरेतःतस्योमेकिमन्नंकिंवासइति यदिदंकिंचआश्वभ्यआ
क्रमिभ्यआकीटपतंगेभ्यस्तत्तेऽन्नमापोवासइति नहवाअस्यानन्नंजग्धंभवति नानन्नंपरिगृहीतं
यएवमेतदनस्यान्नंवेदतद्विद्वाꣳसःश्रोत्रियाअशिष्यंतआचामंत्याशित्वाचाचामंत्येतमेवतदनमन
ग्नंकुर्वंतोमन्यंतेतस्मादेवंविद्वानशिष्यन्नाचामेदशित्वाचाचामेत् ॥१४॥ इतिप्रथमंब्राह्मणं ॥

मम बलिं पूजां कुरुतेति उवाचेति योज्यं । एवमुक्तास्ते देवाः तथेत्यूचुरित्यर्थः ॥ ८ ॥ १ ॥ १३ ॥ तथेत्युक्ता देवाः प्रत्येकं स्वस्वासाधारणधर्मस्तदधीन इति तस्मै समर्पितवंत इत्याह ॥ साह् वागुवाचेत्यादिना । वसिष्ठास्मि वसताम्युत्तमास्मीति यत् त्वं तद्वसिष्ठोऽसि त्वदधीनं तद्वसिष्ठत्वमित्यर्थः । एवमग्रेपि योजना ध्येया । प्रतिष्ठा स्थितिहेतुरिति चक्षुरुवाचेति शेषः । इति श्रोत्रमुवा

चेत्याद्यपि (ज्ञे)नेयं । एवमुक्तः प्राण आह ॥ तस्यो म इति । उ हे देवाः । तस्य मे सर्वस्वामिनो मम । किमन्नं किं वासः इत्युवाच प्राणः । एवमुक्ता देवा आहुर्यदिदामिति । श्वकृमिकीटपतंगपर्यंतं प्राणिभिर्यदिदं किंचाद्यते तत्ते सर्वांतर्यामिणः तवान्नं या आपः पीयंते ता आपः ते वासो वस्त्रमित्यूचुरिति योजना । एतज्ज्ञानिनः फलमाह ॥ न ह वा इति । योधिकारी एवं देवैरुपक्लृप्तत्वप्रकारेणैतत् सर्वप्राणिभिरद्यमानं अन्नं अनस्यान्नं वेद । अस्य एवं वेदिनः अनन्नं जग्धं भक्षितं न भवति ह वै । अनन्नं परिगृहीतं न भवति। एतद्विद्वांसो ज्ञानिनः श्रोत्रियाः छंदोध्येतारः अशिष्यंतः अन्नभोजनं करिष्यंतः आचामंति। अशित्वा

**श्वेतकेतुर्हवाआरुणेयःपंचालानांपरिषदमाजगाम सआजगामजैबलिंप्रवाहणंपरिचारयमाणं तमुदीक्ष्याभ्युवादकुमारा३इतिसभो३इतिप्रतिशुश्रावानुशिष्टोन्वसिपित्रेत्योमितिहोवाच ॥१॥**

भुक्त्वा चाचामंति । तत्तेन भोजनोपक्रमावसानयोः कृताचमनेनैतं अन्नमनग्नं वसनोपेतं कुर्वंतो मन्यंते । तस्मादेवं विद्वानशिष्यन् आचामेत् । अशित्वा चाऽऽचामेदिति ॥८॥१॥१४॥ **प्रथमब्राह्मणं** ॥ आख्यायिकापूर्वं विद्यांतरमाह ॥ **श्वेतकेतुरिति**। अरुणाया अपत्यं श्वेतकेतुर्नाम्ना पांचालानां पंचालदेशीयानां परिषदं सभामाजगाम । जिबिलस्यापत्यं जैबलिं प्रवाहणाख्यं राजानं परिचारयमाणं भृत्यैः परिचर्यां कारयंतं । स श्वेतकेतुराजगाम प्राप । राजा । तं श्वेतकेतुमुदीक्ष्य दृष्ट्वा कुमारा ३ इति त्रिमात्रारूपप्लुतिस्वरेणामंत्र्याभ्युवाद उवाच । स श्वेतकेतुर्भो इति प्रतिशुश्राव । प्रतिवचनमुक्तवान् । किमुवाच राजेत्यत आह ॥

अनुशिष्ट इति । पित्रेदानीमनुशिष्टः उपदिष्टोसि । किमित्यभ्युवादेत्यन्वयः । अनुशिष्टोस्मीत्युक्तवानित्याह वेदपुरुषः ॥ ॐमिति होवाचेति ॥ ८ ॥ २ ॥ १ ॥ राजा पृच्छति ॥ वेत्थेति । यथेमाः प्रजाः प्रयंत्यः प्रयांत्यः । प्रेताः सत्यः । विप्रतिपद्यंते विशिष्टं स्थानमाप्नुवंति । तं प्रकारं वेत्थ जानासि किमिति पप्रच्छ राजेत्यर्थः । विप्रतिपद्यंता ३ यिति प्लुतः प्रश्न

वेत्थयथेमाःप्रजाःप्रयंत्योविप्रतिपद्यंता३यितिनेतिहोवाच वेत्थोयथेमंलोकंपुनरापद्यंता३यिति नेतिहैवोवाचवेत्थोयथासौलोकएवंबहुभिःपुनःपुनःप्रयद्भिर्नसंपूर्यता ३ यितिनेतिहैवोवाचवे त्थोयतिथ्यामाहुत्यां हुतायामापःपुरुषवाचोभूत्वासमुत्थायवदंती३इतिनेतिहैवोवाच वेत्थो देवयानस्यवापथःप्रतिपदंपितृयाणस्यवायत्कृत्वादेवयानंवापंथानंप्रतिपद्यंतेपितृयाणंवापिहि नर्षेर्वचःश्रुतं द्वेसृतीअशृणवंपितृणामहंदेवानामुतमर्त्यानांताभ्यामिदंविश्वमेजत्समेतियदंत रापितरंमातरंचेति नाहमतएकंचनवेदेतिहोवाच ॥ २ ॥

द्योतकः । उत्तरमुक्तवान् कुमार इत्याह वेदपुरुषः ॥ नेतीति । न वेद्मीत्युवाचेत्यर्थः । एवमग्रेपि योजना ध्येया । वेत्थो इत्यत्र वेत्थ उ इति विभागः । उ इति कुमारसंबोधनं । यथेमं भूलोकं पुनरापद्यंते प्राप्नुवंति । असौ लोकः परलोकः एवं तस्य विवरणं पुनः पुनः प्रयद्भिः गच्छद्भिः बहुभिर्न संपूर्यता ३ यिति । तं वेत्थ किमिति पृष्टवानिति सर्वत्र योज्यं । यतिथ्यां कतमायामाहुत्यां

होमाधारस्थले हुतायां। प्रक्षिप्ते सत्यापः अबादिभूतविशिष्टो जीवः। पुरुषवचो भूत्वा पुरुषादिशब्दवाच्यः सन्। समुत्थाय जनित्वा। वदंति व्यवहरति। तद्वेत्थ किमित्यर्थः। देवयानाख्यस्य पथः मार्गस्य। प्रतिपदं साधनं वा वेत्थ उ इत्यर्थः। पितृयाणाख्यस्य पथः प्रतिपदं वा वेत्थेत्यर्थः। प्रतिपदमित्युक्तं व्यनक्ति॥ यत्कृत्वेति। पितृयाणं वा पंथानं प्रतिपद्यंत इत्यन्वयः॥ पुनः राजा वक्ति॥ अपि हीति। मर्त्यानां मनुष्याणां द्वे सृती पितृणामुत देवानां, पितृयाणदेवयानशब्दितौ द्वौ मार्गौ।

अथैनंवसत्योपमंत्रयांचक्रेऽनादृत्यवसतिंकुमारःप्रदुद्राव सआजगामपितरंतंहोवाचेतिवावकिलनोभवान्पुरानुशिष्टानवोचादिति कथंसुमेधइतिपंच मा प्रश्नान्राजन्यबंधुरप्राक्षीत्ततोनैकंचन वेदेति कतमेतइतीमइतिहप्रतीकान्युदाजहार॥ ३॥

ताभ्यामिदं विश्वं विधिनिषेधभयादेजत्कंपमानं सत्समेति। पितरं दिवं। मातरं भुवं च। अंतरा। तयोर्मध्ये यन्मार्गद्वयमस्तीत्याह॥ अशृणवमिति। यद्दषेर्वचः तदपि किं त्वया न श्रुतमिति। एवं राज्ञा पृष्टः कुमारः किमुक्तवानित्यत आह। श्रुतिः॥ नाहमिति। अतः अत्र त्वत्पृष्टेषु ॥८॥२॥२॥ अथ स्वपृष्टार्थस्य तेनाज्ञातत्वादेव। वसत्या वसत्यर्थं तत्त्वज्ञानाय स्वसमीपे वसत्यर्थमेनं कुमारं उपमंत्रयांचक्रे आलोचितवान्। कुमारः श्वेतकेतुः वसतिमनादृत्य प्रदुद्राव। द्रु गतौ गतवान्। स ततः प्रद्रुतः कुमारः स्वपितरमाजगाम। आगत्य तं पितरमुवाच। तदाह। भगवान् पूज्यो भवान्। नोऽस्मानिति वाव किल एवमेव किल अनुशिष्टान्

उपदिष्टानुवाच ।कथ भवान्सुमेध इति चोवाचेत्यन्वयः। यद्वा कथमनुशिष्टानुवाच। इत्युवाचेत्येव पूर्वेणान्वयः। एवमुक्तः पिता आह॥ कथामिति। हे सुमेधः कथं किं जातमित्युवाच पितेत्यर्थः। कुमार आह। राजन्यबंधुः क्षत्रियाभासः प्रवाहणो राजा मा मां पंचप्रश्नान्प्रष्टव्यार्थानप्राक्षीत् पृष्टवान्। ततः तत्र तन्मध्ये नैकंचन अहं वेदेत्युवाच कुमारः। एवमुक्तः पिता वक्ति॥ ते प्रश्नाः कतमे कीदृशा इति। इह पितृसमीपे। इम इति वेत्थ यथेमाः प्रजाः इत्यादिप्रतीकानि वाक्यरूपाण्युदाजहार॥ ८॥

सहोवाचतथानस्त्वंतातजानीथाययथायदहंकिंचनवेदसर्वमहंतत्तुभ्यमवोचंप्रेहितुतत्रप्रतीत्यब्रह्म
चर्यंवत्स्यावइतिभवानेवगच्छत्विातिसआजगामगौतमोयत्रप्रवाहणस्यजैबिलेरासस्तस्माआस
नमाहृत्योदकमाहरयांचकाराथहास्माअर्घ्यंचकारतꣳहोवाचवरंतेभवतेगौतमायदद्मइति॥४॥

॥ २॥ ३॥ पिता वक्ति॥ स हेति। स पितोवाच किमिति। हे तात कुमार। नः अस्मत्सकाशात्तथा जानीथाः यथा यदहं किंचन वेद जानामि। तत्तु सर्वं तुभ्यमवोचमिति स पितोवाचेति योजना। पुनः पिता वक्ति। प्रेहि आगच्छ। प्रतीत्य राजानं दृष्ट्वा तत्र राजसमीपे ब्रह्मचर्यं वत्स्याव इति पुत्रमुवाच पितेत्यर्थः। पुत्रो वक्ति। भवानेवं गच्छत्विति। स पिता गौतम आजगाम। यत्र प्रवाहणस्य जैबिलेरास गृहमिति योज्यं। राजा किमकरोदित्यत आह॥ स इति। स राजा तस्मै गौतमायाऽऽसनमाहृत्य उदकमाहरयांचकार आहृतवान्। अथोदकाहरणानंतरं। अस्मै गौतमायार्घ्यं जलेन भाव्यां क्रियां चकार। तं गौतममुवाच राजा।

ते भगवते गौतमाय वरं दद्म इति ॥४॥ स गौतम उवाच। मे वरं दद्म इत्येष वरो मे त्वया प्रतिज्ञातः। यां तु वाचं कुमारस्यांते समीपे। अभाषथाः तां मे ब्रूहीत्युवाच गौतम इत्यर्थः ॥५॥ स राजोवाच ह। तत् कुमारं प्रत्युक्तं वचनं। दैवेषु वरेषु विषये वै तत् गौतम। मानुषाणां मनुष्यसंबंधिनां ऐहिकानां वित्तादीनामिति यावत् वराणां मध्ये ब्रूहीति ॥६॥ स गौतम उवाच। हस्तिहिरण्यस्य द्वंद्वैकवद्भावः। गो अश्वानां दासीनां प्रवाराणां प्रावरणानां। परिधानस्य वेष्टनवस्त्रस्य चोपात्तं प्राप्तिः नोऽस्माकं भवता विज्ञायते।

सहोवाचप्रतिज्ञातोमएषवरोयांतुकुमारस्यांतेवाचमभाषथास्तांमेब्रूहीति ॥५॥ सहोवाचदै
वेषुवैगौतमतद्वरेषुमानुषाणांब्रूहीति ॥६॥ सहोवाचविज्ञायतेहस्तिहिरण्यस्योपात्तंगोअश्वा
नांदासीनांप्रवाराणांपरिधानस्यमानोभवान्बहोरनंतस्यापर्यंतस्याभ्यवदान्योभूदिति सवैगौ
तमतीर्थेनेच्छसी३इत्युपैम्यहंभवंतमितिवाचाहस्मैवपूर्वउपयंतिसहोपायनकीर्त्याउवास ॥७॥

बहोर्बहुगुणस्यानंतस्य नाशरहितस्यापर्यंतस्येयत्तारहितस्य हरेः भवान् अभ्यवदान्योऽदाता नो अस्मभ्यं माभूदित्युवाच गौतमः। एवमुक्तो राजा ह हे गौतम स त्वं तीर्थेन न्यायेनेच्छसि विद्यामिति शेषः। किमिति प्रश्नद्योतकः इच्छसी ३ इति प्लुतिः। एवं राज्ञोक्तो गौतमो न्यायेनैवेच्छामि विद्यामित्याह ॥ उपैम्यहं भवंतामिति। राजा वक्ति। शुश्रूषवः पूर्वे प्राचीनाः विनयवाचै

वोपयंति स्म हा त उपसत्तिरुचितेति । सहोपायनकीर्त्योपायनकथनेनोवास ॥ ८ ॥ २ ॥ ७ ॥ स राजोवाच । त्वत्पुत्रस्याज्ञानं मया प्रकटितमिति हेतोः नोस्मान्मापराध्यः अपराधिनो मा कुरु । तव पितामहाश्च न कुर्वंतु । विद्यां स्तौति ॥ यथेति । इयं पंचाग्नि विद्या इतः पूर्वं कस्मिंश्चन ब्राह्मणे । नोवास न स्थिता । तां त्वहं तुभ्यं वक्ष्यामीति । को ह्येवं विनयेन ब्रुवंतं प्रत्याख्यातुमर्हतीति राजोवाचेत्यर्थः ॥ ८ ॥ यतिथ्यामाहुत्यां हुतायामापः पुरुषवचसो भूत्वेत्यस्योत्तरं पंचमखंडे विवक्षुः प्रथमाहुत्यादिकं पूर्वमाह

सहोवाच तथानस्त्वंगौतममापराध्यस्तवचापितामहा यथेयंविद्येतःपूर्वंनकस्मिंश्चनब्राह्मणउवा सतांत्वहंतुभ्यंवक्ष्यामि कोहित्वैवंब्रुवंतमर्हतिप्रत्याख्यातुमिति ॥८॥ असौवैलोकोग्निर्गौतम तस्यादित्यएवसमिद्रश्मयोधूमोऽहरर्चिर्दिशोंगाराअवांतरदिशोविष्फुलिंगास्तास्मिन्नेतस्मिन्न ग्नौदेवाःश्रद्धांजुह्वतितस्याआहुत्यैसोमोराजासंभवति ॥ ९ ॥

खंडचतुष्टयेनासावित्यादिना ॥ असौ वै लोकः द्युलोकः अग्निः जीवरूपहविः प्रक्षेपस्थलत्वादग्निरित्युक्तः । असौ वै लोकपदेन द्युलोकस्थो नारायणः अत्तीति व्युत्पत्त्याऽग्निरित्युच्यते । स एव च नारायणः पुनरादित्यादिपंचसु । तत्तन्नामवाच्यः सन्नारायणा दिरूपेण पंचधा तिष्ठतीत्याह ॥ तस्येति । तस्य द्युलोकस्थस्य नारायणस्यादित्य एवादत्त इति व्युत्पत्त्या आदित्यस्थो नारायण नारायणात्मा समेधनात्समिच्छब्दवाच्यः समित् समिद्धतः । रमणाच्छामनाच्च रश्मिनामा । रश्मिषु स्थितो नारायणवासुदेवात्मा

धूमः। शत्रूणां धूत्कारहेतुना धूमनामा धूमगतः। अहीनत्वहेतुना अहः अहः शब्दवाच्यः सन्नहर्गतो नारायणसंकर्षणात्मा अर्चिः अर्च्यतमत्वहेतुना अर्चिर्नामा अर्चिस्थः। आदेशनहेतुना दिङ्नामा दिक्षुस्थो नारायणप्रद्युम्नात्मा अंगाराः स्वांगरतत्वहेतुनांगार नामांगारस्थः। अत्र सर्वत्रान्यगतबहुत्वस्येशायत्तत्वात्तदधीनत्वादर्थवदिति न्यायेन स्वातंत्र्याभिप्रायेण तत्तन्निष्ठभगवति बहुवचनं ज्ञेयं। बहुरूपत्वाद्वा। अवांतरं दिशतीति हेतुनावांतरदिङ्नामावांतरादिक्स्थो नारायणानिरुद्धात्मा विष्फुलिंगाः विष्वक्त्वहेतुना विस्फुलिंगनामा विष्फुलिंगगतः। तस्मिन् द्युलोकगे नारायणे एतस्मिन्प्रत्येकमादित्यादिपंचात्मना स्थितेऽग्निनामके देवास्तत्त्वाऽ

पर्जन्योवाअग्निर्गौतमस्यसंवत्सरएवसमिदभ्राणिधूमोविद्युदर्चिरशनिरंगाराह्रादुनयोविष्फु
लिंगास्तास्मिन्नेतस्मिन्नग्नौदेवाःसोमंराजानंजुह्वतितस्याआहुत्यैवृष्टिःसंभवति ॥ १० ॥

भिमानिनः श्रद्धां श्रद्धापूर्वकं यज्ञादिकृतं जीवं जुह्वति प्रक्षिपंति। तस्या आहुत्यै आहुतेः आहूयतेऽत्रेत्याहुतिः। तत्र कियत्कालं स्थित्यनंतरं पुण्यक्षये सति जीवः तस्माद्धोमाधारस्थानात् द्युलोकात्सोमो राजा संभवति चंद्रमंडलस्थो भवति। देवाः चंद्रे स्थापयंतीत्यर्थः। सोमराजभवनं नाम तत्सायुज्यादिकं यथाधिकारं ध्येयं। तदाह सूत्रे तत्स्वाभाव्यापत्तिरुपपत्तेरिति ॥८॥२॥९॥ पर्जन्यः परं जनयतीति पर्जन्यनामा मेघचक्रगतो वासुदेवः अग्निः अग्निनामा जीवप्रक्षेपस्थानं संवत्सरः सम्यग्वत्सान्क्रमयतीति संवत्सरनामा संवत्सरस्थः वासुदेवनारायणात्मा। समिदित्यादि प्राग्वत्। अन्यैरभरणीयत्वहेतुना अभ्रनामाऽभ्रस्थो वासुदेव

वासुदेवात्मा धूमः। विशेषेण द्योतत इति विद्युन्नामा विद्युद्गतः वासुदेवसंकर्षणात्मा अर्चिः। अशनाद्भक्षणादशनिनामा अशनिस्थो वासुदेवप्रद्युम्नात्मा अंगाराः। निह्रादनाद्गर्जनाद्धेतोः ह्रादुनिनामा ह्रादुनिस्थो वासुदेवानिरुद्धात्मा। विष्फुलिंगाः। बहुवचनं प्राग्वत्। तस्मिन्वासुदेवे एतस्मिन्नारायणादिरूपेण पंचधा स्थिते अग्नौ जीवप्रक्षेपस्थाने सोमं राजानं सोमराजांतःस्थापि तं पुण्यकृतं जीवं देवास्तत्त्वेशाः जुह्वति प्रक्षिपति। तस्या आहुत्यै॥ प्राग्वदर्थोऽस्य ध्येयः। वृष्टिः संभवति वृष्टिस्थो भवति। वृष्टौ

अयंवैलोकोग्निर्गौतमतस्यपृथिव्येवसमिदग्निर्धूमोरात्रिरर्चिश्चंद्रमाअंगारानक्षत्राणिविष्फुलिं
गास्तस्मिन्नेतस्मिन्नग्नौदेवावृष्टिंजुह्वतितस्याआहुत्याअन्नंसंभवति ॥ ११ ॥

स्थापयंतीत्यर्थः ॥ ८ ॥ २ ॥ १० ॥ अयं वै लोकः मर्त्यलोकः तल्लोकस्थः तन्नामा संकर्षणः अग्निः प्रथितत्वात्पृथिवीनामा पृथिवीगतः संकर्षणनारायणात्मा समित्। अदनादग्निनामा अग्निस्थः संकर्षणवासुदेवात्मा धूमः। रतिकरत्वाद्रात्रिनामा रात्रिस्थः संकर्षणसंकर्षणात्मा अर्चिः। चंद्रमाः आह्लादनाच्चंद्रमानामा चंद्रांतर्यामी संकर्षणप्रद्युम्नात्मा अंगाराः। अस्य क्षत्रमन्यन्नास्तीति नक्षत्रनामा नक्षत्रस्थः संकर्षणानिरुद्धात्मा विष्फुलिंगाः बहुवचनं प्राग्वत्। तस्मिन्मर्त्यलोकस्थसंकर्षणे एतस्मिन्नारायणादि पंचधा स्थिते अग्नौ होमाधारेऽग्निनामके देवाः वृष्टिं वृष्टौ स्थापितं जीवं जुह्वति। प्रक्षिपंति। तस्या आहुत्यै प्राग्वत्। अन्नं संभवति।

ओषधिप्रवेशद्वारा अद्यमानपदार्थांतर्गततया देवैः प्रक्षिप्यत इत्यर्थः ॥ ८ ॥ २ ॥ ११ ॥ पुरुषो वा अग्निः। पितृजीवरूपपुरुषगतः जगत्पूरयतीति पुरुषनामा प्रद्युम्नः अग्निः अदनादग्निनामा होमाधारभूतः। तस्य पुरुषनाम्नः प्रद्युम्नस्य पुरुषगतस्य। व्यात्तं आस्योत्पाटनं व्यात्तनामा व्यात्तस्थः प्रद्युम्ननारायणात्मा समित्प्रणयनात्प्राणनामा प्राणांतःस्थः प्रद्युम्नवासुदेवात्मा धूमः। वक्तीति वाङ्नामा वाचिगतः प्रद्युम्नसंकर्षणात्मा अर्चिः। चष्ट इति चक्षुर्नामा चक्षुषि स्थितः प्रद्युम्नप्रद्युम्नात्मा अंगाराः। शृणोतीति

पुरुषोवाअग्निर्गौतमतस्यव्यात्तमेवसमित्प्राणोधूमोवागर्चिश्चक्षुरंगाराःश्रोत्रंविष्फुलिंगास्तस्मि न्नेतस्मिन्नग्नौअन्नंजुह्वतितस्याआहुत्यैरेतःसंभवति ॥१२॥ योषावाअग्निर्गौतमतस्याउपस्थएव समिल्लोमानिधूमोयोनिरर्चिर्यदंतःकरोतितेंगाराअभिनंदाविष्फुलिंगास्तास्मिन्नेतास्मिन्नग्नौदेवा रेतोजुह्वतितस्याआहुत्यैपुरुषःसंभवतिसजीवतियावज्जीवत्यथयदाम्रियते ॥ १३ ॥

श्रोत्रनामा श्रोत्रस्थः प्रद्युम्नानिरुद्धात्मा विष्फुलिंगाः। तस्मिन्नित्यादि प्राग्वत्। रेतः रेतसोऽतः स्थाप्यते देवैरिति यावत् ॥१२॥ योषा वाग्निरिति। योषिति स्थितः तन्नामाऽनिरुद्धोऽग्निः तस्य योषिति स्थितस्यानिरुद्धस्याग्निनाम्नः उपस्थितत्वादुपस्थनाम्न उपस्थस्थअनिरुद्धनारायणात्मा समित् लोमानि। लोपकत्वाल्लोमनामा लोमस्थोनिरुद्धवासुदेवात्मा धूमः। यापयति नयति चेति योनिनामा योनिस्थोनिरुद्धसंकर्षणात्मा अर्चिः। यदंतः करोति योन्यंतःकरणकर्ता अनिरुद्धप्रद्युम्नात्माऽंगारा अभिनंदयतीत्यभि

नंदा उपमंत्रणं । तत्कर्ताऽनिरुद्धानिरुद्धः विष्फुलिंगाः । तस्मिन्नित्यादि प्राग्वत् । रेतो रेतोंतर्गतः पुरुषः पुरुषादिपदवाच्यः सम्भूमौ जायत इत्यर्थः । स जातो जीवति यावज्जीवति यावत्कालं जीवनं कर्म तावज्जीवतीत्यर्थः । अथ जीवनकालसमाप्त्य नंतरं । यदा म्रियते प्राणांस्त्यजतीत्यर्थः ॥१३॥ राजा स्वकृतप्रश्नपंचकमध्ये यतिथ्यामाहुत्यामिति चतुर्थप्रश्नं योषाख्यपंचमाग्निरूपं

अथैनमग्नयेहरंतितस्याग्निरेवाग्निर्भवतिसमित्समिद्धूमोधूमोर्चिरर्चिरंगाराअंगाराविष्फुलिंगा
विष्फुलिंगास्तस्मिन्नेतस्मिन्नग्नौदेवाःपुरुषंजुह्वतितस्याआहुत्यैपुरुषोभास्वरवर्णःसंभवति ॥ १४ ॥
तेयएवमेतद्विदुर्येचामीअरण्येश्रद्धांसत्यमुपासतेतेर्चिरभिसंभवंतिअर्चिषोहरह्नआपूर्यमाणपक्ष
मापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्यएतिमासेभ्योदेवलोकंदेवलोकादादित्यमादित्याद्वैद्युतं
तान्वैद्युतान्पुरुषोमानवएत्यब्रह्मलोकान्गमयतितेतेषुब्रह्मलोकेषुपुराःपरावतोवसंतितेषांनपुन
रावृत्तिः ॥ १५ ॥

प्रथमद्वितीयादिचतुरग्न्युक्तिपूर्वमुत्तरितं कृत्वाऽधुना वेत्थ यथेमाः प्रजा इत्यादिना कृतावशिष्टप्रश्नचतुष्टयस्योत्तरं तदुपयुक्तषष्ठाग्न्युक्ति पूर्वमाह ॥ अथेति । मृत्यनंतरं । एनं जीवं । अग्नये हरंति । तस्य प्रसिद्धस्य षष्ठाग्नेः समित् काष्ठादिराशिः । भास्वरवर्णो ज्योतिर्मयदेहः ॥ ८ ॥ २ ॥ १४ ॥ य एवमुक्तप्रकारेणैतदग्निस्वरूपं विदुः । ये चामी अरण्ये श्रद्धां सत्यं सत्यवचनमुपलक्षणं

निवृत्तकर्मानुष्ठानपूर्वं ब्रह्मोपासते ते उभयेप्यर्चिरभिसंभवंति अर्चिर्लोकं प्राप्नुवंति । तदाह सूत्रे अर्चिरादिना तत्प्रथितेरिति अर्चिष इति पंचमी । अर्चिर्लोके कियत्कालं स्थित्वा ततोऽहरभिसंभवंतीति क्रियापदं सर्वत्र योज्यं । अहरभिमानिदेवं प्राप्नुवंतीत्यर्थः । एवमग्रेपि ज्ञेयं । आपूर्यमाणपक्षं पूर्वपक्षाभिमानिनं । उदङ्ङुत्तरतः यान्मासानादित्यः एति उत्तरायणाभिमानिनमिति यावत् ।

अथयेयज्ञेनदानेनतपसालोकान्जयंतितेधूममभिसंभवंतिधूमाद्रात्रिंरात्रेरपक्षीयमाणपक्षमप क्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्यएतिमासेभ्यःपितृलोकंपितृलोकाच्चंद्रंतेचंद्रंप्राप्यान्नं भवंतितांस्तत्रदेवायथासोमंराजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्रभक्षयंतितेषाँयदातत्प र्यवैत्यथेममेवाकाशमभिनिष्पद्यंतआकाशाद्वायुंवायोर्वृष्टिंवृष्टेःपृथिवींतेपृथिवींप्राप्यान्नंभवं तिपुनःपुरुषाग्नौहूयंतेततोयोषाग्नौततोजायंतेतेलोकान्प्रत्युत्थायिनस्तएवमेवानुपरिवर्ततेऽथय एतौपंथानौनविदुस्तेकीटाःपतंगायदिदंदंदशूकं ॥ १६ ॥ द्वितीयंब्राह्मणं ॥ ८ । २ ॥

वैद्युतं विद्युन्मानिलोकं । तान्वैद्युतान् तल्लोकगतान् । मानवः पुरुषो वायुरेत्य । ब्रह्मलोकान्गमयति । ते ब्रह्मलोकगास्तेषु ब्रह्मलोकेषु । परावतः ब्रह्मायुर्लक्षणपरावतो वर्षान्वसंति । तेषां न पुनरावृत्तिरिति ॥ ८ ॥ २ ॥ १५ ॥ एवमाद्यप्रश्नोत्तरमुक्त्वा वेत्थो यथेममिति द्वितीयप्रश्नस्योत्तरमाह ॥ अथेति । अर्थांतरेऽथशब्दः । ये यज्ञेन ज्योतिष्टोमादिना । दानेन सत्पात्र

द्रव्यत्यागेन । तपसा कृच्छ्रचांद्रायणादिना । प्रवृत्तकर्मणेति यावत् । लोकान् जयंति प्राप्नुवंति । ते मृत्यनंतरं । धूमं धूमाभिमानिलोकं । अभिसंभवंति प्राप्नुवंति । एवमग्रेपि ज्ञेयं । दक्षिणेत्यव्ययं । दक्षिणतो यान्षण्मासानादित्य एति । दक्षिणायनलोकमभिसंभवंतीत्यर्थः । अन्नं भवंति तर्पका भवंति देवानां सेवका भवंतीत्यर्थः । अन्नं भवंतीत्येतद्व्यनक्ति ॥ तांस्तत्रेति । तांस्तत्र देवा भक्षयंति । कथं सोमं राजानं सोमलतां आप्यायस्व आप्याययंति । अपक्षीय स्वापक्षाययंति । एवमेनांस्तत्र भक्षयंतीति योजना । तेषां चंद्रस्थानां । तदद्दष्टं । यदा पर्यवैति समाप्तं भवति । अथानंतरं । इममेवाकाशमभिनिष्पद्यंते प्राप्नुवंति । आगतिप्रकारमाह ॥ आकाशाद्वायुमित्यादिना । अन्नं अद्यमानपदार्थांतर्गता भवंति । तदनंतरं भोजनद्वारा पुरुषाग्नौ हूयंते । ततोऽग्नौ हूयंते । ततो रेतोद्वारा मातरं प्रविश्य जायंते । ते लोकान्प्रत्युत्थायिनः उद्गच्छंतः एवमेवानुपरिवर्तंते पुनः पुनः संचरंति । एतेनाद्यद्वितीयप्रश्नद्वयपरिहारेण वेत्थो देवयानस्येत्यादिना कृतप्रश्नद्वयस्यापि परिहार उक्तो ध्येयः । तत्र ये श्रद्धां सत्यमित्यादिना यज्ञेन दानेनेत्यादिना च प्रतिपदं वेत्थेति कृतसाधनप्रश्नस्य परिहारः । ब्रह्मलोकेषु । पितृलोकाच्चंद्रमित्यनेन विप्रतिपद्यंत इति कृतविशिष्टस्थानप्राप्तिप्रश्नस्य परिहारः । वेत्थो यथेमं लोकं केन निमित्तेन पुनरापद्यंत इति प्रश्नस्य न संपूर्यत ३ यिति प्रश्नस्य च तेषां च तात्पर्यं वेत्थेममेवाकाशमित्यादिना परिहारो ध्येयः । देवयानपितृयाणरूपमार्गद्वयसाधनाज्ञानां स्वरूपमाह ॥ अथ य इति । पंथानौ तत्साधने चेति योज्यं । ते कीटादयो भवंतीत्यर्थः ॥ ८ ॥ २ ॥ १६ ॥ द्वितीयब्राह्मणं ॥

उक्ता विद्याः ग्रासाभावेन अनुष्ठातुमशक्या इति तदर्थं कांचन विद्यामाह ॥ स य इत्यादिना । योधिकारी । महत् महत्त्वं ऐहिकामुष्मिकं रूपं । प्राप्नुयामिति कामयेत । स उदगयने उत्तरायणे । आपूर्यमाणपक्षस्य (पूर्वप)शुक्लपक्षस्य पुण्याहे पुण्यातिथौ द्वादशाहं । होमदिवसात् द्वादशदिवसपर्यंतं उपसद्व्रती । उपसल्लक्षणव्रतवान्भूत्वा । औदुंबरे उदुंबरविकारे । कंसे चमसे वा ।

सयःकामयतेमहत्प्राप्नुयामित्युदगयनंआपूर्यमाणपक्षस्यपुण्याहेद्वादशाहंउपसद्व्रतीभूत्वौदुंबरे कꣳसेचमसेवासर्वौषधंफलानीतिसंभृत्यपरिसमूह्यपरिलिप्याग्निमुपसमाधायपरिस्तीर्यावृता ज्यꣳसꣳस्कृत्यपुꣳसानक्षत्रेणमंथꣳसन्नीयजुहोतियावंतोदेवास्त्वयिजातवेदस्तिर्यंचोघ्नंतिपुरुषस्य कामांस्तेभ्योहंभागधेयंजुहोमितेमातृप्ताःसर्वैःकामैस्तर्पयंतुस्वाहायातिरश्चीनिपद्यतेऽहंविधर णीइतितांत्वाघृतस्यधारयायजेसꣳराधनीमहꣳस्वाहा ॥ १ ॥

चमसाख्यपात्रविशेषे वा। सर्वौषधं सर्वौषधिसमुदायं । फलानीतीति शब्द आद्यर्थः । फलादीनि। संभृत्य आनीय । परिसमूह्य मेलयित्वा । परिलिप्य । कुंडमिति शेषः । तत्राग्निमुपसमाधाय । दर्भान्परिस्तीर्यावृताज्यं होम्याज्यं । संस्कृत्य । पुंसा पुल्लिंगवाच्येन पुनर्वस्वादिनक्षत्रेण । सर्वौषधीनां मंथं । आलोडितं पिष्टं संनीय समीपमानीयाज्यं जुहोतीत्यन्वयः। होममंत्रावाह॥ यावंत इति । हे जातवेदस्त्वयि यावंतो देवास्तिर्यंचो मध्ये स्थिताः संतः पुरुषस्य कामान्घ्नंति तेभ्यो भागधेयं हविर्भागं ।

जुहोमि ददामि । तं तृप्ताः संतः मा मां । सर्वैः कामैस्तर्पयंतु स्वाहा । या तिरश्ची अहं विधरणी । विघ्नकर्त्रीति । निपद्यते ।

ज्येष्ठायस्वाहाश्रेष्ठायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिप्राणायस्वाहावासिष्ठायैस्वाहेत्यग्नौ
हुत्वामंथेसꣳस्रवमवनयतिवाचेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिचक्षुषेस्वा
हासंपदेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिश्रोत्रायस्वाहायतनायस्वाहेत्यग्नौहुत्वामंथेसꣳस्र
वमवनयतिमनसेस्वाहाप्रजात्यैस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिरेतसेस्वाहेत्यग्नौहुत्वामंथ
सꣳस्रवमवनयति ॥२॥ अग्नयेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिसोमायस्वाहेत्यग्नौहुत्वा
मंथेसꣳस्रवमवनयतिभूःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभुवःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रव
मवनयतिस्वःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभूर्भुवःस्वःस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवन
यतिब्रह्मणेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिक्षत्रायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयति
भूतायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिभविष्यतेस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिवि
श्वायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिसर्वायस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयतिप्रजापत
येस्वाहेत्यग्नौहुत्वामंथेसꣳस्रवमवनयति ॥ ३ ॥

तां त्वा संराधिनीनामिकां । घृतस्य धारया अहं यजे स्वाहेति ॥ ८ ॥ ३ ॥ १ ॥ प्राणादिविषयहोमानाह ॥ ज्येष्ठायेति ।

संस्रवं धारामवनयति हुतशेषं मंथे पिंडे निक्षिपेदित्यर्थः । ज्येष्ठायेत्यादेः कोर्थ इत्यतः प्राण एवं ज्येष्ठश्रेष्ठशब्दार्थ इत्याह ॥ प्राणाय स्वाहेति । एवमग्रेप्यर्थो ध्येयः ॥ २ ॥ प्राणादिविषयहोममुक्त्वा प्रकारांतरेण होममाह ॥ अग्नये स्वाहेतीति । भूताय उत्पन्नाय । भविष्यते उत्पत्स्यमानाय ॥ ३ ॥ मंथं स्पृष्ट्वा जप्यं मंत्रमाह ॥ अथैनमिति । एनं मंथमभिमृशति स्पृशति । किमिति ।

अथैनमभिमृशतिभ्रमदसिज्वलदसिपूर्णमसिप्रस्तब्धमस्येकशफमसिहिंकृतमसिहिंक्रियमाण मस्युद्गीथमसिउद्गीयमानमसिश्रावितमसिप्रत्याश्रावितमस्यार्द्रेसंदीप्तमसिविभुरसिप्रभुरस्य न्नमसिज्योतिरसिनिधनमसिसंवर्गोसीति ॥४॥ अथैनमुद्यच्छत्याम स्यामं हि ते महि सहि राजेशानोधिपतिःसमा राजेशानोधिपतिंकरोत्विति ॥५॥ अथैनमाचामतितत्सवितुर्वरे ण्यंमधुवाताऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नःसंत्वोषधीर्भूःस्वाहाभर्गोदेवस्यधीमहिमधुन क्तमुतोषसोमधुमत्पार्थिवं रजःमधुद्यौरस्तुनःपिताभुवःस्वाहाधियोयोनःप्रचोदयात्मधुमान्नो वनस्पतिर्मधुमां अस्तुसूर्यःमाध्वीर्गावोभवंतुनःस्वःस्वाहेति सर्वांचसावित्रीमन्वाहसर्वाश्चम

भ्रमदसीत्यादिना मंत्रेणांतःस्थो हरिः स्तूयत इति ज्ञेयं । विभुरसि व्याप्तोसीत्यर्थः । संवर्गो वायुरसि ॥ ४ ॥ मंथमुद्धृत्य जप्यमंत्रमाह ॥ अथेति । एनं मंथमुद्यच्छत्यूर्ध्वं धत्ते । आमं श्यामं हि ते महीत्यादि मंत्रेणापि मंथस्थो हरिरेवोच्यते ॥ ५ ॥ मंथभक्षणं मंत्रपूर्वकमाह ॥ अथेति । अथ जपानंतरं एनं मंथमाचामति । अत्ति । सवितुः जगत्प्रसवितुः । तत् वरेण्यं वरणी

यमिति । सावित्र्या एकपादः । मधु भद्रमुद्दिश्य । वाताः वायवः । ऋतायते ऋतायंतु पवंतु । मधु उद्दिश्य सिंधवः नद्यः क्षरंति प्रवहंतु । ओषधीः ओषधः । नोऽस्माकं माध्वीः भद्राः संत्विति मंत्रमुक्त्वा भूः स्वाहेत्याचामतीत्यर्थः । एवमग्रेपि सावित्र्या एकैकं पादं मधुमत्याः पादत्रयं चोच्चार्य भुवः स्वाहा स्वः स्वाहेत्याचामतीत्याह ॥ भर्ग इति । देवस्य भर्गः भरणगमनशीलं । वरेण्यं रूपं । धीमहि ध्यायेम । नक्तं रात्रिः मध्वस्तु । उत किंच उषसः सकाशान्मधु भद्रमस्तु । पार्थिवं रजः मधुमत् मद्विषये भद्रोपेतमस्तु । नोस्माकं पिता द्यौः मध्वास्त्विति मंत्रमुक्त्वा भुवः स्वाहेत्याचामतीत्यर्थः । यः नः धियः प्रचोदयात् प्रेरयेत्तस्य

धुमतीःसर्वाश्चव्याहृतीरहमेवेदꣳसर्वꣳभूयासंभूर्भुवःस्वःस्वाहेत्यंततआचम्यपाणीप्रक्षाल्यजघने नाग्निंप्राक्शिराःसंविशतिप्रातरात्यमुपतिष्ठतेदिशामेकपुंडरीकमसिअहंमनुष्याणामेकपुंड रीकंभूयासमितियथेतमेत्यजघनेनाग्निमासीनोवंशंजपति ॥ ६ ॥

देवस्येत्यर्थः। नोऽस्माकं वनस्पतिः मधुमानस्तु । सूर्यो मधुमानस्तु । नोस्माकं गावो माध्वीर्भवंतु । इत्युक्त्वा स्वः स्वाहेत्याचामतीत्यर्थः। सावित्रीपादेन मधुमत्या भूरादिव्याहृत्या च त्रिवारभक्षणं उक्त्वा सर्वां च सावित्रीशब्दितगायत्रीं सर्वाश्च मधुमतीः सर्वाश्च व्याहृतीर्जप्त्वा भक्षयेदित्याह ॥ सर्वां चेति । सावित्रीशब्दितां गायत्रीमित्यर्थः । अन्वाहेत्यस्य सर्वाश्च मधुमतीरित्यत्राप्यन्वयः । अहमेवेदं सर्वं भूयासं स्वयोग्यसर्वपूर्तिमान् भवेयमित्युक्त्वा सर्वां गायत्रीं सर्वामधुमतीश्चानूच्य भूर्भुवःस्वःस्वाहेत्यंतत आचम्य मंथं भक्षयित्वा पाणी प्रक्षाल्य अग्निजघनेनाग्न्यपेक्षया नीचस्थले । प्राक् शिराः संविशति । प्रातरादित्यमुपतिष्ठते । दिशां दिगवस्थित

प्राणानां मध्ये एकपुंडरीकमसि मुख्यश्रेष्ठोसि । मनुष्याणां मध्ये अहमेकपुंडरीकं श्रेष्ठो । भूयासमिति मंत्रेणोपतिष्ठत इत्यर्थः । यदि यदा एतमग्निं जघनेनासीनः अग्नितो नीचस्थाने स्थितो वर्तते । तदा वंशं एतद्विद्योपदेशकाचार्यपरंपरालक्षणं जपति जपेत् ॥ ८ ॥ ३ ॥ ६ ॥ जप्यं वंशमाह ॥ तं हैतमिति । तमेतं निर्माणक्रमसहितं मंथमुक्त्वा तस्य य एनं शुष्क इत्यादि

तंहैतमुद्दालकआरुणिर्वाजसनेयाययाज्ञवल्क्यायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौ निषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥७॥ एतमुहैववाजसनेयोयाज्ञवल्क्योमधुकायपैंग्यायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरन्शाखाःप्ररोहेयुःपलाशानीति ॥८॥ एतमुहैवमधुकःपैंग्यश्चूलायभागवित्तयेंतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥९॥ एतमुहैवचूलोभागवित्तिर्जानकयआयस्थूणायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥ १० ॥

महिमानं चोवाचेत्यर्थः । अरुण्या अपत्यमारुणिः । उद्दालको नामतः शुष्केपि स्थाणौ एनं मंथं निषिंचेत् । तदा जायेरंच्छाखाः प्ररोहेयुः पलाशानि पर्णानि । इति शब्दस्योवाचेत्यन्वयः ॥८॥३॥७॥ एतमु हैवेत्यादिखंडपंचकेप्येवमेवार्थो ध्येयः । मधुकाय मधुकनाम्ने पैंग्याय पिंगस्य पुत्राय ॥८॥३॥८॥ चूलाय भागवित्तये चूलनाम्ने भगवित्तिपुत्राय अंतेवासिने शिष्याय एवं मंथमकार मुक्त्वेति सर्वत्र ध्येयं ॥ ९ ॥ जानकये जनकस्यापत्याय आयः स्थूणाय आयः स्थूणनाम्ने चूलो नामतः भगवित्तस्यापत्यं

उवाचेत्यर्थः ॥ १० ॥ सत्यकामाय सत्यकामनाम्ने जाबालाय जबालापुत्राय ॥ ११ ॥ तमेतं मंथनिर्माणप्रकारं अपुत्राय पुत्रभिन्नायानंतेवासिने वा । न ब्रूयात् ॥१२॥ औदुंबरे कंसे चमसे वेत्यादि पूर्वोक्तवाक्यापेक्षितमनुक्तं भागमाह ॥ चतुरौदुंबर इति । उपमंथिन्यौ अरणी । अणुप्रियंगव इत्यत्र अणवः शामाकाः मसुराश्चेत्यादि त्रयः शब्दाः धान्यविशेषार्थकाः । तान्त्री

एतमुहैवजानकिरायस्थूणःसत्यकामायजाबालायांतेवासिनउक्त्वोवाचापियएनंशुष्केस्थाणौनिषिंचे ज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीति ॥११॥ एतमुहैवसत्यकामोजाबालोंतेवासिभ्यउक्त्वोवाचा पियएनंशुष्केस्थाणौनिषिंचेज्जायेरंच्छाखाःप्ररोहेयुःपलाशानीतितमेतंनापुत्रायवानंतेवासिनेवाब्रूया त् ॥१२॥ चतुरौदुंबरोभवत्यौदुंबरस्स्रुवऔदुंबरश्चमसऔदुंबरइध्मऔदुंबर्यावुपमंथन्यौदशग्राम्याणि धान्यानिभवंतिव्रीहियवास्तिलमाषाअणुप्रियंगवोगोधूमाश्चमसूराश्चखल्वाश्चखल्वखुलाश्चतान्पि ष्टान्दधिनिमधुनिघृतउपसिंचत्याज्यस्यजुहोति ॥१३॥ तृतीयंब्राह्मणं ॥८।३॥ एषांवैभूतानांपृथिवीर सःपृथिव्याआपोऽपामोषधयओषधीनांपुष्पाणिपुष्पाणांफलानिफलानांपुरुषःपुरुषस्यरेतः ॥ १ ॥

ह्यादीन् पिष्टान् चूर्णितान्दधिमधुघृतद्रव्येषूपसिंचति मथितं कृत्वाज्यस्य जुहोत्याज्यस्य भागं जुहोतीत्यर्थः ॥ ८ ॥ ३ ॥ १३ ॥ ॥ इति तृतीयं ब्राह्मणं ॥ छ ॥ अनेनोपनिषदुक्तविधानेन जातः पुत्रः स्वर्गापवर्गयोग्यो भवतीति भावेन तृतीयखंडादौ तस्या वेदिरित्यादिना गृहिणां वामदेवाख्यं यज्ञं वक्तुं तदुपयुक्तमाह ॥ एषामित्यादिना ॥८॥४॥१॥ यदर्थं रेतसः श्रैष्ठ्यमुक्तं तदाह ॥

स हेति । स प्रजापतिर्ब्रह्मा ईक्षांचक्रे आलोचितवान् । कथमस्मै अस्य रेतसः । प्रतिष्ठामाधारं । कल्पयानि हंत हर्षे इतीक्षां कृतवानित्यर्थः । स एवमीक्षावान् स्त्रियं ससृजे सृष्ट्वा अधः कृत्वोपास्त तस्माद्यतनोपि स्त्रियमधः कृत्वोपासीत । स एवमुपासीनः प्रजापतिः एतं प्रांचं प्राक्कालीनं ग्रावाणं ग्रावनिभं । रेत आत्मान एव स्वदेहादेव । समुदपारयत् निष्कासयेत् । तेन निष्कासितेन रेतसा एनां स्त्रियं अभ्यसृजत् संयोजितवान् ॥२॥ तस्याः स्त्रियाः उपस्थः वेदिः लोमानि बर्हिः चर्मचर्मणी अधिषवणफलकं

सह प्रजापतिरीक्षांचक्रे हंतास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे तांꣳ सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्रांचं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥२॥ तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासां स्त्रीणाꣳ सुकृतं वृंक्तेऽथ य इदमविद्वानधोपहासं चरत्यस्य स्त्रियः सुकृतं वृंजते ॥ ३ ॥

मध्यतो मध्यदेशे विद्यमानौ मुष्कौ वृषणौ । समिधौ तस्य फलमाह ॥ स यावादिति । य एवं विद्वान्प्रजापतिनैवमनुष्ठितमिति विद्वान् तदा भगवन्मनस्कः स्वस्त्रियमधः कृत्वोपहासं संगं करोति सः वाजपेयेन यागेन यजमानस्य भगवंतमाराधयतः । सुप्रसिद्धो यावांल्लोको भवति तावान् । अस्य ज्ञानिना भगवन्निष्ठस्य । लोको भवति किं च य एवं विद्वान् आसां भुज्यमानस्त्रीणां सुकृतं । वृंक्ते आदत्ते च । अथ चेत्यर्थांतरे । य इदमविद्वानधोपहासं चरति । अस्य पुंसः सुकृतं स्त्रियः वृंजते । स्वीकुर्वंति ॥८॥४॥३॥

२३ **

एवमुक्तप्रकारेणोपहासप्रकारज्ञानपूर्वमुपहासचरणं श्रेयःसाधनमित्येतद्वृद्धसंमत्या द्रढयति ॥ एतद्ध स्मेति । तदेतत् । उक्तरूपो पहासप्रकारं विद्वानाहेति वाक्यत्रयेप्यर्थो ध्येयः । मुनित्रयेणापि किमुक्तमित्यत आह ॥ बहव इति । बहवो मर्या मर्त्याः ब्राह्म णायनाः ब्राह्मणा इवाचरंतः ब्राह्मणाभासा इति यावत् । निरिंद्रिया विसुकृतो विगतसुकृताः अस्माल्लोकात्प्रयंति ते के इत्यत आह ॥ य इदमाविद्वांस इत्यादि । इत्याहेति पूर्वेणान्वयः । उपहासं विना रेतःस्कंदने प्रायश्चित्तं वक्तुमाह ॥ बहुवा इति ।

एतद्धस्मवैतद्विद्वानुद्दालकआरुणिराहैतद्धस्मवैतद्विद्वान्नाकोमौद्गल्यआहैतद्धस्मवैतद्विद्वान्कुमारहा रीतआहबहवोमर्याब्राह्मणायना निरिंद्रियाविसुकृतोस्माल्लोकात्प्रयंतियइदमविद्वांꣳसोधोपहासंच रंतीतिबहुवाइदंसुप्तस्यवाजाग्रतोवारेतःस्कंदती ॥४॥ तदभिमृशेत्अनुवामंत्रयेत यन्मेद्यरेतःपृ थिवीमस्कांत्सीद्यदोषधीरप्यसरद्यदपइदमहंतद्रेतआददेपुनर्मामैत्विंद्रियंपुनस्तेजःपुनर्भगःपुनरग्निर्धि ष्ण्यायथास्थानंकल्पंतामित्यनामिकांगुष्ठाभ्यामादायांतरेणस्तनौवाभ्रुवौवानिमृज्यात् ॥ ५ ॥

सुप्तस्य वा जाग्रतो वा इदं बहुरेतः स्कंदतीति ॥४॥ तदा कर्तव्यं प्रायश्चित्तमाह ॥ तदिति । तद्रेतोभिमृशेत् । स्पृशेत् स्पृष्ट्वाभि मंत्रयेतेत्यर्थः । मंत्रमाह ॥ यन्मेऽद्येति । मे यद्रेतोद्य पृथिवीमस्कांत्सीत् । यदोषधीरप्यसरत् प्राप्नोत् । यदपः प्राप्नोत्तदिदं रेत आददे ॥ तत्र मंत्रमाह ॥ पुनरिति । मा मां इंद्रियं पुनरेतु तेजः पुनर्मामेतु भगः पुनर्मामेतु । धिष्ण्यो नामाग्निः मामेतु आगतानीं द्रियादीनि यथास्थानं कल्पंतामित्यनामिकांगुष्ठाभ्यामादायांतरेण स्तनौस्तनयोर्मध्ये भ्रुवौ भ्रुवोर्मध्ये वा निमृज्यात् लिंपेत् ॥८॥४॥

॥५॥ प्रायश्चित्तप्रसंगादन्यस्यापि तदाह ॥ अथ यदीति । उदक आत्मानं स्वदेहं परिपश्येत्प्रतिबिंबपश्येदित्यर्थः । तत्प्रतिबिंबतया परिणतं उदकं अभिमृशेत् स्पृशेत् । अभिमंत्रयेत् । तत्र मंत्रमाह ॥ मयीति । अस्त्विति शेषः । स्पष्टोर्थः । स्त्रीभिरुपहासस्येत्थं भावमाह ॥ श्रीरिति । स्त्रीणां मध्ये यत् या मलोद्वासाः ऋतुमती एषा श्रीः शोभना । ह वै प्रसिद्धिः । तस्मात् स्त्रीत्वाद्यशस्विनीं मलवद्वाससं स्नानादिशुद्धामिति योज्यं । अभिक्रम्य गत्वा । उपमंत्रयेत् । संगमार्थं वदेदित्यर्थः ॥ ६ ॥ सा एवमुपमंत्रिता स्त्री ।

अथयद्युदकआत्मानंपरिपश्येत्तदभिमंत्रयेतमयितेजइंद्रियंयशोद्रविणंसुकृतमितिश्रीर्हवाएषास्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससंयशस्विनीमभिक्रम्योपमंत्रयेत् ॥६॥ साचेदस्मैनदद्यात्काममेनाम वक्रीणीयात्साचेदस्मैनैवदद्यात्काममेनांयष्ट्यावापाणिनावोपहत्यातिक्रामेदिंद्रियेणतेयशसायश आददइत्ययशाएवभवति ॥७॥ साचेदस्मैदद्यादिंद्रियेणतेयशसायशआदधामीतियशस्विनावेवभव तः ॥८॥ सयामिच्छेत्कामयेतमेतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायोपस्थमस्याअभिमृश्यजपेत् अं गादंगात्संभवसिहृदयादधिजायसे सत्वमंगकषायोसिदिग्धविद्धामिवमादयेमाममूंमयीति ॥९॥

अस्मै पुंसे । कामं उपहासं न दद्याच्चेत् । एनां स्त्रियमवक्रीणीयात् । शिक्षांतरं चाह ॥ सा चेदिति । अतिक्रामेत् । अतिक्रम्य त्यक्त्वा गच्छेत् । गमने वक्तव्यमाह ॥ इंद्रियेणेति । मदीयेनेंद्रियेण यशसा ते यश आददे गृह्णामीति वाच्यमित्यर्थः । ततः अयशा एव सा भवतीत्यर्थः॥७॥ सा चेदिति । इंद्रियेण मदीयेन यशसा च ते यश आदधामीति वाच्यं पुंसेत्यर्थः । ततः किं

भवतीत्यत आह ॥ यशस्विना वेति । दंपती इति योज्यं ॥८॥ उपहासे इत्थं भावांतरमाह ॥ स यामिनि । एषा । मा मां कामयीतेति यां । स पुमानिच्छेत्तस्यामर्थं शिश्नं । निष्ठाय निधाय । मुखेन मुखं संधाय अस्या उपस्थमभिमृश्य स्पष्ट्वा जपेत् । तत्र मंत्रमाह । अंगादंगादिति प्रत्यंगात्संभवसि हृदयादधिजायसे । हे अंग रेतोंतर्गतभगवन्नंगानां सारोसीति स त्वं कषायोसि याममु

अथयामिच्छेन्नगर्भंदधीतेतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायाभिप्राण्यापान्यादिंद्रियेणतेरेतसारेतआददइत्यरेताएवभवति ॥१०॥ अथयामिच्छेद्गर्भंधीतेतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायापान्याभिप्राण्यादिंद्रियेणतेरेतसारेतआदधामीतिगर्भिण्येवभवति ॥११॥ अथयस्यजायैजारःस्यात्तंचेद्द्विष्यादामपात्रेऽग्निमुपसमाधायप्रतिलोमंशरबर्हिस्तीर्त्वातस्मिन्नेताःशर(भ्रृ)भृष्टीःप्रतिलोमाःसर्पिषाक्ताजुहुयान्ममसमिद्धेहौषीःप्राणापानौतआददेसाविति ममसमिद्धेहौषीःपुत्रपशूंस्तआददेसाविति ममसमिद्धेहौषीरिष्टासुकृतेतआददेसाविति ममसमिद्धेहौषी

मयि दिग्धविद्धामिव दिग्धा औषधलिप्तेव विद्धां परवशामिव आदध संपादयेति जपेदित्यर्थः ॥ ९ ॥ उपहासे इत्थं भावांतरमाह ॥ अथ यामिच्छेदिति । अभिप्राण्य श्वासं मुक्त्वा अपान्यात्संगृह्णीयात् । तत्र जाप्यमंत्रमाह ॥ इंद्रियेणेति । मदीयेनेंद्रियेण मदीयेन चेतसा ते रेत आददे इति जपन्नभिप्राण्यापान्यादित्यर्थः । सा तथैव गर्भहीनेव भवतीत्याह ॥ अरेता एव भवतीति ॥१०॥ अथ यामिति । यागर्भं दधीतेतीच्छेदित्यर्थः । अपान्यश्वा समादाय अभिप्राण्यांच्छ्वासं मुंचेत् इंद्रियेणेत्यादि प्राग्वत् ।

आदधामि प्रक्षिपामि ॥११॥ उपहासप्रयुक्तमाभिचारमाह ॥ अथ यस्येति । जायायै जायायाः जारः स्यात् । तं च द्विष्यात् आमपात्रे अपक्वपात्रे । अग्निमुपसमाधाय । प्रतिलोमं शरबर्हिस्तीर्त्वा प्रस्तीर्य । तस्मिन्नग्नौ एताः शरमुष्टीः शरस्तंबानि । सर्पिषाक्ता घृतार्द्राणि । प्रतिलोमाः प्रतिलोमानि । जुहुयात् । होममंत्रमाह ॥ ममेति । मम समिद्धे संदीप्ते । भार्याग्नावितिशेषः । अहौषीः हुतवानभूः रेतो निहितवानभूः । असाविति जारस्य नामरूपादि निर्देशः । अदो नामा अदो रूपः त्वमहौषीः । ते तादृशनाम रूपादिमतः तव प्राणापाना वाददे गृह्णामीति । एवमग्रेप्यर्थो ध्येयः । इष्टासुकृते । अन्येभ्योपि दृश्यत इति दीर्घः । इष्टं यजनं सुकृतं

राशापराकाशौतआददेसाविति सवाएषनिरिंद्रियोविसुकृतोस्माल्लोकात्प्रैतियमेवंविद्वान्ब्रा

ह्मणःशपति तस्मादेवंविच्छ्रोत्रियस्यदारेणनोपहासमिच्छेदुतह्येवंवित्परोभवति ॥१२॥ अथय

स्यजाया (आर्त)मार्तवंविंदेत्त्र्यहंकंसेनपिबेदहतवासानैनांवृषलोनवृषल्युपहन्यात्त्रिरात्रांतआ

प्लुत्यव्रीहीनवघातयेत् ॥ १३ ॥

स्नानदानादिकं पुण्यं आशापराकाशौ आशा अभिलापः पराकाशः तेजः स च होमो अमोघ एव भवतीत्याह ॥ स वा इति । स एष जारः निरिंद्रियः अजितेंद्रियः । विगतसुकृतः अस्माल्लोकादेहात्प्रैति । एवमुक्तप्रकारेणाभिचारं विद्वान्ब्राह्मणः यं शपति सोपि निरिंद्रियादिर्भवतीत्यर्थः । ततः किमित्यत आह ॥ तस्मादिति । एवमुक्तप्रकारेणाभिचारं विद्वान् श्रोत्रियस्य दारेण स्त्रिया नोपहासं कुर्यात् । नेच्छेदु नेच्छेदपि । उपहासकरणे बाधकमाह ॥ एवमिति । एवं वित् अभिचारवित् । उपहासं श्रोत्रियदारेण

करोति चेत्परः वैरी भवतीत्यर्थः ॥ १२ ॥ स्त्रियो रजस्वलात्वप्राप्तौ कर्तव्यमाह ॥ अथेति । यस्य जाया आर्तवं रजः विंदेत् प्राप्नुयात् त्र्यहं त्रिदिनं कंसेनाखर्वपात्रेण पिबेत् अहतवासाः अधौतवासाः । एनां वृषलः शूद्रः वृषली शूद्रा वा नोपहन्यात् न स्पृशेत् । त्रिरात्रांत आप्लुत्य स्नात्वा व्रीहीन् धान्यानि अवघातयेत् ॥१३॥ अथ यामिच्छेद्गर्भं दधीतेति प्रकृतपुत्रार्थं कर्तव्यमाह ॥ स य इच्छेदिति । यः स गर्भकर्ता मे पुत्रः शुक्लो गौरो जायेत वेदमेकमनुब्रूवीत सर्वमायुरियादितीच्छेत् । स क्षीरौदनं

सयइच्छेत्पुत्रोमेशुक्लोगौरोजायेतवेदमनुब्रुवीतसर्वमायुरियादितिक्षीरौदनंपाचयित्वासर्पिष्मं
तमश्नीयातामीश्वरौजनयितवै ॥१४॥ अथयइच्छेत्पुत्रोमेकपिलःपिंगलोजायेतद्वौवेदावनुब्रुवी
तसर्वमायुरियादितिदध्योदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवै ॥ १५ ॥ अ
थयइच्छेत्पुत्रोमेश्यामोलोहिताक्षोजायेतत्रीन्वेदाननुब्रूवीतसर्वमायुरियादित्युदौदनंपाचयि
त्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवै ॥१६॥ अथयइच्छेद्दुहितामेपंडिताजायेतसर्वमायु
रियादितितिलौदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवै ॥ १७ ॥

पाचयित्वा सर्पिष्मंतमश्नीयातां दंपती इति योज्यं। जनयित वै तादृशं पुत्रं जनयितुमीश्वरौ समर्थौ भवत इत्यर्थः॥ ८ ॥ ४ ॥ १४ ॥ कपिलो लोहितः लोहितत्वं च पिंगलत्वेनेत्याह ॥ पिंगल इति । शिष्टं प्राग्वत् ॥१५॥ अथ इत्यादि खंडचतुष्टयेपि पूर्ववद्योजना । उदौदनं उदकपक्वमन्नं ॥ १६ ॥ दुहिता पुत्री । पंडिता अभिज्ञा ॥ १७ ॥ विजिगीथो जेता समितिंगमः सभाप्रवेष्टा । शुश्रूषितां

श्राव्यां वाचं भाषिता वक्ता। मांसमिश्रितमोदनं मांसौदनं किमीयं मांसमित्यत आह ॥ औक्षेणेति। औक्षेण गोवृषसंबंधिना आर्षभेण बलीवर्दसंबंधिना वेत्यर्थः ॥१८॥ सत्पुत्रोत्पत्त्युपयुक्तं होममाह ॥ अथाभिप्रातरेवेति। प्रातरेव स्थालीपाकावृताज्यं स्थालीपाकं अवृताज्यं होमाज्यं च द्वंद्वैकवद्भावः। दर्भैर्वेष्टयित्वा स्थालीपाकस्योपघातं स्थाल्यां पक्वचरोर्भागं जुहोति। होम

अथयइच्छेत्पुत्रोमेपंडितोविजिगीथःसमितिंगमःशुश्रूषितांवाचंभाषिताजायेतसर्वान्वेदाननुब्रुवीतसर्वमायुरियादितिमांसौदनंपाचयित्वासर्पिष्मंतमश्नीयातामीश्वरौजनयितवैऔक्षेणवार्षभेणवा ॥ १८ ॥ अथाभिप्रातरेवस्थालीपाकाघृताज्यंवेष्टित्वास्थालीपाकस्योपघातंजुहोत्यग्नयेस्वाहानुमतयेस्वाहादेवायसवित्रेसत्यप्रसवायस्वाहेतिहुत्वोद्धृत्यप्राश्नातिप्राश्येतरस्याःप्रयच्छतिप्रक्षाल्यपाणीउदपात्रंपूरयित्वातेनैनांत्रिरभ्युक्षत्युत्तिष्ठातोविश्वावसोन्यामिच्छप्रभव्यांसंजायांपत्यासृजेति ॥१९॥ अथैनामभिपद्यतअमोहमस्मिसात्वं सात्वमस्यमोहं सामाहमस्मिऋक्त्वंद्यौरहंपृथिवीत्वंतावेहिसंरभावहैसहरेतोदधावहैपुंसेपुत्रायवित्तयइति ॥ २० ॥

मंत्रानाह ॥ अग्नय इत्यादिना। सत्यप्रसवाय सत्पुत्रजनयित्रे। हुत्वा हुतशेषमुद्धृत्य प्राश्नाति स्वयं प्राश्येतरस्याः जायायै प्रयच्छति ददाति। प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेन पुण्याहोदकेनैनां त्रिरभ्युक्षति। अभ्युक्षणे मंत्रमाह ॥ उत्तिष्ठेति। हे विश्वावसो गंधर्व अतः मद्भार्यातः उत्तिष्ठ अन्यामुद्वाह्यामिच्छ पत्या मया सह जायांसं योजयेत्यर्थः ॥१९॥ विश्वावसुप्रार्थनानंतरं

भार्यां प्रतिवक्तव्यं वक्तुमाह ॥ अथैनामिति । अभिपद्यते प्राप्नोति । वक्तव्यमाह ॥ अमोहमिति । अमः अहमस्मि त्वं सा असि वाग्वै साऽम एषः सा च अमश्चेति सामेति पूर्वत्र तृतीयाध्याये उक्ततयाहं प्राणसंनिधियुतः त्वं वाणीसन्निधानयुतासीत्यर्थः । एवमग्रेपि । व्यत्यासेनाप्याह ॥ सेति । त्वं सा अहं अमोस्मीति ब्रूयादित्यर्थः । एवं सामेत्यवांतरं विभागेनोक्त्वा इदानीमविभागेनाह ॥ सामेति । अहं सामास्मि त्वं ऋगसि द्यौरहं पृथिवी त्वं एहि आगच्छ । तौ एवमर्धनारीपुमात्मना स्थितसामर्गादिशब्दवाच्यवाणीवाणीशसन्निधियुतावावामिति शेषः । संरभावहै संरंभं उपहासं कुर्वः । रेतः सह दधावहै मिलितं

अथास्याऊरूविहापयातिविजिहाथांद्यावापृथिवीइतितस्यामर्थंनिष्ठायमुखेनमुखंसंधायात्रिरेना मनुलोमामनुमार्ष्टि विष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिंशतु । आसिंचतुप्रजापतिर्धातागर्भं दधातुते । गर्भंधेहिसिनीवालिगर्भंधेहिपृथुष्टुके । गर्भंतेअश्विनौदेवावाधत्तांपुष्करस्रजौ ॥२१॥

कुर्वः । किमर्थं पुत्राय पुंनामकनरकात् त्रात्रे वित्तये विदित्रे पुंसे ज्ञानाढ्यपुत्रोत्पत्तय इति यावत् ॥८॥४॥२०॥ एवं तां प्रत्युक्त्यनंतरं कर्तव्यमाह ॥ अथेति । अनंतरं द्यावापृथिवी विजिहाथां । ओहाक् त्यागे विभक्ते भवतमिति मंत्रेण अस्या ऊरू विहापयति विभक्तौ करोति । तस्यामर्थं गुह्येंद्रियं निष्ठाय निधाय मुखेन मुखं संधाय त्रिः त्रिवारमेतां अनुलोमां शिर आरभ्यानुमार्ष्टि हस्तेनानुमार्जनं करोति । तत्र मंत्रमाह ॥ विष्णुरिति । विष्णुर्वासुदेवात्मा योनिं कल्पयतु शुद्धां करोतु । त्वष्टा त्वष्टृनामकः संकर्षणः रूपाण्यंगानि पिंशतु करोतु । प्रजापतिः प्रद्युम्न आसिंचतु रेत इति योज्यं ॥ धाताऽनिरुद्धः ते गर्भं दधात्वित्यनेन मंत्रेणा

नुमृज्यादित्यर्थः। तदुक्तं योनिक्लृप्तिर्वासुदेवाद्रूपं संकर्षणाद्भवेत्। आसेककर्मप्रद्युम्नादनिरुद्धाच्च धारणमिति छांदोग्यभाष्ये द्वितीयाध्याये। सिनीवाली चतुर्दशीमिश्रिता अमावास्या तद्देवता प्रत्युच्यते। हे सिनीवालि गर्भं धेहि कुरु। पृथुष्टुकेति काचिद्देवता तस्याः संबुद्धिः। अश्विनौ कृष्णरामौ पद्ममालिनौ कृष्णरामौ तथाश्विनाविति छांदोग्यभाष्योक्तेः। देवौ ते गर्भं आधत्तां कुरुतां ॥२१॥ हिरण्मयीहिरण्मय्यौऽरणीअरण्यौ आवामिति शेषः। याभ्यामावाभ्यां अश्विनौ कृष्णरामौ ते त्वयि गर्भं निर्मंथतां मथ्नतः। अतः दशमे मासि सूतवे पुत्रप्रसवाय। त्वां वयं हवामहे। तं ते गर्भमित्युक्तं सदृष्टांतमाह॥ यथेति। पृथिवी यथा अग्निगर्भा

हिरण्मयीअरणीयाभ्यांनिर्मंथतामश्विनौ। तंतेगर्भंहवामहेदशमेमासिसूतवे॥ यथाग्निगर्भा पृथिवीयथाद्यौरिंद्रेणगर्भिणी। वायुर्दिशांयथागर्भएवंगर्भंदधामितेसाविति॥ २२॥ सोष्यंतीमाद्भिरभ्युक्षतियथावायुःपुष्कारिणींसामिंजयतिसर्वतएवातेगर्भएजतुसहावैतुजरायुणा। इंद्रस्यायंव्रजःकृतःसार्गलःसपरिश्रयस्तमिंद्रनिर्जहिगर्भेणसावरांसहेति॥ २३॥

बहुव्रीहिः। असावित्यस्य बुद्धिस्थैतन्नामकैतद्गुणकैतद्रूपं गर्भमित्येवं प्रागुक्तशुक्लपिंगलादिरूपादिनिर्देशोर्थः॥२२॥ प्रसवकाले कर्तव्यमाह॥ सोष्यंतीमिति। अद्भिरभ्युक्षति तत्र मंत्रमाह॥ यथेति। यथा वायुः पुष्कारिणीं सरोवरं सर्वत एव समिंजयति कंपयति। तथा ते गर्भः सूतिका वायुना एजतु स्थानाच्चलतु। तदनंतरं जरायुणा वैतु अधः पततु। इंद्रस्य इंद्रेणायं व्रजो गर्भदुर्गः सार्गलः निरोधसहितः सपरिश्रयो रक्षकसहितश्च कृतः। हे इंद्र तं व्रजं निर्जहि निवर्तय। गर्भेण सह सावरां इति मंत्रेण अभ्युक्ष

२४*

तीत्यर्थः ॥८॥४॥२३॥ प्रसवानंतरं कर्तव्यमाह ॥ जात इति । अंके पुत्रं समाधायेत्यर्थः । कंसे पात्रविशेषे पृषदाज्यं संस्कृताज्यं सन्नीय निक्षिप्य । पृषदाज्यस्योपघातं भागं जुहोति । होममंत्रमाह ॥ अस्मिन्निति । अस्मिन्स्वगृहे एधमानो वर्धमानः सहस्रं पुष्यासं भूयासं अस्येमामुपसद्यां प्राप्तिं प्रजया पशुभिश्च सह मा च्छेत्सीः न छेदय । स्वाहा मयि स्थितान्प्राणान्मनसा सह त्वयि

जातेग्निमुपसमाधायांकआधायकंसेपृषदाज्यंसन्नीयपृषदाज्यस्योपघातंजुहोतिअस्मिन्सहस्रंपु
ष्यासमेधमानःस्वेगृहे । अस्योपसद्यामाच्छेत्सीःप्रजयाचपशुभिश्चस्वाहामयिप्राणांस्त्वयिमन
साजुहोमिस्वाहा यत्कर्मणात्यरीरिचंयद्वान्यूनमिहाकरं । अग्निष्टत्स्विष्टकृद्विद्वात्स्विष्टंसुहुतं
करोतुनःस्वाहेति ॥२४॥ अथास्यदक्षिणंकर्णमाभिनिधायवाग्वागितित्रिरथदधिमधुघृतंसंनीयानं
तर्हितेनजातरूपेणप्राशयतिभूस्तेदधामिभुवस्तेदधामिस्वस्तेदधामिभूर्भुवःस्वःसर्वंत्वयिदधामीति ॥२५॥

जुहोमि त्वद्विषयान्करोमि स्वाहा । कर्मणा यदत्यरीरिचं । यदधिकं यद्वा न्यूनमिहाकरं । तत्सर्वं विद्वान् जानन्स्विष्टकृन्नामाग्निः नोऽस्माकं स्विष्टं अत्यंतमिष्टं । सुहुतं करोतु स्वाहेति मंत्रेण जुहोतीत्यन्वयः ॥२४॥ स्विष्टकृद्धोमानंतरं कर्तव्यमाह ॥ अथेति । अस्य कुमारस्य दक्षिणं कर्णमभिनिधाय दक्षिणकर्णं प्रतिमुखं निधाय । वाग्वागिति त्रिर्जपेदिति शेषः । अथानंतरं दधिमधुघृतं

द्वंद्वैकवद्भावः । संनीय मेलयित्वानंतर्हितेन वस्त्रादिनाऽनाच्छादितेन जातरूपेण स्वर्णेन । प्राशयति भोजयति । तत्र मंत्रमाह ॥ भूरिति ॥ ८ ॥ ४ ॥ २५ ॥ अथानंतरमस्य पुत्रस्य वेदोसीति नाम करोति । तच्छास्त्रप्रसिद्धं तद्वेद इति नामास्य गुह्यं रहस्यं भवति ॥ २६ ॥ अथ नामकरणानंतरं एनं पुत्रं मात्रे प्रदाय स्तनं प्रदापयेत् । तत्र मंत्रमाह ॥ यस्त इति । हे सरस्वति

अथास्यनामकरोतिवेदोसीतितदस्यतद्गुह्यमेवनामभवति ॥२६॥ अथैनंमात्रेप्रदायस्तनंप्रयच्छति यस्तेस्तनःशशयोयोमयोभूर्योरत्नधावसुविद्यःसुदत्रः । येनविश्वापुष्यासि(भार्या)वार्याणिसरस्वतितमिहधातवेकारिति ॥२७॥ अथास्यमातरमभिमंत्रयतइलासिमैत्रावरुणीवीरेवीरमजीजनत् । सात्वंवीरवतीभवयास्मान्वीरवतोकरादिति तंवाएतमाहुरतिपिताबताभूरतिपितामहोबताभूः परमांबतकाष्ठांप्रापच्छ्रियायशसाब्रह्मवर्चसेनयएवंविदोब्राह्मणस्यपुत्रोजायतइति ॥ २८ ॥ चतुर्थब्राह्मणं ॥ ८ ॥ ४ ॥

यस्ते स्तनः शशयः शेसुखे शेत इति शशयः । यो मयोभूः मया सुखं भावयतीति मयोभूः । यो रत्नधाः आभरणरूपरत्नं दधत् । यश्च वसु विंदते प्राप्नोतीति वसुवित् । यश्च सुदत्रः सम्यक् दाता रक्षकश्च येन च स्तनेन . विश्वा विश्वानि भार्याणि भरणीयानि ब्रह्मादीनि । पुष्यसि पुष्णासि । तं स्तनं शिशोः धातवे पातुं अकः अकार्षीरिति मंत्रेण स्तनं प्रयच्छतीत्यन्वयः ॥२७॥ अथानंतरं

अस्य शिशोर्मातरमभिमंत्रयते । तत्र मंत्रमाह ॥ इलासीति । हे वीरे मित्रावरुणयोः पुत्री मैत्रावरुणी । इला त्वमसि । वीरं कुमारं

अथवंशः पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्रात् गौतमीपुत्रो भारद्वाजीपुत्रात् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रात् औपस्वस्तीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकिपुत्र आलंबीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥१॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौंगीपुत्राच्छौंगीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलंबायनीपुत्रादालंबायनीपुत्र आलंबिनीपुत्रादालंबिनीपुत्रो जायंतीपुत्राज्जायंतीपुत्रो मांडूकायनीपुत्रान्मांडूकायनीपुत्रो मांडूकीपुत्रान्मांडूकीपुत्रः शांडिलीपुत्राच्छांडिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौंचिकीपुत्राभ्यां क्रौंचिकीपुत्रौ वैधृतीपुत्राद्वैधृतीपुत्रः कार्षकेयीपुत्रात्कार्षकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीयपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥

अजीजनत् । भवतीति शेषः । सा तादृशी त्वं पुनश्च वीरवती भव । या त्वमस्मान्वीरवतोकरत् । अकार्षीरित्यभिमंत्रयते इत्यन्वयः।

शिशुं प्रति ज्ञातिभिर्वक्तव्यमाह ॥ तमिति । हे पुत्र त्वं अति पिता पितरमतिक्रांतो भूः । बत हर्षे । पितामहमतिक्रांतः अति पितामहो भूः । श्रिया यशसा ब्रह्मवर्चसेन परमां काष्ठां उन्नतिं प्रापदिति तमेतं शिशुं प्रति ज्ञातय आहुरित्यर्थः । य एवं

याज्ञवल्क्याद्याज्ञवल्क्यउद्दालकादुद्दालकोऽरुणादरुणउपवेशेरुपवेशिःकुश्रेःकुश्रिर्वाजस्रवसोवा जस्रवाजिह्वावतोबाध्योगाज्जिह्वावान्बाध्योगोसिताद्वार्षगणादसितोवार्षगणोहरितात्कश्यपा द्धरितःकश्यपःशिल्पात्कश्यपात्शिल्पःकश्यपःकश्यपात्नैध्रुवेःकश्यपोनैध्रुविर्वाचोवागंभिण्या अंभिण्यादित्यादादित्यानीमानिशुक्लानियजूंषिवाजसनीयेनयाज्ञवल्क्येनाख्यायंते ॥ ३ ॥ समानःसांजीवीपुत्रात्सांजीवीपुत्रोमांडूकायनेर्मांडूकायनिर्मांडव्यान्मांडव्यःकौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणःशांडिल्याच्छांडिल्योवात्स्याद्वात्स्यःकुश्रेःकुश्रिर्य ज्ञवचसोराजस्तंबायनाद्यज्ञवचाराजस्तंबायनस्तुरात्कावषेयात्तुरःकावषेयःप्रजापतेःप्रजापतिःब्र ह्मणोब्रह्मस्वयंभुब्रह्मणेनमः ॥ ४ ॥ पञ्चमंब्राह्मणं ॥ ८ । ५ ॥

पुत्रोत्पादनप्रकारं वेद तस्य विदः जानतः ब्राह्मणस्य पुत्रो नरकात्त्राता पुत्रो जायत इत्यर्थः ॥ ८ ॥ ४ ॥ २८ ॥ इति चतुर्थब्राह्मणं समाप्तं ॥ अथ वंशब्राह्मणं ॥ अध्यायद्वयोक्तविद्याप्रवर्तकपरंपराप्रस्तावपूर्वमाह ॥ अथ वंश इत्यादिना । अत्र

इतिबृहदारण्यकंअष्टमोध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥ इतिश्रीमद्बृहदारण्यकोपनिषत्समाप्ता ॥ श्रीः ॥

पंचम्यंता उपदेष्टारः प्रथमांता उपदेश्याः इति ज्ञेयाः । ब्रह्मा स्वयंभूः स्वतंत्र सर्वज्ञ इति वा ॥ श्रीमत्कण्वोपनिषदो भाष्याद्युक्तार्थ संग्रहः । राघवेंद्रेणयतिना कृतस्सज्जनसंविदे ॥ छ ॥ इति अष्टमाध्यायः संपूर्णः ॥ समाप्तोऽयं ग्रंथः ॥

